## श्रीराजेन्द्रप्रवचनकार्यालय-सिरीज़ में प्रकाशित—

### हिन्दी, गुजराती और गद्यसंस्कृत-ग्रन्थरत्न।

| | | |
|---|---|---|
| १ | कोरटाजी तीर्थ का इतिहास (सचित्र, ऐतिहासिक, रेशमी-जिल्द) | ॥) |
| २ | यतीन्द्रविहारदिग्दर्शन-द्वितीय भाग (सचित्र, ऐतिहासिक, रेशमी-जिल्द) | १॥) |
| ३ | कल्पसूत्रबालावबोध (सचित्र, रेशमी-जिल्द) | ४) |
| ४ | विद्याविनोद (स्तवनों का संग्रह) | भेट |
| ५ | गद्यसंस्कृतभाषात्मकं कयवन्नाचरित्रम् (पत्राकार) | १) |
| ६ | गद्यसंस्कृतभाषात्मकं जगडूशाहचरित्रम् (पत्राकार) | २) |
| ७ | गद्यसंस्कृतभाषात्मिका बृहद्विद्वद्गोष्ठी (पत्राकार) | १) |
| ८ | कल्पसूत्रार्थप्रबोधिनी (अतिसरल संस्कृत-टीका सचित्र, रेशमी-जिल्द) | ३॥) |
| ९ | जिनेन्द्रगुणगानलहरी (रेशमी-जिल्द) | भेट |
| १० | सविधि श्रीसाधुपंचप्रतिक्रमणसूत्राणि (सजिल्द) | भेट |
| ११ | जिनेश्वरों के चोपन-स्थानक | भेट |

### अन्य संस्था के छपे हुए उपयोगी ग्रन्थ—

| | | |
|---|---|---|
| १ | गुणानुरागकुलकम्—मूल, संस्कृतछाया, शब्दार्थ, भावार्थ और विस्तृत हिन्दी विवेचन सहित (रेशमी-जिल्द) | २) |
| २ | कर्मबोधप्रभाकर (मार्गणाओं का विस्तृत स्वरूप, पक्की जिल्द) | २॥) |
| ३ | देववन्दनमाला विधि सहित (पक्की जिल्द) | १) |
| ४ | पंचप्रतिक्रमण गुजराती (सजिल्द) | ॥) |
| ५ | गुणठाणाद्वार (गुणठाणाओं का सरल विवरण) | ।) |
| ६ | चतुर्विंशतिदंडकविचार (छत्तीस द्वारों का विवरण) | ।) |
| ७ | गुरुदेवसेवासुधातरंग (स्तवन, सज्झाय, गुंहलियाँ) | ।–) |

सूचना—पोस्टखर्च आये विना भेट की पुस्तकें किसी को नहीं भेजी जायँगी, अतएव भेटमें मंगानेवालों को नं. ४ के लिये –॥) नं. ९ के लिये =॥), नं. १० के लिये ।=) और नं. ११ के लिये –) प्रति कोपी पोस्टखर्च (टीकीट) भेजना चाहिये।

पोस्ट-पेकिंग खर्च अलग.

श्रीराजेन्द्रप्रवचनकार्यालय।
मु० खुडाला, पोस्ट फालना (मारवाड़)

संस्कृत-प्राकृत-भाषामयानेकग्रन्थकर्तृकस्य सुविहितसूरिशक्रचक्रचूडामणेर्जगज्जलाश्रितचरणा-
रविन्दस्य कलिकालसर्वज्ञकल्पस्याऽऽबालब्रह्मचारिणो जगत्पूज्यगुरुदेवस्य—




दृप्तभ्रान्तविपक्षदन्तिदमने पञ्चाननग्रामणी–राजेन्द्राभिधकोशसंप्रणयनात्सन्दीप्तजैनश्रुत· ।
संघस्योपकृतिप्रयोगकरणे नित्यं कृती तादृशः, कोऽन्य· सूरिपदाङ्कितो विजयराजेन्द्रात्पर पुण्यवान् [2] ॥ १ ॥



# प्रस्तावना.

एतस्मिन्नतिपावने सर्वतः श्रेयस्करे श्रीकल्पसूत्रे परमकारुणिकधर्मावतारिश्रीमद्भगवदर्हतांश्चरित्राणि, स्थविरावल्यः साधुसमाचार्यश्च सम्यगवर्ण्यन्त। अमुनैव हेतुना समस्ताऽऽर्हतानां मान्यतमे पर्वाधिराजे पर्युषणे महामाङ्गल्यकरमेतत्सूत्रं सहर्षमवश्यं वाच्यते। शोश्रूयन्ते चाऽऽबालवृद्धं परां श्रद्धां भक्तिञ्च वहन्तः समुत्साहं दर्शयन्तः सर्वे श्रोतारः। इत्थमेतद्वाचनश्रवणपरिपाटी समायाति बहुकालतः। अद्यश्वोऽपि समायाते पर्युषणे सर्वे जैना अमुमवश्यमेव श्रोतुङ्कामयन्ते। तर्ह्येतदुपयोगिता सकलाऽऽर्हतमान्यता च कियतीति वक्तुं नाऽऽवश्यकम्। अस्ति चैतत्सूत्रं प्राकृतमयं तदुपरि कल्पकिरणावली–कल्पसुबोधिका–कल्पद्रुमकलिका–सन्देहविषौषधिप्रमुखाः कियत्यः संस्कृतटीकाः पूर्वाचार्यैरकारिषत। या एतत्प्रतिसूत्रवाक्यार्थं सुस्पष्टतया बोधयन्ति, परमेतासु सकलासु मूलसूत्रमिश्रणशब्दपाण्डित्याऽऽलङ्कारिकवर्णनमयत्वात्साधारणसंस्कृतवेदिनामेतद्वाचनाऽर्थानुसन्धानयोजनयोरतीवकाठिन्यमापततीति हेतुना मया हि गीर्वाणभाषाप्रियाणां सुमनसामृजुधियां सौकर्याय मनोविनोदाय चैषा 'श्रीकल्पसूत्रार्थप्रबोधिनी' नाम्नी संस्कृतटीका निरमायि। नाऽकारि किलाऽमुष्यां शब्दपाण्डित्यं वाऽर्थकाठिन्यम्, नाऽलेखि कुत्राऽप्यसम्बद्धमनुपयुक्तं वा।

प्रचलितप्राच्यपद्धत्यैव तत्तद्विषयानादावतार्य सर्वेषां वाचनार्थाऽवगमनसौलभ्याय सरलतरगद्यैश्चरित्ररूपेण नव व्याख्यानानि संयोजितानि। वरीवर्त्ति चैतस्मिञ्छ्रीमहावीरविभोश्चरित्रं सविस्तरम्, श्रीपार्श्वनाथनेमिनाथ–ऋषभदेवानाञ्च संक्षिप्तम्, इतरेषामर्हतां मिथोऽवान्तरकालश्च। आयोजि चाऽष्टमव्याख्यानाऽवसाने भगवदजितादिनेमिपर्यन्तानां सामान्यपरिचयोऽपि। तदियमृजुमतिकसाधुसाध्वीप्रमुखजनानां सुखेन तदर्थाऽवगमे साधकतमत्वान्नूनमद्वितीयैव भाविनीति सम्भाव्यते, अत एतां दर्शं दर्शममत्सराः सुधारका कर्त्तुः श्रमं साफल्यं नयन्तुतरामित्येव सादरं सविनयं सर्वानर्थयमान इहत्याऽऽवश्यकसूचनाः संसूच्य सर्वथा विरामयतेऽसौ लेखिनीम्।

(१) प्रगे सप्ततः समारभ्य सार्धैकादशवादनान्तम्, मध्याह्ने चैकतः सार्धचतुर्वादनपर्यन्तमेवैतद्वाचनवेला शास्त्रसम्मता विद्यते। अत एनामकाले जात्वपि नैव वाचयेत्।

(२) अमुष्या वाचने सति समयप्राचुर्ये साकल्येनैव श्रावणीयम् । तदल्पत्वे लघ्वन्तरीयतत्तदधिकाराऽश्रावणेऽपि न क्षतिः ।

(३) प्रत्यब्दं पर्युषणमहापर्वणि माङ्गलिकत्वादेतच्छ्रवणश्रावणविधिर्जागर्त्ति नितराम्, अत एतदारभ्य मध्ये जात्वपि न जह्यात्, तथासत्यनिष्टं स्यात् ।

(४) वाचकेनापि निजाऽऽसनादुच्चासनोपरिष्टादेतन्निधाय मुखाग्रे च मुखवस्त्रिकां ध्रियमाणेनैव श्रावयितव्यमेतत् । एवं श्रावकैः श्राविकाभिश्चापि प्रमादादिराहित्येनाऽनारतं परया सद्भक्त्या बहुमान–पूजन–प्रभावन–यथाशक्तितपःसमाराधनपुरस्सरमव्रहितेन चित्तेनैवाऽऽद्यन्तमेतच्छ्रोतव्यम् ।

(५) "खमियव्वं, खमावियव्वं । उवसमियव्वं, उवसामियव्वं । सुमइसंपुच्छणा बहुलेणं होयव्वं । जो उवसमइ तस्स अत्थि आराहणा, जो न उवसमइ तस्स नत्थि आराहणा । तम्हा अप्पणा चेव उवसमियव्वं ।" इत्यार्हत्या गिरा समुज्झितकलहद्वेषादिकाः शान्त्यैतन्महापर्वकल्पसूत्रयोराराधनं कर्त्तुं कारयितुञ्चाऽर्हन्ति ।

मनःप्रमादात्स्खलतिर्ममाऽभूदज्ञानयोगादिह जातुचिच्चेत् ।
विशोधयन्तस्तदमत्सरत्वाद्, गुणानुमोदं प्रथयन्तु सर्वे ॥ १ ॥

१९९४ विक्रमवत्सरे
कार्त्तिकशुक्लपञ्चम्याम् ।

—श्रीमद्विजयराजेन्द्रसूरिः ।
रतलाम ( मालवा )



# विषयदिग्दर्शनम् ।





## सपीठके प्रथम व्याख्याने—

द्वितीये व्याख्याने—



तृतीयचतुर्थयोर्व्याख्यानयोः—



पञ्चमे व्याख्याने—

## षष्ठे व्याख्याने

सप्तमे व्याख्याने—



अष्टमे व्याख्याने—

नवमे व्याख्याने—

श्रीसौधर्मबृहत्तपोगच्छाधिराज—सुविहितसूरिशक्रचक्रचूडामणि
कलिकालसर्वज्ञकल्पाऽऽबालब्रह्मचारि-परमयोगिराज—

## जगत्पूज्य–गुरुदेव–प्रभु श्रीमद्विजयराजेन्द्रसूरीश्वरजी महाराज ।



जन्म सं. १८८३ भरतपुर ( यू. पी. ) श्रीपूज्यपदवी १९२४ आहोर (मारवाड)
दीक्षा सं. १९०३ उदयपुर ( मेवाड ) क्रियोद्धार सं. १९२५ जावरा (मालवा)
पंन्यासपद १९०९ उदयपुर (मेवाड) निर्वाण सं. १९६३ राजगढ (मालवा)

# टीकाकारस्य जीवनपरिचयः।



यन्नामस्मरणेन दुर्दिनचयोऽरं शाकिनीडाकिनी-
दोषोऽपि प्रलयं प्रयाति विविधा सम्पत्तिरासाद्यते।
लोके च प्रियता मुखे मधुरता कार्ये समुत्साहता,
तं सन्नौमि सहस्रकृत्वरनिशं राजेन्द्रसूरिं प्रभुम्॥ १॥



### १ जननाऽभ्यास-विदेशाटनानि यात्रा च—

यर्हि खल्वेतर्हि संसारे सत्यधर्मस्य हानिर्बोभूयते, जाजायते च मिथ्याप्रपञ्चभूमा, वरीवृध्यन्ते च शिथिलाऽऽचाराः। तर्हि तदसनाय कश्चित्समर्थ आदर्शभूतः पुमानवतरत्यत्र। स चाऽकुतोभयो यथावसरं स्वार्थाऽनपेक्षः शाश्वते सत्यधर्मे लोकानां मनांस्याकृष्याऽऽकृष्य हितं मङ्गलमयं विशुद्धं मार्गं प्रदर्शयतितराम्, येन संसारिणः स्वपरेषां सौलभ्येन सुधारां कर्तुं प्रभवन्ति।

इति प्राकृतिकप्रशस्यनियमानुसृत्याऽमुष्मिन्नविच्छिन्ने श्रीमहावीरजिनशासने यदाऽन्धपरम्पराग्राहिणाम्, शिथिलाऽऽचारप्रीतिमताम्, कपोलकल्पनाऽवलम्बिनां जैनाभासानां मुखकुहरेभ्यो विनिर्गच्छतः स्वार्थिकानसदुपदेशाञ्छ्रुत्वा श्रुत्वा जनता हि सर्वज्ञप्ररूपितं जिनार्चनादिषु श्रद्धामपि हातुं लग्ना, विषयगृध्नूनाञ्च देवदेवीनामुपासनमेव पुमर्थसाधनं मन्वानाऽऽसीत्। तदैव प्रागुक्तविषमवातावरणसमुच्छेत्तुमाजन्मब्रह्मचारी सर्वतन्त्रस्वतन्त्रो जङ्गमयुगप्रधानः प्रविशुद्धचारित्रचूडामणिर्दुष्पाराऽसारसंसारसागरतारकः कुमतनिशानिमीलितभव्यजनकमलवनविबोधनदिवाकरः परमयोगिराजो जगत्पूज्यतमो गुरुदेवः श्रीमद्विजयराजेन्द्रसूरीश्वरस्तत्र भरतपुरे संवत् १८८३ वर्षे पौषसितसप्तम्यां गुरौ वासरे पारखगोत्रावतंसस्योपकेशवंशीयस्य बृहच्छाखीयस्य

---

१ चन्देरीनगर्यामधीश्वरो राष्ट्रकूटवंशजातः खरहत्थाऽभिधानो नरनाथो जिनदत्तसूरेरुपदेशात् सप्तत्युत्तरायामेकादशशततमाब्द्यामार्हतं धर्मं प्रत्यपद्यत। तस्य चाऽम्बदेव-निम्बदेव-भैंसाशाह-आसराजाऽऽख्याश्चत्वारः पुत्रा अजायन्त। भैंसाशाहस्य कुंवरजी-गेलोजी-बुचोजी-पासूजी-शैलहत्थसिंहाऽऽख्याः पञ्च तनया बभूवुः, तेषु तुर्यं पासूजीनामानमाहडनगरीयो राजा चंद्रसेनो रत्नादीनां क्रयणाय निजान्तिके न्ययुनक्। तत्रैकदा श्रीमालनामा

श्रेष्ठिन ऋषभदासस्य सुशीलायाः पत्न्याः केसर्याख्यायाः कुक्षेरुदियाय। तत एकादशेऽहनि महामहं वितन्वानः कुटुम्बवर्गांश्च सहोत्साहेन सम्भोज्य 'रत्नराज' इति तन्नाम धृतवान् पित्रादिवर्गः। अमुष्य ज्यायान् बन्धुर्माणिकचन्द्राऽऽख्यः, कनीयसी भगिनी च प्रेमाऽभिधानाऽऽसीत्। असकौ हि मातापित्रोः सुप्रबन्धेन दशद्वादशाऽब्दिकाऽवस्थ एव व्यापारिकाऽशेषशिक्षणे नैपुण्यमाससाद। नह्येतदेव, सहैव जीवविचार–नवतत्त्व–दण्डक–लघुसंग्रहणी–बृहत्संग्रहणीप्रमुखान् कतिपयग्रन्थानर्थैः सहाऽभ्यस्तवान्। अथ पित्रोरादेशेन सबन्धुरसौ पद्गएवाऽर्बुदाचल–गोडवाडप्रान्तीय-पञ्चतीर्थीं श्रीकेसरियानाथयात्राञ्च व्यधात्। तदनु 'देशाटनं पण्डितमित्रता च' इति नीतिवाक्यं मनःपथमानीय वङ्गदेशमागच्छन् सिंहलद्वीपमानञ्च सः। तत्र च स्वैरं व्यापृत्य समधिगतवानेष धनाधिक्यम्। ततोऽचिरादेव प्रस्थाय सुखेन कलकत्तादिमहापुर्याः श्रियं पश्यन् सह बन्धुना निजसदनमायाञ्चक्रे। तत्र च वार्धक्यमितयोः पित्रोः सेवामेव मुख्यतया विदधानावुभौ निजसदनेऽतिष्ठताम्। ततः क्रमेण तयोः स्वर्यातयोः प्राधान्येन धर्मध्यानादिकमनुतिष्ठन्तावास्तामुभौ। तदवसरे रत्नराजचेतस्युदपद्यत किलेदृशी भावना–यदत्र संसारे परमार्थविचारणायां सर्वं हेयमेव विलालसीतितराम्। यतो भोगेषु रोगस्य, कुलेषु विनाशस्य, लक्ष्मीषु नृपतस्करादेः, शास्त्रेषु वादस्य, मौनत्वे दैन्यस्य, बलेष्वरातेः, सौन्दर्येषु जरसः, गुणेषु दुर्जनस्य, शरीरेषु मृत्योर्भीतिर्जागर्त्तितराम्। अतएव निर्भीकमेकं वैराग्यमेवास्ति, एतद्धि अनन्तपापराशिं विनाश्य शाश्वतं सुखं प्रददाति। उक्तञ्चाऽऽगमे—

जत्थ विसयविराओ, कसाचाओ गुणेसु अणुराओ।
किरियासु अपमाओ, सो धम्मो सिवसुहोवाओ ॥ १ ॥

---

वैदेशिको रत्नपरीक्षक एकं हीरकं नृपतेरधिसभमानिन्ये। तच्च नृपाग्रे निधाय चख्यौ–राजन्! 'एतस्य गुणमूल्ययोर्यथावदवधारणं क्रियताम्?' तदैव राजा सर्वान् रत्नपरीक्षकानाकार्य तददीदृशत्। तदालोकमालोकं ते सकला बाढं प्रशंसितुं लग्नाः। तदवसरे केनापि हेतुना समायातं पासूश्रेष्ठिनं तदप्राक्षीद्राजा। सोऽवदत्–स्वामिन्! अस्त्येतदमूल्यम्, परन्तु य एनं धारयते तस्य स्त्री मेम्रीयते, इत्येको दोषोऽपि महीयानस्ति, संशयश्चेदेनं रत्नपरीक्षकमेव पृष्ट्वा निश्चीयताम्। ततो राज्ञा पृष्टः श्रीमाल उवाच–राजन्! एष पासूश्रेष्ठीव रत्नपरीक्षकोऽन्यः कोऽपि जगत्यां नैवास्तीत्यसंशयं निगदामि, यद्दिनादेतन्मत्पार्श्वे तिष्ठति तद्दिनाद् द्वे स्त्रियौ मेऽम्रियेताम्। अत एतद्विक्रीय तृतीयां चिकीर्षामि। तदाकर्ण्य राजा पासूमाख्यत्–पासूजी! त्वादृशस्त्वमेवासि। अस्तु, तद्दिनादेनं 'पारखजी' शब्देनैवाऽऽह्वातुमलगद्राजा। तदनु सर्वत्र तेनैव नाम्नाऽसौ प्रासिध्यत्। इत्थं पासूश्रेष्ठिनः पारखगोत्रमुदपद्यत।

यत्र धर्मे विषयेभ्यो विरागः, कषायाणाञ्च त्यागः, गुणेष्वनुरागः, क्रियासु सर्वज्ञोदितकर्मस्वप्रमाद-आलस्यराहित्यं जायेत, स एव धर्मः शिवसुखस्योपायो दाता। अतः संसारे मातापितृकुटुम्बादिसम्भूतसुखदुःखादिकं सर्वमताच्त्विकं मोहनीयकर्मजातमेवेति मन्वानः पुमानीन्द्रियमनसोर्जिगीषया वैराग्यभावनमेव समाश्रयीत, वर्वर्ति चेदमेव मानुष्यसाफल्याय सुखसाधनम्।

२ गुरुसमागम-दीक्षाऽऽदान-शास्त्राऽभ्यासाः—

अमुष्मिन् संसारे यर्ह्येव लोकानां भाग्यमुदयते तर्ह्येव साधनमप्यनुकूलमायातीति नियमानुसारेण रत्नराजस्यापि मानसे वैराग्यभावनायां समुत्पन्नायां तपोगच्छनेता श्रीविजयप्रमोदसूरिर्ज्येष्ठगुरुभ्रातृहेमाविजयादिमुनिगणैः सत्रा तत्र भरतपुरे समाजगाम। श्रीसङ्घो महताऽऽडम्बरेण तस्य स्वागतं वितत्य बह्वाग्रहेण तत्रैव तच्चातुर्मासीमप्यचीकरत। एतर्हि सत्समागमे हेमविजयाच्चन्द्रिकां जैनकाव्यानि च कतिपयान्यध्यगीष्ट रत्नराजः। ततोऽसौ मनसि व्यमृशत्-यः पुमानिह सुकृतशतलभ्यं मानुष्यमधिगम्य स्वपरहितकरं नो साधयति तस्य जननमजागलस्तनमिव नैष्फल्यमेवाश्वति, जनुस्तु तस्यैव साफल्यमियर्त्ति येन स्वं त्यागनिकषोपर्यारोप्यते। अतो मयापि ज्ञानस्य सारं विरतिः' इतिसूत्रानुसाराच्छाशनसमाजधर्माणां स्वस्य च कल्याणचिकीर्षुणा त्यागकषोपरि चटितव्यमेव। यदुन्नता उद्यमवन्तो जन्तवः स्वेष्टविमृष्टकृत्यविधाने मनागपि कालविलम्बं नो कुर्वन्तीतिहेतुना रत्नराजः स्वबन्धुवर्गादेरादेशमुरीकृत्य चतुर्भिकैकोनविंशतिशततमाब्दे[२ १९०४] वैशाखशुक्लपञ्चमीभृगौ श्रीमद्विजयप्रमोदसूरिनाम्नो गुरुभ्रातृवर्यश्रीहेमविजयमुनिपुङ्गवपार्श्वे पारमेश्वरीं दीक्षां जग्राह। प्रथयामास च सङ्घानुमतिको गुरुरन्वर्थं 'रत्नविजय' इति तन्नाम।

---

१ एतस्य जनुर्मेदपाटीये डबोकग्रामे गौडब्राह्मणस्य परमानन्दस्य सुशीलाया भार्यायाः पार्वत्याः कुक्षितो वैक्रमे १८९०वर्षे चैत्रिकशुक्लप्रतिपद्यभवत्। पप्रथे च प्रमोदचन्द्राभिधानेन १८६३तमे हायने वैशाखसिततृतीयायां दीक्षितस्याऽमुष्य वैक्रमे १८९३तमे चाऽब्दे ज्येष्ठसितपञ्चम्यां सूरिपदमजायत। विक्रमीये १९३४तमेऽब्दे मध्वसितदर्शे धन्वन्याहोरपुर्यां स्वरगच्छत्। प्रातः सायञ्चैष प्रतिक्रमणप्रतिलेखने यावदन्तं नैयत्येन कुर्वन् यथासमयमेव सकलयत्याचारपरिपालको बभूव।

२ राजेन्द्रसूरीश्वरजीवनप्रभाप्रमुखभाषामयग्रन्थेष्वेतद्दीक्षाऽब्दं१९०३यदुल्लिलेख, तत्तु धन्वदेशीयप्रचलितश्रावणादिमासगणनयाऽवगन्तव्यम्। तत्र हि श्रावणाऽसितप्रतिपदमारभ्यवत्सरारम्भो मन्यते। प्रख्यातिमचण्डूपञ्चाङ्गे तु चैत्रसितपक्षतेरेवाऽब्दगणनममानि। अत एतदनुसारेण दीक्षाब्द १९०४ इत्येव सामञ्जस्यमर्हति।

अथैष गुर्वादिष्टः स्वगुरुसखस्य खरतरगच्छीयस्य मूकीसरस्वतीतिविरुदधारकस्य यतेः सागरचन्द्रस्य पार्श्वे पञ्चवर्षाणि न्युष्य व्याकरणे-सभाष्यसिद्धान्तकौमुदीप्रमुखान्, न्याये-सिद्धान्तमुक्तावली-गौतमसूत्र-रत्नकरावतारिकाप्रमुखान्, काव्ये-रघुवंशादिमहाकाव्यानि, कोशे-चाऽमराभिधानचिन्तामणिप्रभृतीन्, अलङ्कारे-कुवलयानन्दसाहित्यदर्पणकाव्यकल्पलताप्रमुखान्, ज्योतिषे-नैमित्तिकफलग्रन्थाननेकानधीत्य तपोगच्छाचार्यश्रीपूज्यदेवेन्द्रसूरेश्चाऽऽगमानशेषानध्यैष्ट। अमुष्य योग्यतां प्रागल्भ्यञ्चाऽऽलोक्य श्रीदेवेन्द्रसूरिर्वैक्रमे [१९०९] नवाँऽधिकैकोनविंशतिशततमेऽब्दे वैशाखसिततृतीयायामुदयपुरनगरे हेमविजयेन बृहद्दीक्षां पंन्यासपदं चाऽस्मै महामहेन दापयाञ्चक्रे।

३ धरणेन्द्रसूरेर्विद्याभ्यासस्तेन साकमैलयेविषये विवादश्च—

स्वान्तसमये च श्रीपूज्यदेवेन्द्रसूरिरेनमेवमुवाच-वत्स रत्नविजय! यद्यप्यहं निजासने धीरविजयमतिष्ठिपम्, धरणेन्द्रसूरिरित्यभिधानं च तस्याऽकरवम्, परमयमधुनाऽनभिज्ञो वर्त्तते। अतस्त्वया सम्यगात्मधियाऽध्याप्य सुविद्वान् गच्छीयमर्यादाऽभिज्ञश्च विधातव्यः। यदेतद्गच्छीयसमस्तभारस्त्वय्येव न्यस्यते। ततो धरणेन्द्रसूरिमभ्यधात्-त्वया रत्नविजयपंन्यासस्य पार्श्व एवाऽध्येतव्यम्, सदैतच्छिक्षायां वर्त्तितव्यम्। यस्यां मर्यादायां वर्त्तितुमादिशेत्तां मात्यक्रमीः। इत्युभाभ्यां तच्छिक्षणे शिरो धारिते श्रीपूज्यः समाधिनाऽनशनं विधाय राधनपुरे निजदेहमजहात्।

अथ पं०रत्नविजयः प्रथमं गुरुदत्ताश्चमत्कृतिकरीः सकला विद्याः संसाध्य, प्रदर्श्य च जोधपुरबीकानेरनरेशौ महतीमद्भुतां चमत्कृतिमाभ्यां यतिसिद्धिविजयहेतुकाचिरपरिहृतस्वर्णयष्टि-च्छत्र-चामर-यष्टिधर-याप्ययान-महावस्त्रादिसर्वं सदैवैषा पद्धतिरित्थं प्रचलेदेतत्पट्टपरम्परायामग्रेतनः कोऽपि नरपतिर्नान्यथा कुर्यात्, इति तन्नरपतिद्वयमुद्राङ्कितप्रमितिपत्रेण सह धरणेन्द्रसूरये दापयामास। तदनु तदादिषोडशयतिवरानन्यानपि धारणादिगुणयुक्तान् सर्वं पाठयित्वा स्वपरसमयविज्ञानकरोच्च। अथैतत्प्रत्युपचिकीः श्रीपू-

---

१ असकौ सं० १८२६ तमे वर्षे वैशाखसिततृतीयाचन्द्रवासरे मरुदेशीयसोजतनगरे गणधरचोपड़ागोत्रीय-श्रेष्ठिसुन्दरलालस्योपकेशवंशीयस्य गृहपत्न्याः श्रीदेव्याः कुक्षेरजनिष्ट श्रीलालनामा। सं०१८४२वर्षे सहःशुक्लद्वितीयागुरौ मरौ बीकानेरपुरि श्रीदेवेन्द्रसूरिपार्श्वे दीक्षामादाय शास्त्राण्यधीत्य विद्वत्तामधिगम्य सं०१८९३वत्सरे माघशुक्लपञ्चम्यामुदयपुरीयमहाराणादत्तं 'कार्मणसरस्वती' इत्युपाधिमधिगम्य गच्छे च शैथिल्यप्रवेशमुदीक्ष्य सं० १८९२वर्षे निजश्रेयसे क्रियामुद्धार। ततः सं०१९०९ तमे वत्सरे कार्त्तिक्यां पूर्णिमायां मरुधरदेशीये जोधपुर-नगरे स्वर्गमध्यवात्सीत्। अभूच्चैष महाविद्वांस्तपस्विमुख्यः क्रियापात्रं बहुधा काननस्थायी च।

ज्योऽप्येनं पं०रत्नविजयं स्वदफ्तरं समर्प्य 'दफ्तरी' इतिविरुदप्रदानेन शोभयाञ्चकार । ततस्तत्कार्यक्रमो यथावच्चालितुमलगत् । यदसौ दफ्तरी तच्चालने पटीयानासीत् । अतएवोभयोर्मिथः सौहार्दमवर्वृधीत्तमाम् । परमेषा भवितव्यता सर्वतो बलीयस्येव जागर्ति, एनामन्यथाकर्त्तुं कोऽपि पुमाञ्छक्तिमान् नाऽभूत्, नो भविता, नैवाऽधुना वर्वर्ति जगत्यामस्याम् । अत आह—

अवश्यं भाविनो भावा, भवन्ति महतामपि ।
नग्नत्वं नीलकण्ठस्य, महाहिशयनं हरेः ॥ १ ॥

'यद्भावि तद्भवत्येव' इति हेतुना पुंसां यर्हि यादृशी भवितव्यता समेति तर्हि तादृशसंयोगादिलाभेन तथा भवत्येव । यदा च धरणेन्द्रसूरिः पंन्यासप्रमुखपञ्चाशद्यतिमण्डलीमण्डितः सं०१९२३ वर्षे घन्वनि घाणेरावनगरे चतुर्मासीमकरोत्,तदा सङ्घाऽऽग्रहेण श्रीपूज्याऽऽदिष्टः पंन्यासश्रीरत्नविजयो व्याख्याने सटीकं श्रीभगवतीसूत्रं भावनाधिकारे पद्यबद्धं रामचरित्रञ्च मेघगम्भीरया गिरा व्याख्यातुमारेभे । तच्छुश्रूषया प्रत्यहं सादरी–मुडारा–देसूरी–नाडलाई–वाली–बीजापुरादिनगरनिवासिनो भूयांसो भावुका नरनारीगणा आगन्तुमलगन् । अपूर्वां देशनां श्रावं श्रावं ते सर्वे श्रोतारो मोमुद्यमाना मुक्तकण्ठं प्रशशंसुरेनं पंन्यासम् । इत्थममुं प्रशंसन्तीं प्रत्याहिकीं वरीवृध्यमानां श्रोतृजनसंख्यां विलोकमानः प्रशंसां च तत्कृतामसहमानः श्रीपूज्यः कथाप्रसङ्गेन मनोगतां मत्सरतां व्यञ्जन् पंन्यासीयां स्तुतिं रोद्धुं यथाशक्ति प्रायतत । परन्तु पाणिपिधानादिना वासरमणेश्छायेव तद्वचसाऽमुष्य स्तुतिर्नो न्यरुध्यत । अमुया प्रशंसया दन्दह्यमानं चित्तं बिभ्राणः श्रीपूज्यः परमपवित्रे पर्युषणमहापर्वे बहुमूल्यकमैलेयं (इत्रं) क्रीत्वाऽऽनीतं पंन्यासमदर्शयत, जगौ च दृश्यतामदः परीच्यताञ्च साध्वसाध्विति ?, तदोवाच सविमर्शं पंन्यासः–श्रीपूज्य ! तथ्यं जानीहि, यद्भवति गृहमेधिनां शोभाकरं तदवश्यं यतीनां तदधिपतीनाञ्च दूषणकरम् । अत एतद् गर्दभप्रस्रावकल्पमेव मन्तव्यम्, अर्थात् सदपि निषिद्धं वस्तु यतिनामधारिभिरशेषैस्तन्मूत्रादप्यधिकमशुद्धं मन्तव्यमेव । भवान् गच्छाधिपतिर्भूत्वा यदीदृशममेध्यं सेवितुमिच्छति तत्तु न वरम् । यतो हीदृग्गर्हिताऽऽचरणेन गच्छमर्यादा सर्वथोच्छिन्नतामेव व्रजति । इति पंन्यासोक्तिमाकर्ण्य प्रथमोद्भूतप्रभूतरोषपूर्णमनाः सन्नेव स्फोटोपरि स्फोटेनेव पुनरीदृशमर्मभेदिवचसा प्रवृद्धकोपानल-

---

१ यो हि योग्यग्रामादौ चतुरो मासान् स्थातुं यतीनादिशेत्, अपराधिनाममीषामुचितं दण्डयेत, कस्मैचित्पंन्यासोपाध्यायाद्युपाधिप्रदाने प्रमाणपत्रं वितरेत्, श्रीपूज्यस्याऽऽयव्ययकोषांश्च प्रबन्धयेत, स एव 'दफ्तरी' निगद्यते । सम्मान्यते चैष तत्संप्रदाये महामात्यसाम्येन ।

ज्वालाजटालः श्रीपूज्यस्तर्ह्येवमाख्यत्—पंन्यासजी ! यथोपादिशसि मां शक्तिश्चेत्स्वयमपि श्रीपूज्यतामधिगम्य तथाऽऽचरेस्तर्ह्येव सत्यं विद्यामहमपि, अन्यथा वाङ्मात्रेण तथोपदेष्टारस्तु फाल्गुने बालका इव पदे पदे सन्त्येव, तैः किं सिध्येत् ? । ईदृक्षाः परोपदेशनमात्रसारास्तु 'गर्जति शरदि न वर्षति, वर्षति वर्षासु निःस्वनो मेघः ।' 'कहते सो करते नहीं, मुंहके बड़े लवार ।' इत्याद्युक्तेरुदाहरणमेव जायन्ते ।

४ धरणेन्द्रसूरेर्गच्छीयशिक्षा, श्रीपूज्यपदधारणम्, क्रियोद्धारश्च—

अथ गम्भीरप्रकृतिकःपंन्यासरत्नविजयस्तदाकर्ण्य मनसि दध्यौ—यदत्र संसारे प्रायेण सकला अपि जना अधिकारमदनाऽन्धतामापन्ना उत्पथेनैव चलन्तः सर्वं तृणाय मन्यमाना निजमर्यादामपि लुम्पन्त्येव । अत एते योग्यशिक्षां प्रदाय मयाऽवश्यं सुपथि समानेतव्याः । ततो योग्यैर्यतिभिः सत्रा भाद्रसितद्वितीयायामसौ रत्नविजयस्ततः प्रस्थाय क्रमश आहोरनगरे स्वगुरोः श्रीमद्विजयप्रमोदसूरेरभ्यर्णमागात् । अभ्यधाच्च श्रीपूज्येन सार्कं यथाजातमशेषवृत्तान्तम् । गुरुरपि योग्याऽयोग्यसमयं विमृश्य श्रीसंघाऽऽख्यमहामहेन वैक्रमे १९२४ तमेऽब्दे वैशाखसितपञ्चमीबुधवासरे पंन्यासरत्नविजयस्य निजपरम्पराऽऽगतसूरिमन्त्रं प्रदाय 'श्रीविजयराजेन्द्रसूरिः' इत्याख्यां दत्त्वा श्रीपूज्यपदं ददिवान् । तत्रैव ठकुर श्रीयशवन्तसिंहो श्रीपूज्यायाऽस्मै स्वर्णयष्टि-चामर-छत्र-याप्ययान-सूर्यमुखी-चन्द्रमुखी (किरणीया)-महावस्त्र (दुशाला) प्रमुखमार्पिपच्च । अथाऽसौ श्रीपूज्यश्रीमद्विजयराजेन्द्रसूरीश्वरः सुयोग्ययतिमण्डलपरिवृतो गुर्वाज्ञया ततश्चलित्वाऽधिमार्गसम्प्राप्तनगरग्रामादौ श्रीसङ्घैर्वन्द्यमानः क्रमेण मेदपाटीय-शम्भुगढमागतवान् । तत्र फतहसागरनामायतिवर्यस्तत्रत्येन श्रीसङ्घेन पट्टमहामहं कारयित्वोदयपुरमहाराजस्य कार्यकर्त्रा श्रीपूज्योचितस्वर्णयष्ट्यादिसकलोपस्करमस्मा उपहारितवान् । तदनन्तरं ततः प्रस्थितोऽसकौ प्रतिग्रामे नगरे च भावुकैः 'खमासमणा' कारयंस्तत्कृतपूजोपहरणादिकमाददानो जावरासङ्घविहिताऽत्यन्ताग्रहेण मालवदेशीयं जावरानगरमागत्य १९२४ वर्षे चातुर्मासमकार्षीदेषः । व्याख्याने श्री

---

१ अयं हि विक्रमीये १८९२ वर्षे तपस्यशुक्लनवम्यां चांपावतकुलविभूषणठक्कुर-श्रीशक्तिदानसिंहस्य गेतापुरोद्भूतहाडीजीसमाख्यायाठक्कुराण्याः कुक्षेरुदपद्यत । विक्रमीये १८९६ वर्षे चतुर्वर्षीयानेव सहःकृष्णाऽपरदर्शतिथ्यां भृगुवासरे पितुरासनमध्यास्त । अभूच्चैतस्य लालसिंहः सूनुः, पुत्री च रतनकुंवरसमाख्या । आहोरीयस्थानञ्च योधपुरराज्यान्तर्गतसमस्तसरायतसरदारगोष्ठ्यामेकमस्ति । योधपुरराज्यतः प्रजावर्गीयनिग्रहानुग्रह (फोजदारी-दीवानी) करणमप्ययाश्चक्रे किलैषः । इत्थमत्र महीयसीं प्रतिष्ठामधिगम्य वि० १९२६ वर्षे माघवसितद्वितीयायां स्वरगात् ।

भगवतीसूत्रं सटीकं भावनाधिकारे पद्यात्मकं पाण्डवचरित्रञ्च वाचितुं लग्नः। तत्र जवाखी–मीठालालप्रमुखानां श्राद्धानां मुखैरेतत्प्रशंसामुच्चैस्तरामाकर्ण्यैकदा तत्रत्यो यवनराज–नवाव 'गोस्तमहम्मदखां' एनं श्रीपूज्यमेकम्प्रश्नं प्रच्छयाञ्चकार–' महाराज ! आर्हतं धर्ममुररीकृतवतो मम हस्तेन दत्तं खाद्यपेयादिकं भोक्तुं त्वमर्हसि न वा ?' श्रीपूज्याचार्यैरुदतारि–परमार्थदृशा सर्वेष्वात्मतत्त्वमेकमेव पश्यामः, ये खल्वज्ञानिनस्त एव संसारदशायां पौद्गलिकभेदेन जीवेषु भिन्नतां जानन्ति। अतोऽहं जातित्वमनपेक्षमाणः सर्वैरप्यार्हतं धर्मं जुषमाणैर्भ्रातुरप्यधिकां मैत्रीमेव भावयामि। व्यवहारदृशा तु चेदेतेऽस्पृश्यजातीया न भवेयुस्तर्हि तद्धस्तप्रदत्तभक्ष्यपेयाऽशनपानयोरपि कामपि बाधां नाऽवलोके।' इत्थं निष्पक्षपातमुत्तरं श्रुत्वा यवनाधीशः प्रासदत्तमाम्, उपाहरच्चाऽस्मै स्वर्णयष्ट्यादिकां सकलां श्रीपूज्यां सामग्रीम्।

इत्थमाद्याऽब्दे प्रतिस्थाने राजभिर्महाराजैः सङ्घैश्च महतीं सत्कृतिमसावलभत, तां दर्शं दर्शं श्रावं श्रावं च धरणेन्द्रसूरिर्गताऽहङ्कारो दध्यौ–चेदधुनाऽमुना राजेन्द्रसूरिणा सार्धं नम्रीभूय मैत्रीं न कुर्यां तर्ह्यायतौ महती क्षतिर्मे भविष्यत्यतो मयकाऽधुना येन केनोपायेन सैव कर्तव्या। इतोऽन्या मे श्रेयस्करी गतिर्नास्ति, इति सुचिरं विमृश्य यतिसिद्धकुशल–मोतीविजयौ स्वहस्तलिखितं पत्रं प्रदाय मुखेन च सम्बोध्य जावरासङ्घपार्श्वे प्रैषीद्धरणेन्द्रसूरिः। तत्र च तत्पत्रं वाचयित्वा कियन्तोऽग्रेसरास्ताभ्यां सहैव श्रीसूरेः पार्श्वमित्वा, विधाय च वन्दनां समासत। तदोवाच सिद्धकुशलः—'स्वामिन् ! महीयानसि, गच्छोन्नत्यवनत्योश्चिन्तापि त्वय्येव गुरुणा न्यासि, पितेव पुत्रस्य शिष्यस्याप्यपराधं सहित्वा शिक्षयित्वा च सद्गुरुरेनं सत्पथं नाऽऽनयेत किम् ?, आनयेदेव। अतस्त्वादृशां सद्गुरूणां स्वमहिम्नाऽपरां सृष्टिं निर्माय तस्य हानिकरणमयुक्तमेवाऽस्ति। स्वामिन् ! कोऽस्मि कीदृशीञ्च योग्यतामापन्नोऽस्मीत्यपि विचार्यताम्।' इत्युक्तेरवसाने सूरीन्द्रः समाधत्त–महाभाग ! नाऽहं तेन सार्धं कमपि विरोधं चिकीर्षामि, परन्तु स ते श्रीपूज्यो गच्छमर्यादामत्येति, अतोऽहमेवमकरवम्। यद्यसौ सत्पथेन चलेत्, पालयेच्च स्वगच्छमर्यादां तर्हि सर्वमेतदुपाधिभूतमुज्झित्वा स्वश्रेयसे क्रियामेवोद्धर्त्ताऽस्मि, अत्र मा संशयीथाः। अतस्त्वं याहि, इमां नवसमाचारीं तस्मै दर्शय, तत्सम्मतिञ्च कारयित्वा पुनस्तामत्राऽऽनय। ततस्तौ तामादाय तदन्तिकमागत्य यथाजातवृत्तं निवेद्य, दत्तवन्तौ तत्पत्रिकाम्। श्रीपूज्योऽपि तां वाचयित्वा स्वानुकूलाञ्चावगत्य तत्र च स्व-

---

१ यत्र नवगच्छसमाचारीपत्रे धरणेन्द्रसूरिः स्वहस्तेन सम्मतिं व्यदधात्तचाहोरनगरीये श्रीराजेन्द्रबृहज्जैनागमज्ञानभंडारे वर्वर्ति। तदनुकरणानि पत्राणि तु जावरारतलामराजगढादिनगरस्थेष्वपि तेषु वर्तन्तेऽद्यापि।

हस्ताक्षरं कृत्वा सम्मत्य च तदीयसूरिपदं पुनस्तावेन यतिवरौ तेन सम्मतिपत्रेण सह जावरां गमयाञ्चक्रिवान्। अथाऽऽगतौ तौ तदनुमतीकृतसमाचारीपत्रं श्रीसूरिमदीदृशताम्। तदालोक्य 'अङ्गीकृतं सुकृतिनः परिपालयन्ति' इति नैतिकं वाक्यं साफल्यं नयमानः श्रीमद्विजयराजेन्द्रसूरीश्वरस्तदैव श्रैपूज्यकीं सकलां सामग्रीं तत्रस्थश्रीसुपार्श्वनाथजिनेशमन्दिरे समुपहृत्य पुस्तकसंग्रहञ्चाऽऽहोरनगरीयज्ञानभाण्डागारे दत्त्वा [१९२५] पञ्चविंशत्यधिकैकोनविंशतिशततमाऽब्द्यां शुच्यसितदशम्यां बुधवासरे श्रीसङ्घाऽऽरब्धमहामहे जायमाने शुभे सुस्थिरे च लग्ने क्रियोद्धारं कृतवान्। तत्रैव धानेरानगरीयो यतिर्धनविजयो मेवाडदेशीयभींडरनिवासी सङ्गीतवारिधिर्यतिः प्रमोदरुचिश्चेत्येतावुभावपि श्रीमद्विजयराजेन्द्रसूरिपार्श्वे क्रियोद्धृतिलक्षणां दीक्षामाददाते।

५ स्वमन्तव्यस्थिरीकरणं सत्यवस्तुस्थितिप्रकाशनञ्च—

अथाऽसौ क्रियोद्धृतेः परस्तात्प्रथमां चतुर्मासीं सङ्घाऽऽग्रहेण मालवीये खाचरोदनगरे चक्रिवान्। तत्र च सङ्घविहितमहामहेन श्रीधनविजयमुनेरुपाध्यायोपाधिं वितीर्य,

---

१ 'यस्य गुरुपरम्परास्वेकद्वित्रिपट्टाऽवधिकं किञ्चिदाचारशैथिल्ये प्रवृत्तमपि सर्वथा साधुसमाचारीं नैवोदच्छिदत्, स स्वयमपि क्रियामुद्धर्तुमर्हति। यस्य तु सप्ताऽष्टावधिकगुरुपरम्परा शैथिल्यमुपनीय सर्वथैव क्रियां विलुलोप स साम्भोगिकादिगुरुपार्श्वादेव तामुद्धरेत्।' इति हीरप्रश्नोत्तरादिशास्त्रमर्यादया श्रीमद्विजयराजेन्द्रसूरीश्वरः स्वयमेव क्रियामुदहरत्।

२ अभ्यजायताऽयं किसनगढाभिधमहापुर्यां कङ्कुचोपडागोत्रीयस्य श्रेष्ठिन ऋद्धिकरणस्य भार्याया अचलायाः कुक्षेर्वैक्रमीयषण्णवत्यधिकाऽष्टादशशततमे [१८९६] वत्सरे सहौ मासे शुक्ले पक्षे शशिनि वासरे चतुर्थ्यां तिथ्याम्। ततः प्रह्लादनपुरप्रान्तीयधानेरानगरे १९१७ वर्षीये माधवमासे शुक्ले पक्षे गुरौ च वासरे पं० यतिलक्ष्मीविजयपार्श्वे गृहीतदीक्षः, सं० १९२५ कार्त्तिकसितपञ्चम्यां खाचरोदपुर्यां श्रीमद्विजयराजेन्द्रसूरेरात्तबृहद्दीक्षस्तद्दत्तोपाध्यायपदवीं च सहःशुक्लपञ्चम्यामलब्ध। ततो जावरानगरे सं० १९६५ ज्येष्ठशुक्लैकादश्यां बुधवासरे सौधर्मबृहत्तपोगच्छीयः श्रीसङ्घ आचार्यपदं प्रदाय, श्रीमद्राजेन्द्रसूरेरासनमलङ्कारयामासाऽमुना। मरुदेशीयबागरानगरे च सं० १९७७ नभस्यासितप्रतिपच्चन्द्रवासरे स्वरगादसकौ। यच्चाऽस्य जीवनविषये गुर्जरीयभाषामये 'श्रीमद्धनचन्द्रसूरिजी' नामके पुस्तके लल्लुवल्यमदासेन स्वकपोलकल्पितमेव कियदुदलेखि तद्धेयमेव।

३—असौ सं० १८९८ कार्त्तिकसितपञ्चम्यां मेदपाटीय—भींडरग्रामे शिवदत्तविप्रस्य भार्याया मेनावत्या उदरादजनिष्ट। एतस्य कनीयसी स्वसा रुक्मिणी रघुदत्तो बन्धुश्चाऽऽसीत्। तत्रैव १९१३ वर्षे माघशुक्लपञ्चमीगुरौ पं० श्रीअमररुचियतेः पार्श्वे यतिदीक्षां लात्वा सङ्गीतशास्त्राण्यधीत्य तदभिज्ञतामाप। विक्रमीये १९३८ तमे वर्षे शुच्यसितचतुर्दश्यां मालवदेशीये बांगरोदनगरे स्वरध्युवास।

प्रत्याह्निकव्याख्यानवाचनकृत्यं समर्पयामास । स्वयं जैनाऽऽगमीयपञ्चाङ्गीं बहुश्रुताचार्यप्रणीतग्रन्थाँश्चैकेन मनसा दरीदृश्यमानः सत्तर्कवितर्काभ्यां बहुधा विमृश्यैवं सिद्धान्तितवान् । तथाहि—

१ "'वन्दन'शब्दः स्तुतिं नमस्कृतिञ्च बोधयत्यतएव देवदेवीनां वन्दनमकार्यमेव समेषां श्रमणानाम् । एवमकारणमेभ्यः साहाय्यप्रार्थनमप्ययोग्यमेव, यदहेतुकाऽव्रतिनां देवदेवीनां वन्दनं याचनञ्च न्यषेधि शास्त्रकृद्भिः ।"

२ "चतुर्थस्तुतौ पापोपदेशधनपुत्रादिपौद्गलिकसुखप्रार्थनकारित्वात्सामायिकप्रतिक्रमणादिभावानुष्ठाने हेयैव सा । यतो भावानुष्ठाने तत्करणं दोषकृज्जिनाऽऽदेशभञ्जनकृच्च जायते ।"

३ "जैनागमीयपञ्चाङ्ग्यनुसृत्या स्तुतित्रय्येव प्राचीनाऽनुमीयते, यत एषैव पुरा शुद्धाऽऽचरणत्वात्प्रचलिताऽऽसीत्सर्वत्र । अत इयमेव सर्वैर्विधातव्या । पूजादिकारणविशेषे तु चतुर्थीस्तुतिरप्यागमशास्त्राऽनुदितापि गीतार्थाऽऽचरणया कृता चेन्न हानिकरी सम्भवति ।"

४ "चैत्यवन्दनाऽनन्तरमकारणं शक्रस्तवादिप्रसिद्धपञ्चदण्डक–स्तुतित्रयी–प्रणिधानपाठाश्च यावता सम्पद्येरंस्तावत्कालमेव जिनमन्दिरे स्थेयम् । सति च कारणे ततः परमपि स्थितिः शास्त्रसम्मतैव ।"

५ "शास्त्रमर्यादया प्रथमान्तिमजिनशासनीयसाधुसाध्वीनां यथालब्धं श्वेतं मानोपेतं जीर्णप्रायमल्पमूल्यकमेव वस्त्रं धर्त्तुं युक्तमस्ति, जात्वपि रञ्जितं नैव । यदपि कारणसत्वे कल्कादिपदार्थैर्वस्त्रवर्णं परावर्त्तयितुमाज्ञप्तं तदपीदानीं तादृशकारणाऽसत्त्वाद्वस्त्ररञ्जनं रञ्जितवसनधारणञ्च शास्त्रगच्छमर्यादाभ्यां विरुद्धमेव ।"

६ "प्रतिक्रमणकाले श्रुतदेवी–क्षेत्रदेवी–भुवनदेवीनां कायोत्सर्गस्तुतेर्लघुबृहच्छान्तिपाठस्य च विधानं जैनाऽऽगमीयपञ्चाङ्ग्यां प्राच्याचार्यप्रणीतप्रामाणिकग्रन्थेष्वनुपलब्धमेवाऽतः प्रतिक्रमणे तत्पठनमशास्त्रीयं दोषकृच्चाऽस्ति । किन्तु पाक्षिक–चातुर्मासिकाऽऽब्दिकप्रतिक्रमणानन्तरं दुःखकर्मक्षयहेतुककायोत्सर्गे कृते चाऽऽज्ञार्थं भुवनदेवीक्षेत्रदेव्योः कायोत्सर्गकरणे नास्ति दोषः ।"

७ " सश्रीकाऽश्रीकश्रावकाणां सामायिकदण्डकोच्चारणाऽनन्तरमेव 'ईरियावहि' कर्त्तुं जैनागमेषु व्यधायि। अतः 'तिविहेण साहुणो णमिऊण सामाइयं करेइ करेमि भंते! एवमाइ उच्चारिऊण ईरियावहियाए पडिक्कमइ' इत्याद्यागमवचनादादौ त्रिविधयोगेन गुरुवन्दनं विधाय सामायिकदण्डकमुच्चार्यैव 'ईरियावहि' प्रतिक्रमणं करणीयम्।"

८ "स्वोपकरणस्य भृत्येन श्रावकादिना वोत्थापनम्, गृहस्थेन वस्त्रस्य प्रक्षालनम्। उपाश्रये धर्मशालायां वाऽऽनीतवस्त्रपात्रादिग्रहणम्, चतुर्मास्यां देशान्तरादानाय्य बहुमूल्यककम्बलाऽऽदानम्, पटोपानत्परिधानम्, सौवर्णिकराजतफ्रेमयुक्तोपनय ( चश्मा ) धारणम्, नित्यपिण्डाऽदानम्, एते सकला अपि गर्ह्याऽऽचारत्वान्मुमुक्षुभिः साधुभिः साध्वीभिर्हेया एव।"

९ "आर्हतीः प्रतिमास्तदर्चनविधिश्च सूत्रेषु टीकासु च बहुशः प्रत्यपादि। अतः प्रतिमानामर्हदभेदधिया सभक्तिभावं पूजनादिकमात्मश्रेयस्करम्।"

अथैतस्मिञ्जगति ये पुण्यात्मान उत्पथेन गच्छतः परान् सत्पथमानीय तदुन्नतिं चिकीर्षन्ति प्रथमं तैरेव सत्पथगैरहिंसकैः, सत्यवचनैः सुशीलैर्भाव्यम्। तथाभूतानां मन्तव्यास्तेषु जीवत्स्वेव सुखेन प्रकाशितुमर्हन्ति, भवन्ति च तदनुयायिनः परेऽपि। मन्द्वेवेति मौलिकं सिद्धान्तं लक्ष्यीकृत्य स्वयं तितीर्षुरन्येषां तितारयिषयाऽसौ राजेन्द्रसूरीश्वरस्तथैवाऽऽचरन् देशे देशे प्रतिग्रामेऽप्रतिबद्धं विहरमाणोऽविस्म्यचान् सिद्धान्तानपिप्रथत्। तेन लक्षैकप्रायो नरनारीगणस्तदनुयायी जज्ञे। तत्प्रसङ्गे राजनगर-सूरत-राधनपुरेन्दिरापुर-रतलामप्रमुखाऽनेकनगरेषु पीताम्बरविजयानन्दसूरि-यति बालचन्द्रोपाध्यायप्रभृतीन्, जावरानीमच-निम्बाहेड़ा—जालोरेषु स्थानकवासिसम्प्रदायपूज्यचोथमल-नन्दलाल-तख्तमलप्रमुखान् सुचिरं सञ्जातशास्त्रचर्चायामागमोक्तप्रमाणपाठैरनुत्तरैरनुत्तरीकृत्य विजयमानोऽसौ स्वसिद्धान्तं स्थापयाञ्चक्रे। इत्थं लुप्तप्रायां त्रैस्तुतिकीं सत्तां शाश्वतीमागमोक्तां याथातथ्येन साधुताञ्च समुद्धृत्य निजगच्छीयं शुभाऽऽख्यानं 'श्रीसौधर्मबृहत्तपोगच्छ' इति दधिवान्।

६ प्रतिष्ठाञ्जनशलाका-जीर्णोद्धार-ग्रन्थरचनाः—

एतदीयसुपुण्यगुण्यसदाऽऽदेयदेशनामाहिम्ना कियत्सु लघुगुरुनगरग्रामेष्वनेक-

१ दृशोः शक्तिशैथिल्ये रोगादिप्रतिबन्धके वा धात्वतिरिक्तफ्रेमवदुपनयधारणे न कापि क्षतिः।

जिनालय-सदुपाश्रय-धर्मशाला-विद्याशाला-कन्याशाला-पुस्तकशालाश्च निर्माप्य तदसत्त्वताऽपूरि। एतस्य करकमलेन शतं प्रतिष्ठाः, द्वाविंशतिरञ्जनशलाका अजायन्त। एवं गणनया सार्धसहस्रत्रयलघुगुरुजिनेन्द्रबिम्बाञ्जनशलाकाप्रतिष्ठाऽमुनाऽकारि। तत्राऽऽगतानां सहस्रशः स्त्रीपुंसानां कस्यचिच्छिरोऽपि नैव विव्यथे, एतदेव तदीयां विधिदक्षतामनुमापयतेऽधुनापि। नह्येतदेव, यत्र यत्रैतद्दत्तसुमुहूर्ते प्रतिष्ठा अभूवन्, तत्र सर्वत्र लेशतोऽप्युपद्रवो नाऽभूत्, सर्वथा सदानन्द एव ववृधे धन्वनि जालोरीय-प्राच्यतमस्वर्णगिरितीर्थस्य, दियावटपट्टीय-भाण्डवपुरीयश्रीमहावीरतीर्थस्य, कूणी-पट्टीयकोरण्टतीर्थस्य च समुद्धरणे तदीयमहाऽऽशातनानिराकृतौ च सर्वतः प्राथम्येन स एव सौभाग्यमाप। एवं श्वेताम्बरीयपाणिर्गच्छन्तमातिपावनं बावनगजाऽऽख्यं सुतीर्थमप्यनेकैतिहासिकप्रमाणपत्रप्रदर्शनेनाऽसावेव तत्रे।

"आदर्शभूतात्मनां सतां पुंसां जीवनचरित्रमिव तदुपदेशाः, ओजस्विनो ग्रन्थाश्च लोकानुपकुर्वन्ति। यदद्य परितो भारतवर्षमहिंसाप्रधानधर्मोद्घोषः शोश्रूयते, तत्सर्वं बहुश्रुतप्राच्याऽऽचार्याणां सारग्राहिकृतेरेव महिमा। अतः प्रतिसमयं जनानां बलबुद्धी विलोक्य तद्धिताय दूरदर्शिन आचार्यास्तत्तद्विषयकान् गद्यपद्यनिबद्धसंस्कृतभाषाग्रन्थान् रचयामासुः। येषां पठनपाठनाभ्यामिदानीन्तना लोका बहूपकृता जायन्ते।" इति शिष्टपरिपाटीपरिपालनाय सोऽपि स्वसमयवर्तिजनताहितकृते संस्कृतप्राकृतभाषासङ्गीत-ग्रन्थान् रचयाञ्चकार। तदभिधानानीमानि—

१ श्रीअभिधानराजेन्द्रः ( बृहज्जैनप्राकृत-मागधीविश्वकोशः ), २ पाइयसद्दंबुहि ( प्राकृत-मागधीशब्दार्णवः ), ३ प्राकृतव्याकरणविवृतिः, ४ प्राकृतशब्दरूपावली, ५ सव्वसंगहगाहापगरणं, ६ खर्परतस्करप्रबन्धः, ७ चन्द्रिकाधातुपाठः, ८ शब्दकौमुदी, ९ कन्याणमान्दिर-प्रक्रियाटीका, १० सकलैश्वर्यस्तोत्रं सटीकं, ११ उपदेशरत्नसारः, १२ अक्षयतृतीयाकथा, १३ रजःपर्वणिकथा, १४ दीपमालिकाकथासारः, १५ उत्तमकुमा-रोपन्यासः, १६ उपासकदशाङ्गसूत्र-भाषान्तरं, १७ गच्छाचारपयन्नावृत्ति-भाषान्तरं, १८ श्रीकल्पसूत्र-बालावबोधः, १९ सिद्धान्तसारसागरः (बोलसंग्रहः), २० सिद्धान्त-प्रकाशः, २१ चतुष्ककर्मग्रन्थाक्षरार्थः, २२ स्वरोदयज्ञानयन्त्रावली, २३ त्रैलोक्यदी-पिकायन्त्रावली, २४ द्वाषष्टिमार्गणाविचारः, २५ कमलप्रभाशुद्धरहस्यम्, २६ प्रश्नो-

---

१ अस्य परमपावनस्य तीर्थस्य मर्मस्पृगैतिहासिकवृत्तान्तबुभुत्सुभिः 'यतीन्द्रविहार-दिग्दर्शनस्य प्रथमद्वितीभागौ,' 'कोरटाजी तीर्थ का इतिहास' नामकहिन्दीपुस्तक-ञ्चाऽवलोकनीयानि। यच्च मु० खुडाला, पो० फालना ( मारवाड ) श्रीराजेन्द्रप्रवचन-कार्यालये मिलति।

त्तरपुष्पवाटिका, २७ जिनोपदेशमञ्जरी, २८ तत्त्वविवेकः, २९ आष्टाहिकव्याख्यान-भाषान्तरम्, ३० राजेन्द्रसूर्योदयः, ३१ एक सो आठ बोल का थोकडा, ३२ षद्द्रव्यचर्चा, ३३ गद्यसंस्कृतात्मकं हरिविक्रमचरित्रम्, ३४ सङ्गीत-देववन्दनमाला, ३५ धनसार-चोपाई, ३६ अघटकुमारचोपाई, ३७ मुनिपतिचोपाई, ३८ प्रघ्नूचोपाई, ३९ सिद्धचक्र-पूजा, ४० महावीरपंचकल्याणकपूजा, ४१ चतुर्विंशतिजिनस्तवनम्, ४२ चैत्यवन्दन-चतुर्विंशतिः, ४३ चतुर्विंशतिजिनस्तुतिः, ४४ केसरियानाथविनतिवृद्धस्तवनम्, ४५ कथासंग्रहपञ्चाख्यानसारः। एतदतिरिक्तान्यपि जिनेन्द्रस्तुतिगर्भितस्तवन-चैत्यवन्दन-छन्द-स्तुतियुगलौपदेशिकस्वाध्याया उपलभ्यन्ते ।

लेखनकलायामप्ययमौ सिद्धपाणिरेवाऽऽसीत् । यतः सदैव साधुक्रिया-व्याख्यान-दानाऽतिरिक्तकालेऽपि श्लोकानां पञ्चशतीं लिखन्नासीत् । तद्धस्तलिखिताः स्वक्षराः सटीकत्रिपाठा भगवतीसूत्र-प्रज्ञापनासूत्र-समवायाङ्गसूत्र-प्रश्नव्याकरण-सूत्र-जीवाभिगमसूत्र-कुवलयानन्द-नयचक्र-सारस्वत--चन्द्रिका-पाणि-नीयाष्टाध्यायीप्रमुखग्रन्था अतिशुद्धा आहोरनगरस्थश्रीराजेन्द्रवृहज्जैनागमसंग्रहभा-ण्डागारे विद्यन्ते ।

७ तपस्यासहसूरिमन्त्राऽऽराधनं समाधियोगसाधनञ्च—

[१९२७]माँङ्गीतुङ्गीपर्वतीयाऽतिविषमगुहायामष्टाष्टोपवासं कुर्वन् षाण्मासिकं सूरिमन्त्रा-ऽऽराधनम् तथासत्यपि देहसौकुमार्येऽतिशीतकाले नर्मदातीरेऽतिशीतले निर्वासा एव कायोत्सर्गेण तस्थिवान् । मरौ मोदरा[१९३२]ग्रामस्थचामुण्डादेव्या अतिसघनकाननेऽप्यष्टाष्टो-पोषणं विदधदष्टौ मासान् कायोत्सर्गेण ध्यानम्, [१९३३]जालोरीयस्वर्णगिरेरतिसन्तप्तशिलोपर्या-तापनामकृत । एतदतिदुःसहतपस्तेजसा कियतां सातिशयानां सिद्धिमप्याप । इत्थं प्रति-चातुर्मासमेकान्तरोपवासम्, प्रतिपर्युषणेऽष्टमम्, बृहत्कल्पे षष्ठभक्तम्, प्रतिदीपावल्याम-ष्टमम्, तिसृषु चतुर्मासीषु नैयत्येन षष्ठभक्तम्, प्रतिदशम्यामेकाशनम्, प्रतिपञ्चम्या-श्चतुर्दश्याश्चोपवासमसौ यावज्जीवं चक्राणः । तानवे वाऽन्यस्मिन् प्रतिबन्धे समुपस्थि-तेऽप्यङ्गीकृतमुपर्युक्तनियमं साधुसमाचारीं व्याख्यानवाचनं वा जात्वपि नैवाऽजहात् । किञ्चाऽस्य यर्हि कर्हि समायातो ज्वरस्तर्हि तं निराकर्त्तुं स्वोपकरणं सकलं गृहीत्वा मध्याह्ने चतुष्पञ्चक्रोशान्तं जवेन विहरन्नासीत् । अनयैव प्रतिक्रियया सद्य एव ज्वरं शमयाञ्च-कार, जात्वपि दैशिकं वैदेशिकं वा किमप्यौषधं तदपनोदाय यावज्जीवं नाऽ-घसत् । दिने साधुकृत्याऽशन-व्याख्यानाऽवशिष्टवेलायां शिष्याञ्छास्त्रमध्यापयन्, निशि च सायन्तनप्रतिक्रमणाऽनन्तरं याममात्रं जिज्ञासूनां यथावदुत्तरयंस्तेषामसत्त्वे तात्त्विकचर्चया तत्त्वमेवाऽवबोधयन्नासीत् ।अतःपरं सांस्तारिकविधिना द्वादशैकवादना-ऽवधिकं शयनं विधाय पुनरेकद्विवादने जागरित्वा पद्मासनाऽऽसीन आत्मानमेव दध्यौ

# परमयोगिराज–जगत्पूज्य–जैनाचार्य श्रीमद्विजयराजेन्द्रसूरीश्वरस्य शुभंयुशयलिखितानि ग्रन्थरत्नानि–

| | ग्रंथनामानि, | पत्रसंख्या. | विक्रमाब्द |
|---|---|---|---|
| १ | करणकामधेनुसारणी | १४ | १९०५ |
| २ | गतिष्ठया–सारणी | ९ | १९०५ |
| ३ | विचारसार–प्रकरण | २० | १९०९ |
| ४ | भक्तामरस्तोत्रटीका(पंचपाठ) | ८ | १९१२ |
| ५ | सिंदूरप्रकरसटीक | ३९ | १९१३ |
| ६ | श्रीभयहरस्तोत्रवृत्ति | ९ | १९१३ |
| ७ | सारस्वतव्याकरण(३ वृत्ति) | ३५ | १९१४ |
| ८ | प्रक्रियाकौमुदी(२–३ वृत्ति) | ८७ | १९१५ |
| ९ | प्रक्रियाकौमुदी ( १ वृत्ति) | ६६ | १९१५ |
| १० | ग्रहलाघव | ६ | १९१५ |
| ११ | वाक्यप्रकाश | २ | १९१६ |
| १२ | होलिकाप्रबंध (गद्य) | २ | १९१६ |
| १३ | तर्कसंग्रहफक्किका | १६ | १९१७ |
| १४ | ज्येष्ठस्थित्यादेशपट्टकम् | १ | १९१८ |
| १५ | कल्याणमन्दिरस्तोत्रवृत्ति ( त्रिपाठ ) | ११ | १९१८ |
| १६ | लघुसंघयणी ( मूल ) | २ | १९१८ |
| १७ | श्रीपन्नापनोपाङ्गसूत्रसटीक ( त्रिपाठ ) | ३३५ | १९१९ |
| १८ | श्रीभगवतीसूत्रसटीक ( त्रिपाठ ) | ६६६ | १९२० |
| १९ | रसमञ्जरीकाव्य | १२ | १९२३ |
| २० | कुवलयानन्दकारिका | | १९२३ |
| २१ | सारस्वतव्याकरणसूत्रानुक्रम | ४ | १९२३ |
| २२ | अमरकोश (मूल) | ५६ | १९२६ |
| २३ | महानिशीथसूत्रमूल ( पंचमाध्ययन ) | १३ | १९२७ |
| २४ | ललितविस्तरा | २६ | १९२९ |
| २५ | अष्टाध्यायी | २८ | १९२९ |
| २६ | सारस्वतव्याकरण स्तबुकार्थ (१ वृत्ति) | ६१ | १९३२ |
| २७ | धातुतरङ्ग (पद्य) | २७ | १९३३ |
| २८ | कल्याणमन्दिरस्तोत्रम् | ६ | १९३५ |
| २९ | प्रमाणनयतत्त्वालोकालङ्कार | ३४ | १९३५ |
| ३० | उपदेशमाला (भाषोपदेश) | १५ | १९३६ |
| ३१ | कल्पसूत्र बालावबोध | ५४ | १९४० |
| ३२ | दशाश्रुतस्कन्धसूत्रचूर्णी | ३९ | १९४२ |
| ३३ | बारेव्रत संक्षिप्तटीप | ७ | १९४५ |
| ३४ | उपयोगीचोवीसप्रकरण (बोल) | ३० | १९४६ |
| ३५ | नवपदपूजा | ४ | १९५० |
| ३६ | उपासकदशाङ्गसूत्रभाषान्तर | २२ | १९५० |
| ३७ | उपदेशसार ( गद्य ) | १५ | १९५१ |
| ३८ | जंबूद्वीपप्रज्ञप्तिबीजक | १२ | १९५१ |
| ३९ | हीरप्रश्नोत्तरबीजक | २४५ | १९५२ |
| ४० | पंचसप्ततिशतस्थानक– चतुष्पदी | ३४ | १९५३ |
| ४१ | भक्तामर (सान्वय–टब्बार्थ) | ८ | ० |
| ४२ | नवपदपूजा तथा प्रश्नोत्तर | ३३ | ० |
| ४३ | हैमलघुप्रक्रिया (व्यंजनसंधि) | ५ | ० |
| ४४ | उपधानविधि | २ | ० |
| ४५ | आवश्यकसूत्रावचूरी(टब्बार्थ) | २५ | ० |
| ४६ | भर्तृहरीशतकत्रय | १२ | ० |
| ४७ | बृहत्संग्रहणीसूत्र सचित्र(टब्बार्थ) | १० | ० |
| ४८ | काव्यप्रकाशमूल | ६ | ० |
| ४९ | गच्छाचारपयन्नावृत्तिभाषांतर | १०५ | ० |
| ५० | चन्द्रिकाव्याकरण (२ वृत्ति) | ५३ | ० |
| ५१ | कर्त्तुरीप्सिततमं कर्म | ४ | ० |
| ५२ | सप्ततिशतस्थानयंत्र | ८ | ० |
| ५३ | शंकोद्धारप्रशस्तिव्याख्या | ४ | ० |
| ५४ | वर्णमाला ( पांच कथा ) | १० | १९,१४ |
| ५५ | तेरहपंथीप्रश्नोत्तरविचार | २ | ० |

नैयत्येन सर्वदा । ईदृशसमाधियोगद्रढिम्ना कियतां भाविनां भूतानां च भावानां साक्षात्कारोऽप्यस्य भवितुं लग्नः । यथा—कूकसीनगरस्य दाहः, कडोदवासिनः श्वेताम्बरदाश्रेष्ठिनः सद्मनि चौर्यम्, आहोरनगरे च चतुर्थस्तुतिमतां प्रतिष्ठोत्सवे महोपसर्गभवनम्, सं० १९५६ वर्षीया दुर्भिक्षता । इत्याद्यनेके प्रागेवैतत्सूचितास्तस्मिंस्त्रिकालदर्शितां व्यञ्जन्ति ।

तस्य हि साध्वाचारोऽप्यतीवदुष्कर आसीत् । यच्छीतकालेऽप्येष निरावरण एव प्रतिक्रमणध्यानयोः कर्त्ताऽऽसीत् । निजोपकरणादिकं निजेनैव वहमानो न तु शिष्यवर्गेण, गृहस्थानां तर्हि तदाशैव का स्यात् ?, किञ्च महता जवेन व्रजतस्तस्याऽग्रे युवापि गन्तुं नैव पारयेत, किन्तु झटित्येव परिश्राम्येत् । अमुना सार्धशतद्वयमनुजेषु दीक्षितेषूत्कृष्टतमतदीयाऽतिदुष्करसाधुसमाचारीपरिपालनाऽक्षमत्वाद् बहुषु तेषु शिथिलाचारिदेवोपासिपीताम्बरधारिशिष्यतां नीतेषु कियन्त एव भवभीरवो दशविंशतिसाधवस्तत्सेवायां स्थेमानं भेजिरे ।

८ चीरोलादिषण्णगरीयश्रावकोद्धारः—

मालवदेशे रूनीजाऽऽख्य—धूमयानस्थानात् ( स्टेशनात् ) ऐशान्यां सार्धक्रोशद्वयान्तराले 'चीरोला' नाम्नी ग्रामटिकाऽस्ति । तत्र त्रिशताऽब्द्याः पुरस्तादुपकेशवंशजानां जैनानां पञ्चशतसदनान्यासन् । तेषामेकः श्रावको वैमनस्येन पत्नीमनुक्त्वैव रतलामस्थेन केनचिद्वरेण सह स्वपुत्र्याः सम्बन्धमकरोत् । तमजानाना तत्पत्नी च सीतामऊनगरीयवरेण दत्ताऽधिकमुद्रेण महेभ्यपुत्रेण सत्राऽकार्षीत्तत्सम्बन्धम् । तत उभावपि वरौ सज्जितजन्यौ महताऽऽडम्बरेणैकस्मिन्नेवाऽहनि तामुद्वोढुमायातौ तत्सदने; किन्तु महता प्रपञ्चेन सीतामऊवास्येव तां परिणीय स्वसदनमानीतवान् । तदनन्तरं तदीर्ष्यया रत्नललामपौरा लज्जिताः सहपन्नीयैरशेषैः परामृश्य खरसोदादिषड्ग्राम्यैः सह चीरोलावसतिकाञ्जैनाञ्जातिबाह्यानकार्षुः । पुनर्महता प्रयत्नेन मालवीयप्रतिग्रामनगरादावेवमवधारयामासुश्च—यदेभिः सह कुत्रापि कोऽपि विवाहादिसम्बन्धं सहाशनं वा नैव कुर्यादिति । ततः कियत्कालानन्तरमेकदा खरसोदीयजैनजनमहाप्रेरणया सर्वेषामसीषां जातिबाह्यानां पुनर्जातिमेलनाय मालवमण्डलीयाः सर्वे मुख्या रत्नललामे सङ्गत्य बहुधा परामृश्य लक्षमेकं दण्डं दद्युश्चेच्चीरोलावासिनस्तर्ह्येव जातौ प्रवेष्टुमर्हेयुरिति निरचैषुः । परन्तु तद्दण्डं वण्टयितुं मिथो जायमानं विवादमुदीक्ष्य सर्वे जग्मुरेव । तत एनं विवादं करगतीकृत्य स्थानकवासिपूज्याभ्यामुदयचन्द्रचोथमलाभ्यां बहुधा प्रयत्याऽपि प्रान्ते नैराश्यमेव लेभे । ततो रत्नललामनरेशोऽप्यमुं चिरन्तनं कलहं त्रोटयितुमुद्युक्तो भूत्वा, दलद्वयं सामाजिकीं राजकीयाञ्च शक्तिं दर्शं दर्शं बहुधा परिबोध्यापि साफल्यं नाऽध्यगच्छत् । यर्हि चैष श्रीमद्विजयराजेन्द्रसूरीश्वरः कूकसीनगरीय१९६१चतुर्मास्यन्ते बाग—राजगढ—राणापु-

रादिग्रामेष्वञ्जनशलाकाप्रतिष्ठामहोत्सवं कारयन् मालुकगणं धर्ममुपदिशन् क्रमशो रत्नललामपुरीमागात् । तत्र धर्मदेशनाकाले ते चीरोलादिग्रामवासिनः श्रावका आत्मकथां दुःखमयीमेनं सकरुणं श्रावयामासुः—" स्वामिन् ! वर्षाणां शतत्रयी व्यत्यैत्, अन्यायकर्त्तारोऽपि सर्वे गताः, परन्तु वैवाहिकादिकसम्बन्धाऽवरोधे वयमिदानीं महतीमगदनीयां दशां नीताः स्मः, अद्यावधि महता कष्टेन जातिं धर्मञ्चाऽरक्षाम । परमतःपरं तथासत्युभयतो भ्रष्टा एव भविष्यामः । अथैकदा सर्वे मिलित्वा नो लक्षं दण्डयितुं निरधारयन्त, परं मतभेदात्तदपि मुधैव बभूव । स्वसम्पनेकधा जातीयाः प्रार्थिताः, इतरेऽपि कियन्तो महान्त एतस्मिन् प्रायतन्त, परं कोऽपि सफलमनोरथो नाऽभूत् । अतएव निरुपाया अशरणा महाकष्टं सहमाना भवन्तमेव शरणं पश्यामः । त्वामन्तरेण को वाऽपरो महाकष्टसागरादस्मान्नः समुद्धर्त्ता स्यात् ? । " इति सकरुणां तदुक्तिमाकर्ण्य तानुवाच—यूयं धीरा भवत, अहमितो विहृत्य खाचरोदं गन्तास्मि, तत्र युष्माभिरागन्तव्यम् । ततस्तेषु गतेषु रतलामवासिश्रावकान् प्रच्छं प्रच्छं तत्स्वरूपं विदित्वा तदैव विहृत्य खाचरोदमाजगाम सः । तत्सिसाधयिषया तत्रैकां जातीयकार्यकारिणीं सभां संस्थापितवान्। तद्द्वारा रतलाम–जावरा–बड़नगर–खाचरोदोज्जयिनीतिग्रामपञ्चकवासिश्रावकाननेकसद्युक्तिं प्रदर्श्य प्रतिबोध्यैकं लेखं तैरलेखयत्—यदमुष्य गुरुदेवस्य श्रीमद्विजयराजेन्द्रसूरेरादेशेन पञ्चग्राम्याः कृतैकमता वयं सर्वे दण्डमन्तरेणैव चीरोलादिपण्णगरनिवासिनस्ताञ्ज्ञातौ समानेतुं निर्धारयामस्तत्र ये श्रावका हस्ताक्षरं न करिष्यन्ति तेऽवश्यमेव दण्डं मोक्ष्यन्ते । ततस्ते सर्वे तत्र पत्रे स्वस्वहस्ताक्षरं कृत्वा तत्प्रान्तीयसमस्तजनानामनुमत्यर्थममुना पत्रेण सहाऽष्टौ चतुरश्रावकान् प्रेषयामासुः । तेऽपि मासान्ते सर्वं सम्पाद्य खाचरोदमागच्छन् । ततस्तेन सूरिणैकस्मिन् दिने रतलामादिग्रामपञ्चके प्रतिगृहं सेटकसेटकप्रमितसितोपलपुटकानि चीरोलादिषड्ग्राम्यैस्तैरवण्टयत। तदनु चीरोलादिषड्ग्राम्या एकस्मिन्नहनि तान् समस्तानेकत्राऽबूभुजत् । खाचरोदीयाः श्रावकाश्च तदैव वैवाहिकं सम्बन्धमपि तैः सह प्रावीवृतन् । ततश्चीरोलादिवासिनोऽप्येकस्मिन्नेव दिने समस्ततत्प्रान्तीयजैनान् खरसोदग्रामे निजव्ययेनाऽनाय्य विविधाऽशनपानैर्यथावदसेविषत। इत्थं त्रिशतवर्षेभ्यो जातिबाह्यास्ते चीरोलादिपण्णगरीया यत्पुनर्जातौ सम्मिमिलुस्तत्तन्माहात्म्याधिक्ये प्रत्यक्षमेव प्रमाणम् । यच्च साधयितुं रतलामनरेशस्थानकवासिपूज्यप्रभृतयो बहुधा प्रयत्यापि नो प्राभवंस्तदनायासेन विनादण्डनमसकौ समपादयत । अमुष्य वचनातिशय–समाधियोग–दुष्करतपोभिः आसीदन्तौ भक्तिमन्तौ च तौ झाबुवाधीशचीरोलाधीशौ प्रत्यहं देवार्चनेन सहैतत्प्रतिबिम्बं दृष्ट्वैव भक्ष्यपेयादि गृह्णाते । तयोश्चामुना नियमेन तद्विश्वासदृढिम्ना च सर्वे मनोरथाः सिध्यन्ति ।

### ६ तदीयचतुर्मासीनां सहाऽब्दैः संख्यानम्—

यत्र यत्र कृतवानसौ चतुर्मासीं तत्र तत्रैतत्सदुपदेशेन मासक्षपण-पक्षक्षपणाऽष्टमादिबहुसंख्यकतपसामेधनमप्यजायत । नानोपधान-जीर्णोद्धार-पाठशाला-कन्याशाला-पुस्तकशाला-धर्मशालोपाश्रय-जिनालयप्रमुखाऽनेकसुकृतकृत्यानि शासनसमुन्नतिकराणि चाऽभूवन् । इत्थमेतद्धर्मदेशनाश्रुत्या कियन्तो भावुकाः सहस्रशो मुद्रा धर्मकृत्ये न्यायन् । बभूवांसश्चानेके विद्वांसः कर्मठाश्च येऽद्यापि कायेन मनसा, वचसा च गच्छं शासनञ्च भजन्ते । नेनीयन्ते चाऽनवरतमुत्पथेन गच्छतो जीवान् सन्मार्गम्, विस्तृण्वन्ति चाऽहिंसामयं शाश्वतं धर्मं सर्वत्र ।

#### यत्यवस्थायां चातुर्मासाः—

| | | |
|---|---|---|
| १९०४ आकोला— | १९११ पाली— | १९१८ सादड़ी— |
| १९०५ इन्दौर— | १९१२ जोधपुर— | १९१९ भीलाड़ा— |
| १९०६ उज्जैन— | १९१३ किसनगढ़— | १९२० रतलाम— |
| १९०७ मन्दसोर— | १९१४ चित्रकूट— | १९२१ अजमेर— |
| १९०८ उदयपुर— | १९१५ सोजत— | १९२२ जालोर— |
| १९०९ नागौर— | १९१६ शम्भुगढ़— | १९२३ घाणेराव— |
| १९१० जैसलमेर— | १९१७ बीकानेर— | १९२४ जावरासु, |

#### क्रियोद्धारानन्तरं चातुर्मास्यः—

| | | |
|---|---|---|
| १९२५ खाचरोद— | १९३८ राजपुर— | १९५१ राजगढ़— |
| १९२६ रतलाम— | १९३९ कूकसी— | १९५२ राजगढ— |
| १९२७ कूकसी— | १९४० राजगढ़— | १९५३ जावरा— |
| १९२८ राजगढ़— | १९४१ अहमदाबाद— | १९५४ रतलाम— |
| १९२९ रतलाम— | १९४२ धोराजी— | १९५५ आहोर— |
| १९३० जावरा— | १९४३ धानेरा— | १९५६ शिवगंज — |
| १९३१ आहोर— | १९४४ थराद— | १९५७ सियाणा— |
| १९३२ आहोर— | १९४५ वीरमगाम— | १९५८ आहोर— |
| १९३३ जालोर— | १९४६ सियाणा— | १९५९ जालोर— |
| १९३४ राजगढ़— | १९४७ गुड़ाबालोतरा— | १९६० सूरत— |
| १९३५ रतलाम— | १९४८ आहोर— | १९६१ कूकसी— |
| १९३६ भीनमाल— | १९४९ निम्बाहेड़ा— | १९६२ खाचरोद— |
| १९३७ शिवगंज— | १९५० खाचरोद— | १९६३ बड़नगरेषु च । |

१० गच्छमर्यादापट्टकनिर्माणम्—

एतर्हि संसारे जातीयं धार्मिकं सामाजिकं च चिरस्थायित्वं वस्तुतस्तदीयमर्यादाऽऽयत्तमेव वर्वर्ति, अत एनां जनान् ज्ञापयितुं तदनुसारिणीं प्रवृत्तिं प्राधान्येन प्रवर्तयितुं च प्राच्या आप्ता आचार्याः प्रतिवेलं बहून् नीतिग्रन्थान् मर्यादापट्टकानि च निरमिमत। अमुमेव शिष्टाचारमभिलक्ष्य श्रीमद्विजयराजेन्द्रसूरीश्वरैः सर्वत्राऽऽत्मगच्छे साम्यतया तत्प्रवृत्तये मालव-मरुधरीयनृगिरा स्वगच्छीयमर्यादापट्टकं व्यधायि। तथाहि—

स्वगच्छीयमर्यादा-पट्टकम्।

" श्रीहुजूर फुरमावे हे के साधु, साध्वी, श्रावक, श्राविकाओंने मर्यादा पालणी तथा क्रिया करणी सो लिखते हैं, इस मुजब पालणी और करणी.

(१) चैत्यवन्दनविधि—चैत्यवन्दन, नमुत्थुणं०, अरिहंतचेइ०, वंदणवत्ति०, अन्नत्थ० १नोकारनो काउस्सग्ग पारी, नमोऽर्ह० थुई१, लोगस्स०, सव्वलो०, वंदण०, अन्नत्थ० १नोकारनो कायोत्सर्ग पारी, थुई२, पुक्खरवरदी०, सुअस्स भग०, वंदण०, अन्नत्थ० १नोकारनो काउस्सग्ग पारी नमोऽर्ह० थुई३, सिद्धाणं बुद्धाणं०, हेठा वेठी नमुत्थुणं०, जावंति०, इच्छामि०, जावं० इच्छा० स्तवन भणुं ? नमोऽर्ह०, उवसग्गादि तवन जय वीयराय संपूर्ण कही, दूजा चैत्यवन्दन न कहणा, लगते ही भगवान् हं इत्यादि चार खमासणा, पछे पडिक्कमणो ठावणो. चैत्यमे पण चैत्यवंदन उत्कृष्ट एसेही जाणना.

(२) सामायिकविधि पूर्वे करो जेसे ही, और जो गुरुवंदन करणा होय तो ईरियावही करने द्वादशावर्त्त करके करणा.

(३) ठावारो पाठ ' इच्छं सव्वसवि ' सव जणा साथे कहणा, न आवे तो सर्व जणा साथे ' मिच्छामि दुक्कडं ' देणो. एसे ही वंदेतु आद में ' सव्वसवि ' तथा अंत में ' वंदामि जिणे चउवीसं ' सर्वजणा साथे करणा.

(४) और सामायिक पडिक्कमण चैत्यवंदनविधि चोपडी में हे ज्युं ही करणा.

(५) पूजादिविशिष्ट कारणे चोथी थुई कहणे में ना नहीं कहणा, नंदी प्रमुखमें भी एसे ही जाणना.

(६) रत्नाधिक विना दूसरे साधुकुं वांदणा देणा नहीं, दोय खमासमण देइ 'इच्छकार' पूछणा. साध्वीने ऊभा ' मत्थएण वंदामि ' कहणा.

(७) रत्नाधिक विना सामेला प्रमुख करणा नहीं, आचार्यसे उतार उपाध्याय का करणा, जय गुरु की ही बोलणा, सबों की बोलणा नहीं.

(८) रस्तासे श्रावकोने साधु साथे नहीं चालणा, मार्ग देखाय देणो. आगे पीछे रहे हुए सामान्य साधु साथ तो जाणा ही नहीं.

(९) जो साधु मर्यादा चूके उस का आदरसन्मान, वंदणादि श्रावकोंने करणा नहीं, करेगा तो आज्ञा बाहिर है, संघको ठबको पावेगा, संसार वधावेगा.

साधु साध्वी की मर्यादा इस मुजब सो लिखते हैं—

(१) साधु साध्वीयोने साथे मार्ग में विचरणो नही, कारण होय तो आचार्यने पूछने बृहद्व्यवहार मर्यादा प्रमाणे विचरे.

(२) साध्वी होय जिण गाम में साधुने जाणा नहीं, कदि गया तो तीन दिन सिवाय रेणो नहीं. दोय माहिला एक दूसरे गाम चल्या जाणा.

(३) साध्वीने एकली साधु उपासरे ऊभी बेठी रेवा देणी नही.

(४) साध्वीरे उपासरे साधु जाय नही, कार्य होय तो बारे ऊभो खंखारो करे पछे द्वारे ऊभो रही दृष्टि दे, जो प्रवर्त्तिनी होय तो तिरकुं जणाय पछे जाय, पांच जणा विना ऊभो रहे नहीं.

(५) साध्वी कने ओघा प्रमुखरो काम करावे तो सर्वसामग्री आप मिलाय देवे, साध्वी का लाया जल से वस्त्रादि धोवावे नहीं.

(६) साध्वी लाया चार आहारमेंलो एक भी आहार साधुने लेणो नहीं.

(७) साध्वीयों मे कोई भणावावाली होय तो साधु भणावे नहीं, प्रवर्त्तिनी तथा साध्वी भणावे ओर प्रवर्त्तिनी तथा दूजी साध्वी कने इतनो बोध न होय तो दृढचित्तवालो साधु साध्व्यां का राग विनारो होय तिण कने भणे. जो प्रवर्त्तिनी कहे भणावो तो चार जणी प्रवर्त्तिनी सहित बेठके भणावे. हास्यवार्त्तादिक करे नही, घणी वार बेसे नहीं.

(८) साध्वी गोचरी लाई प्रवर्त्तिनीने देखावे, साधुने देखावारी जरूर नहीं.

(९) वांदवा आवे जब सब जणी साथे आवे. तीन जणीसुं वारंवार साध्व्यो साधु कने आवे नहीं.

(१०) साधु दोय जणा विना विचरे नहीं, साध्व्यां तीन जण्या विना विचरे नहीं. आचार्य हुकुम से न्यूनाधिक विचरे.

(११) चोमासो आचार्यरा हुकुम विना रहे नहीं, जो दूर होय तो श्रावक कहे जद कहणा हुकुम होगा वहाँ विचरांगा ( रेवांगा ).

(१२) श्राविकाने साधु भणावे नहीं, जो कोई श्राविका जाणपणो पूछती होय तो श्रावक श्राविका सहित पद देणो पण एकलीने उपासरा में ऊभी राखणी नहीं. आलोयण लेवे तो बहुलोक की दृष्टि में बेठके देणी.

(१३) साधु साध्वी आपणी नेश्राइं चेला चेली करणा नहीं, आचार्य प्रवर्त्तिनीरी नेश्राइं करणा.

(१४) वडीदीक्षा, योगविधि आचार्य विना न करणी, आज्ञा दे तो करणी.

(१५) जो कोई साधु साध्वी उलंठ होय आचार्यादिकने असमंजस बोले तो विणने आचार्य प्रवर्त्तिनीरा हुकुम विना गच्छ बाहिर काढणो नहीं.

(१६) कोइ साधु पढ्यो होय तिणने आचार्ये आचार्य उपाध्यायादिक पद दियो नहीं तो कोई साधु साध्वी आचार्यादि पद देने वतलावणा नहीं. पद दियो होय तो कहणो, विना दिये मते न कहणो.

(१७) पूर्वे प्रतिक्रमण चैत्यवंदनादिक समाचारी लिखी हे वा समाचारी कोई साधु, साध्वी, श्रावक, श्राविका कहे तो भी आचार्यने पूछे विना ओछी अधिकी करणा नहीं. करे सो विराधक हे, तर्कवितर्क उसकी मानणा नहीं.

(१८) जो कोई साधु साध्वी संघ में कहे, आचार्य प्रवर्त्तिनी म्हांने भणावे नहीं, एसा कहे उसकुं अविनीत, विषयासक्त हे, कषाई हे, एसा जाणना.

(१९) साधु साध्वीइं म्हारे भणवा पंडित राखो एसो श्रावक कने कहणो नहीं, आचार्यने कहणो अने श्रावके पाठशाला मांडी होय तो वहाँ भणवारो अटके नहीं, साध्वी तो भणे नहीं अने परिणतवयवाली होय तो सर्वजन समक्ष पद लेणो चार साधव्योंने.

(२०) जो कोई साधु साध्वी आचार्यादिक साधु साधव्यांरी निन्दा करे तो उनोंकुं एकान्ते समझावणा, न माने तो वांदणा पूजणा नहीं.

(२१) जिस साधु साध्वी कुं गुरुए गच्छ बाहिर किया वो साधु साध्वी कोई तरेसे अवर्णवाद बोले तो उसका कह्या सत्य नहीं मानणा.

(२२) जो आचार्यादिक तथा प्रवर्त्तिनी मूलगुण में खोट लगावे तथा अपनी मर्यादा प्रमाणे न चाले, समाचारी न पाले, उन आचार्यादिकको श्रद्धावान् साधु, साध्वी, श्रावक, श्राविका मिल समझावना, न माने तो दूर कर दूसरे योग्य आचार्यादिक थापन करना, जो मुलायजा पक्षपात रक्खेगा वो श्रद्धावंत अनन्तसंसारी होगा, गच्छ बिगडने का पाप उस माथे हे.

(२३) अभी के काल में जलसंनिधि शौच्य वास्ते रहता हे, वो जल दोयघडी दिन पेली वापरणा पीछे परठ देणा, पण घणा दिन चढ़े राखणा नहीं. उस जलसे वस्त्रादिक धोवणा नहीं. वो जल शौच्य विना दूसरे काममें न लगाना, लगावे तो उपवास १ दंड का पावेगा.

(२४) साधु साधव्योने आपणे अर्थे पुस्तकादि श्रावक कनेसुं वेचाता लेवावणा नहीं, लिखावणा नहीं, आपणा कर भंडारमें तथा गृहस्थरे घरे मेलणा नहीं. एसेही पात्रादिक न चाहे तो परठ देणा पण गृहस्थ घरे भंडारे न मेलणा, मेलताने श्रावक श्राविका जाण जाय

ने वांदे तो आणा वाहिर. पुस्तक न उपडे तो भंडार में मेलणा आपणी नेश्राई न रखणा, उपकरण १४ माहिला न मेलणा.

(२५) उपकरणरो जो प्रमाण कह्यो हे उस प्रमाण मुजब रखणा पण लंबा चोडा अधिक न रखणा.

इतनी मर्यादा श्रावकलोग जाणते रहणा ओर हेत महोबत छोड, साधुलोग न पाले जिनों को कहते रहणा ओर कोई साधु साध्वी शंका घाले समाचारी का २५ वचनों में तो मानणा नहीं. ये पचवीस वोल सव शास्त्र प्रमाणे हे, कितनेक काल महातम देख कहे हें सो इनोंका सिद्धान्त–पाठ पीछे लिखा जायगा ओर जो समाचारी प्रतिक्रमण आदि में चैत्यवंदन करते वो तथा चैत्य में करते हो वो ऊपर लिखे मुजब करणा संवत् १९९६ का भाद्रवावदि ९ शुक्रवार के प्रभात में शुरु करणा. श्रीवीरप्रभु शासन जयवंता वर्त्तो। शुभं भवतु, कल्याणमस्तु, इति।

## ११ निजान्तेसदामन्तिमशिक्षणं तन्निर्वाणञ्च—

अयं हि बड़नगरीयचरमचतुर्मास्याः[१९६७] पूर्त्तौ मण्डपाचलीययात्राचिकीर्षया साधुमण्डल्या भावुकैः कियद्भिः श्रावकगणैश्च सार्धं ततो व्यहरत। परन्तु कडोदग्राममागतस्याऽस्य सहसैव जवेन श्वासरोग उत्तस्थौ, तञ्च क्रमशो वरीवृध्यमानमालोक्य यात्राऽऽशां विहाय पुना राजगढदिश्येव विजहार। तत्राऽऽगते चाऽनेके सद्वैद्यास्तच्चिकित्सां कर्त्तुमारेभिरे, परन्तु तदुपचारैरनेनागापि तदुपशमो न जातः, प्रत्युत ववृध एव, यतो विधिप्रातिकूल्ये सर्वएवमेव भवति। यदाह—

> नो विद्या न च भैषजं न च पिता नो बान्धवा नो सुताः,
> नाभीष्टा कुलदेवता न जननी स्नेहानुबन्धान्विता।
> नार्थो न स्वजनो न वा परिजनः शारीरिकं नो बलं,
> नो शक्ताः सततं सुराऽसुरवराः सन्धातुमायुः क्षमाः ॥ १ ॥

किञ्चाऽऽगमकृतां महर्षीणामप्यस्ति वाक्यम्—यद् बलदेव–वासुदेव–चक्रवर्त्याहारकशरीरि–गणधर–तीर्थङ्करा एकैकशो बलवत्तरा अपि क्षीणमायुः सन्धातुमलं नैवाऽभूवन्। इतिवस्तुस्थितिं सम्यग् विमृश्यौषधादिसर्वोपचारं तत्याज, योजितवांश्च मनः केवलं परमात्मनि। तदानीं निजान्ते सदामेवमन्त्यशिक्षामदात्—" शिष्याः! सावधानमनसा हृदयसदने किलैतद्धार्यम्, यः खलु प्रतिधर्मं जिज्ञासते, तेनाऽवश्यमेव परेषां धर्ममन्तव्ययोरद्वेषधिया भवितव्यम्। वस्तुतः स्वीयागाधमानसे सर्वं गृहीत्वा पक्षपातराहित्येन विविच्य परीक्ष्य यदुत्कृष्टं श्रेयस्करं भवेत्तदेवाऽऽदेयम्। किञ्च सत्यस्यापि साक्षात्कार एकथैव चैकेन वा विचारेण सतां भवतीतिबुद्धिस्तु सर्वथा भ्रमैव। यतो धीरा अपि नानाविधं विचारं सिद्धान्तं च दर्शं दर्शं कियन्तः कुण्ठितधियो जायन्ते, अतएवाऽनेकधा भूयो भूयो विचार्य वस्तुसत्यत्वं साक्षात्क्रियते। यत एकस्मिन्नपि वस्तुनि

---

१ एतच्च तदीयशुभंयुशयलिखितपत्रतो यथास्थितमेवाऽत्रापि न्यासि।

सत्यत्वं बहुधा व्यज्यते, अस्त्येतत्सर्वानुभवसिद्धम् । यथैकमेव गिरिं प्राच्या यादृशं पश्यन्ति तादृशं प्रतीच्या न प्रेक्षन्ते । वस्तुगत्या गिरौ भिन्नत्वं नैवाऽस्ति, तथापि दर्शकीयदेशभेदेन भिन्नत्वमवगम्यते । तथा वस्तुस्वरूपं सत्यमेकमेव परन्तु जीवानां प्रकृतेरनेकत्वात्तद्भेदेन नानात्वमपि भाति । अतएव तदवलोकनेन संशयत्वं व्याकुलत्वं वा नाऽधिगन्तव्यम् । " एतं सिद्धान्तं लक्ष्यीकृत्य स्वकीयं वास्तविकं मन्तव्यं प्रचारयितुं सदैव कटिबद्धैर्भाव्यम् । आचरणीयाश्च प्रतिसंयमक्रिया भावशुद्ध्यैव । यदुक्तं भाषया—

" बिना भावके बाह्यक्रिया से धर्म नहीं बन आता है,
रक्खो सदा ध्यानमें इसको यह आगम बतलाता है ।
भाव बिना जो व्रतनियमादि करके ढोंग बनाता है,
आत्मपतित होकर वह मानव ठग दंभी कहलाता है ॥

आस्तामेतत्, मभैतद्विनाशिदेहे मनागपि विश्वासो नास्ति । अतो भवद्भिः साधुसमाचारीपरिपालने सुदृढैर्भवितव्यम् । कथमपि सुकृतशतैरप्यलभ्यमतिदुरापमिदं चारित्ररत्नमधिगम्य मुधैव मा गमयत । यथैतत्साफल्यं व्रजेत्तथैव यतितव्यम् । शासनगच्छयोरवने च सदैव कटिबद्धैः सोद्यमैश्च भवितव्यम् । यत उभयत्र लोके स एव मार्गः श्रेयानस्ति भवाब्धि तितरीषूणाम् । इत्थमादिश्य यावदन्तं ' अर्हन् अर्हन् ' इति व्याहरंस्तत्रैव राजगढनगरे सं० १९६३ तमेऽब्दे, पौषसितसप्तम्यां भृगुवासरे सुसमाधिना निर्वाणं गतवानयम् । तदनु सशोका भावुकाः श्रावका महताडम्बरेण राजकीयबेण्डवादादिकं वादयन्तो महोज्ज्वलविमानेन तच्छवं वहन्तो मोहनखेडाऽऽरव्ये तीर्थे समानीय पवित्रभूमौ विधिवदग्निना संश्चक्रुः । ततस्तच्चितोपरि मार्बुलपाषाणैः समाधिमन्दिरं निर्माप्य तस्यानुरूपम्प्रतिबिम्बं प्रतिष्ठाञ्जनशलाकया महामहं वितत्याऽतिष्ठिपन् । अस्त्येतदतिपावनम्, लगति चाऽत्राऽऽगतानां जनानां मानसेषु शान्तिवैराग्यरसापगा स्वतः प्रवोढुम्, प्रत्यब्दं कार्त्तिक्यां चैत्र्यां पूर्णिमायां पौषसितसप्तम्यां चाऽत्र दूरान्तिकपौरजनसमाजो यात्रार्थं द्विद्विसहस्रमुपतिष्ठते, लालभ्यते चाऽतीवशान्तिम् ।

कुलकम्—

श्रीसौधर्मबृहत्तपो—गच्छप्रभावशालिनः ।
श्रीमद्राजेन्द्रसूरीश—संचितं जीवनं हृदः ॥ १ ॥
तदन्तेसदुपाध्याय—यतीन्द्रविजयाऽभिधः ।
निध्यङ्गनन्दभूवर्षे, स्वपरेषां हितासये ॥ २ ॥
तैषे शुक्लदले भौमे, सप्तम्यामकरोन्मुदा ।
वाचकानां तदेतद्धि, भूयादिष्टप्रदायकम् ॥ ३ ॥

संस्कृत–प्राकृतभाषामय अनेक जैन–ग्रन्थरत्नोना संशोधक अने प्रकाशक
तथा हिन्दी साहित्यना सारा सुलेखक
व्याख्यानवाचस्पत्युपाध्याय—



**मुनिवर्य श्री यतीन्द्रविजयजी महाराज।**

| जन्म १९४० | लघुदीक्षा १९५४ | बृहद्दीक्षा १९५५ | उ० प० १९८० |
|---|---|---|---|
| धवलपुर | खाचरोद | आहोर | जावरा |
| ( बुंदेलखंड ) | ( मालवा ) | ( मारवाड ) | ( मालवा ) |

आनंद प्री. प्रेस—भावनगर.

णमो समणस्स भगवओ महावीरस्स ।

# श्रीकल्पसूत्रार्थप्रबोधिनी ।

चरमजिनेशं नत्वा, क्रियते कल्पसूत्रार्थप्रबोधिनी ।
टीका ह्येषा सरला, ऋजुमतिमावहतामुपकृत्यै ॥ १ ॥

## पीठिकासहितं प्रथमं व्याख्यानम् ।

१ श्रीकल्पसूत्रस्य वाचनविधिः—

वरीवृत्यते चाऽधुना महीयसि श्रीपर्युषणाभिधे पर्वराजेऽमुष्य कल्पसूत्रस्य श्रवणश्रावणप्रचारो भूयान् । यत्र पत्तनादौ मुनिपुङ्गवश्चारित्र्यरत्नविभूषितश्चतुर्मासीमवतिष्ठेत, तत्रत्याः सकला अपि श्रावका एकत्रीभूय मुनेरभ्याशमागत्य तत्पुस्तकं सादरमभ्यर्थ्य भाद्रकृष्णचतुर्दश्यां सायङ्काले समानीय च कस्यचिदेकस्य श्रावकस्य सुसज्जिते सदने स्थापयेयुः । तत्र च रात्रौ सर्वैर्गीतवादित्रादिमहोत्सवं विदधानैर्जागरितव्यम् । तदनु अमावास्यायाः प्रभातसमये श्रावकाः श्राविकाश्च मिलित्वा कञ्चिदविवाहितं बालमहते वाससी परिधाप्य गजरथाश्वादिसज्जितवाहनोपरि समारोप्य स्थाल्यामेकस्यां तत्पुस्तकं संन्यस्य, तांश्च तद्बालककरे निधाय, यथाशक्ति लोकेभ्यः श्रीफलादिप्रभावनां ददाना नृत्यगीतादिकं कुर्वाणा उपाश्रये समानीय श्रीगुरोः करकमले समर्पयेयुः । ततस्तैरर्चितं तद् गुरुर्वाचयेत्, श्रीसङ्घश्च सादरमेकमनाः शृणुयात् । अथवा मुनेरसद्भावे यस्य गृहे पुस्तकमेतद् भवेत्तत एव श्रावकादभ्यर्थ्य सद्भावधारिते कस्यचिच्छ्रावकस्यौकसि नीत्वा

रात्रौ जागरणादिमहामहं विधाय प्रभाते च प्रागुक्तविधिना सङ्घीभूतः श्रीसङ्घो महोत्सवं वितन्वानः पौषधशालायामुपाश्रये वा प्रत्याहिक-सामायिकोपयोगिपवित्रे नियतीकृते तोरणबन्धनादिना सुशोभिते सदने समानीय श्रद्धया परया भक्त्या सकलामाशातनां यत्नतः परिहरन्तः कस्यचित्सुशीलस्य विनयिनः प्राज्ञस्य श्रावकस्य पाणौ किलैतत्पुस्तकं निधाय दत्तमनसः सर्वे तन्मुखाच्छृणुयुः, श्रवणकाले च निद्राप्रमाद-विकत्थनादिकं त्यक्तव्यम् । संस्कृतटीकामयमेतत्कल्पसूत्रं वाचयितुं कृतयोगानुष्ठान एव मुनिरर्हति नेतरः, श्रावकोऽप्येकाशनादितपोविधाता नियमतः सामायिकाद्यनुष्ठाता कृतोपधानः सन् बालबोधभाषामयमेवैत-त्कल्पसूत्रं वाचयितुमर्हति । असत्याखिलनियमसाधने केवलं सचित्ता-हारादिसावद्यकर्ममुक्तोऽप्येतच्छ्रावयितुं शक्नोति वा ।

२ अथ दशधा साध्वाचारः—

श्रीगुरुवरस्याऽऽदेशेन यस्मिन् क्षेत्रे चतुर्मास्यां साधुस्तिष्ठेत्, तस्मिन् क्षेत्रे नभस्ये मासि पारम्पर्यादायाते पर्युषणसुपर्वणि माङ्गल्याय पञ्चाहं यावत्कल्पसूत्रमेतच्छ्रावयेत् साधुः । अत्र कल्पशब्देन साध्वाचा-रस्तं सूत्रयति सूचयतीति व्युत्पत्त्या साध्वाचारपरः कल्पः । स च साधूनां दशधा वर्त्तते । तथाहि—

आचेलुक्कुद्देसिय–सिज्जायर–रायपिंड–किइकम्मे ।
वय–जिट्ठ–पडिक्कमणे, मासं–पज्जोसणा–कप्पे ॥ १ ॥

आचैलक्यम्—नास्ति चैलं वसनं यस्य सोऽचैलकस्तस्य भाव आचैलक्यम्–वस्त्ररहितत्वम् । इदमत्र तात्पर्यम्–नह्येतावता निर्वसनै-र्भाव्यम् । किन्तु, श्रीऋषभवीरजिनशासने तस्थुषामिदानीन्तनानां श्रमणानां श्रमणीनाञ्च श्वेतं मानोपेतं जीर्णप्रायं तद्धर्त्तव्यमेवं ।

---

१ गाले खलु श्रीवीरानुयायिनां श्रमणानां श्रमणीनाञ्च यथा पात्ररञ्जनमनुशास्ति, तथा वस्त्ररञ्जनं कुत्रापि नानुशशास । अतएव वस्त्ररञ्जनं निषिद्धमेव ।

तन्मानञ्चेत्थमभ्यधायि—कटिदेशमारभ्य जानुपर्यन्तमावरणकारि सार्द्ध-त्रिहस्तप्रमाणं चोलपट्टम्, सार्धचतुर्हस्तमानमुत्तरीयवस्त्रञ्च धार्यम्, तथा स्वीयषोडशाङ्गुलप्रमाणा मुखवस्त्रिका धर्त्तव्या। एवं शरीरार्धमुद्घाटितमर्धञ्चाऽऽवृतं यथा भवेत्तथा साधुभिः श्वेतं मानोपेतं जीर्णप्रायं वसनं धरणीयमेव। इत्थं येन मुनिना वसनं ध्रियते सोऽप्यचैल एव निगद्यते। एतच्च दृष्टान्तेनापि द्रढयन्नाह—कश्चित्परिहितवासा अपि तन्तुवायं ब्रूते—भोः! तूर्णं धौतवस्त्रं निर्माय देहि यदहमधुना निर्वासा अस्मि। अथवा कश्चिदेकः पुमान् धौतमुत्तार्याऽन्यज्जीर्णं तत्परिधाय नदीमुदतरत्। अग्रे नदीं तितरीषुः कोऽपि पान्थस्तमपृच्छत्—भ्रातः! नदीं कथमुत्तेरिथ ?, स प्राह—मया तु निर्वसनीभूय सोत्तीर्णा। अथवा कश्चन पुमान् परिहितवसनोऽपि स्यूतिकारं रजकं वा जल्पति—आशु मे वस्त्रं देहि, यस्मादहमिदानीं नग्नोऽस्मि। इति दृष्टान्तत्रयेण सत्यपि वसने यथा तस्य वस्त्राराहित्यं तथा मुनीनामपि श्वेतमानोपेतजीर्णप्रायवसनधारणेऽपि निर्वसनत्वमभूदेव। मध्यमतीर्थकृतां साधवस्तु चतुराः प्रज्ञावन्तश्च जायन्ते, अतस्ते महार्हं पञ्चवर्णात्मकं वसनं धरन्ति, तन्मानं नाऽपेक्षन्ते, अतस्तेषु सचैलत्वमेव, अनियतश्चाऽचैलत्वम् १।

औद्देशिकः—उद्देशेन यत् क्रियते तदौद्देशिकम्—आधाकर्मिकम्। यस्य साधोः साध्व्या वोद्देशेन खाद्यं पेयं वस्त्रपात्रादि क्रियेत तत्तेनैवाऽग्राह्यम्, इतरसाधुसाध्वीनान्तु तत्कल्प्यमेवेति द्वाविंशतिजिनशासनकालीना परिपाटी। प्रथमान्तिमतीर्थकृच्छासने तु—एकं साधुं साध्वीं वा समुदायमुद्दिश्य गृहमेधिना यदशनपानवस्त्रपात्रभैषज्यादि क्रियते तत्कस्मा अपि साधवे कस्या अपि साध्व्यै वा नैव कल्पते २।

शय्यातरः—उपाश्रयदाता, अथवा यः साधवे साध्व्यै वा स्थातुं वसतिमर्पयति स शय्यातरः कथ्यते। यदि च साधवः साध्व्यश्च सकलां रजनीं जाग्रति क्षणमपि न स्वपन्ति, स्वाध्यायादिनैव रात्रिं

गमयन्ति, प्रगेचान्यत्रैव प्रतिक्रामन्ति, तदा प्रथमोपाश्रयदाता शय्यातरो न भवति । यदि तत्रैव शयीरन्, प्राभातिकप्रतिक्रमणञ्चान्यत्रैव कुर्वीरन्, तदोभावपि शय्यातरौ जज्ञाते । तथा सति तयोरुभयोरप्यशन–पान–खादिम–स्वादिम–वस्त्र–पात्र–कम्बल–रजोहरण–सूची–पिप्पलक–नखलू–कर्णशोधन–रूपं द्वादशविधवस्त्वनादेयमेव सर्वतीर्थकृच्छासनेषु साधुसाध्वीनाम् । परं सत्यपि प्रयोजने तृण–डगल–भस्म मल्लक–पीठफलक–शय्या–संस्तारक–लेपवस्तूनि साधवः सोपधयः शिष्याश्च लातुमर्हन्ति । यदि साधवः शय्यातरपिण्डमाददीरंस्तर्हि आहारादि प्रदानशङ्कया केचिदप्युपाश्रयं नो निर्मिमीरन्, स्थानं वा साधुभ्यो नो ददीरन्, ततश्चाहारादिदौर्लभ्यमपि संभवेत् साधूनाम् । किञ्च पार्श्ववर्त्तिनः शय्यातरस्य सद्मन्येव सरसाहारादिप्राचुर्यलाभे गृहान्तरगमनाऽभावात्साधवोऽलसा अपि भवेयुः, रागातिरेकाद्वा पुनः पुनश्चेद् गच्छेयुः, श्राद्धोऽपि दधिक्षीरादिस्निग्धमेभ्यो ददीत तर्हि तद्गृहं रसगृध्नुः स जातुचिन्नैव जह्यात् । ग्रामान्तरं गता अपि ते झटित्येव मिष्टान्नलोभात्तत्रैव पुनरागच्छेयुः । अपि च मार्गिते वस्त्रादौ तत्कालमेव श्रद्धालवः श्राद्धा वितरेयुश्चेदुपधयोऽपि परिवर्धेरन्, इत्याद्यनेकदोषसम्भवाद् वसतिप्रदातुः सदनादाहारादेरादानं समस्तसाधुसाध्वीनां न्यषेधिषुरेव सकलास्तीर्थकृतः ३ ।

राजपिण्डः—यः खलु सेनानी–पुरोधा–महेभ्याऽमात्य–सार्थवाहलक्षणैः पञ्चभिः सह पृथ्वीं शास्ति, यश्च विधिवदभ्यषिच्यत सोऽयं राजोच्यते । तस्य पिण्डश्चतुर्विधाहारः, वस्त्रं, पात्रं, कम्बलं, रजोहरणमित्यष्टविधः प्रथमचरमजिनपतीयसाधुभ्यः साध्वीभ्यश्च नैव कल्पते । यतो राजद्वारे भूयांसो राजपुरुषाः सन्तोऽसन्तश्च यान्त्यायान्ति च, ये च तेष्वज्ञास्ते साधून् विलोक्याऽपशकुनं मन्यमानास्तान् निन्देयुश्चौरं वा वदेयुः । साधुर्वा तत्र रथतुरगगजादिदिव्यं वाहनं

१ पात्रादिवेधको लोहनयतीक्ष्णमुखकीलकः 'स्यारणी' इतिभाषाप्रसिद्धः । लघुछुरो वा ।

कामिनीं वा रूपलावण्यपरिपूर्णतारुण्यवतीमालोक्य सरागो जायेत, इत्याद्यनेकदोषोद्भावात् । ये च द्वाविंशतिजिनशासने वर्त्तन्ते ते ऋजुप्राज्ञतया राजकीयमदूषितमाहारादिकं लान्त्येव, दोषप्रेक्षायान्तु तेषामपि हेयमेव ४ ।

कृतिकर्म्म—वन्दनलक्षणम् । एतच्च द्विविधम्—एकमभ्युत्थानलक्षणं, द्वितीयञ्च द्वादशावर्त्तरूपम् । सर्वेष्वपि तीर्थकृत्तीर्थेषु सकलैः साधुभिर्यथादीक्षं परस्परं तद्विधीयते । धर्मे हि पुंसामेव प्राधान्यमिति हेतोः साध्वीभिः शतवर्षप्रागदीक्षिताभिरपि तत्कालदीक्षितोऽपि साधुरेव वन्दनीय इति सकलजिनसाधूनां सम्प्रदायो वर्त्तते ५ ।

व्रतानि—प्राणातिपातमृषावादाऽदत्तादानमैथुनपरिग्रहलक्षणानि पञ्चमहाव्रतानि । तत्राऽऽदिमान्तिमतीर्थकृच्छासने ये श्रमणा वर्त्तन्ते तेषां तादृशधीविरहात्पञ्चापि महाव्रतान्येव भवन्ति । ये पुनर्द्वाविंशतिजिनान्तेसदस्ते खलु चत्वार्येव तानि मन्यन्ते । यतस्ते जानन्त्येवम्—यः कामिन्यः परिगृहीतास्ता एवोपभुज्यन्ते, वैपरीत्ये तु न, इति कामिन्योऽपि परिग्रहान्तर्गता एव बभूवुः । अतः परित्यक्ते परिग्रहे स्त्रीणां परित्यागः सुतरामायात एव । एवमादिमान्तिमतीर्थकृतोस्तीर्थे नैशिकाऽशनव्रतं मूलगुणे परिगण्यते, ततश्च रात्रिभोजनत्यागो व्रतत्वेन गण्येत चेत्साधूनां षड्व्रतानि स्युः । द्वाविंशतिजिनतीर्थे श्रमणानान्तु रात्रिभोजनव्रतस्योत्तरगुणरूपतया चत्वार्येव व्रतानि ६ ।

ज्येष्ठः—श्रीऋषभदेवमहावीरस्वामिनोरनुसारिणः साधवो महत्या दीक्षयैव ज्येष्ठत्वेन गणयन्ति, अतएव येन बृहद्दीक्षा प्रागग्राहि सएव ज्येष्ठः, यस्य तु लघुदीक्षा प्रागभूदपि बृहद्दीक्षा पश्चादजायत स पूर्वापेक्षया ज्यायान्भूत्वापि लघुरेव । द्वाविंशतिजिनपतिसाधूनां त्वेषा पद्धतिर्नास्ति, ते खलु व्यावहारिकनैपुण्यशालितया बुद्धेरमान्द्यतया च

द्रुतमेव स्वशास्त्रे परशास्त्रे च निपुणा जायन्ते, अतो दीक्षादिनादेव ज्येष्ठत्वलघुत्वे लभन्ते । अथ पितापुत्रमातादुहितृनृपामात्यश्रेष्ठिवणिगादयः सहैव दीक्षासुररीचक्रुश्चेदमीषामुपस्थापने को विधिः ? उच्यते—यदि पित्राऽऽदयः पुत्रादयश्च युगपदेव षड्जीवनिकायाऽध्ययनेन योगोद्वहनसमर्था जायेरंश्चेदनुक्रमेणैवोपस्थापना । चेदमीषां किञ्चिदेवान्तरं तर्हि कियन्तङ्कालं प्रतीक्ष्यापि पूर्वं पित्रादेरेवोपस्थापना श्रेयसी, नोचेत्पुत्रादेराधिक्यात् पित्रादेर्मनांसि खिद्येरन् । अथ पुत्रादीनां प्राज्ञत्वादिना पित्रादेश्च तद्वैपरीत्येन महदेवान्तरमुपलभ्येत तदा स पित्रादिरेवं प्रतिबोधनीयः—भो महाभाग ! तावकोऽयं पुत्रो ज्ञानवानस्ति, निरतिचारं चारित्रञ्च पालयति, परमितरेभ्यो बहुभ्योऽपि लघीयान् भविष्यति, उपस्थापनाऽभावात् । खल्वमुष्मिञ्ज्येष्ठे तवैव गौरवं प्रथिष्यते । एवं प्रतिबोधितः स बुध्येत तर्हि प्रथमं पुत्रादिरुपस्थापनीयो नान्यथा ७ ।

प्रतिक्रमणम्—आवश्यकानुष्ठेयक्रियाविशेषे रूढिमत् । तच्चातिचारे लग्नेऽलग्ने वा प्रातः सायञ्च पाक्षिकं चातुर्मासिकं सांवत्सरिकञ्च पञ्चधात्मकं प्रथमान्तिमसाधवो नैयत्येन कुर्वन्ति, शेषजिनपतिश्रमणास्तु सत्येव दोषे दैवसिकं नैशिकं वा प्रतिक्रमणमाचरन्ति, न तु पाक्षिक—चातुर्मासिक—वार्षिकाणि ८ ।

मासकल्पः—आदिमचरमतीर्थकृत्साधूनां मासकल्पव्यवस्था नियता । चेदमीषामङ्गेषु रोगा उत्पद्येरन्, विहर्त्तुं वा न शक्नुयुः, भिक्षां वा नो प्राप्नुयुस्तदापि शाखापुर—पाटककोणकादिपरावर्त्तनेनापि तां सत्यापयेयुरेव । चतुर्मासीं विहाय मासादधिकमेकत्र नैव तिष्ठेयुः, नोचेल्लघुत्वादिका महादोषा जायेरन्, न वा लोकानुपकुर्वीरन्, ज्ञानं वा नाऽऽराधयेयुः, नाधिगच्छेयुर्दैशिकं वैदेशिकं वा ज्ञानम् । उक्तञ्च—

" पित्रालये सततवासविधायिनी स्त्री,
तिष्ठन् पुमानपि चिरं श्वशुरस्य गेहे ।
एकत्रसुस्थिरनिवासकरोऽपि साधु-
रेते भवन्ति नियतं बहुदोषपोषाः ॥ "

मध्यमजिनयतीनान्तु मासकल्पमर्यादा नियता नास्ति । यदेते सरला दोषज्ञाः प्रज्ञावन्तश्च जायन्ते, अतएवाऽसति दोषे सम्भवति च लाभे देशोनपूर्वकोटिवर्षपर्यन्तमेकत्रैव क्षेत्रे स्थाने वा तिष्ठन्ति, दोषसम्भावनायान्तु मासमध्येऽपि विहरन्ति ९ ।

पर्युषणाकल्पः—नैयत्येनैकत्रस्थितिः । साचोत्सर्गतः प्रौष्ठपदीयशुक्लपञ्चमीतः कार्त्तिकपूर्णमासीं, वा कालिकाचार्यप्रवर्त्तितचतुर्थ्याः कार्त्तिकशुक्लचतुर्दशीं यावत्सप्ततिदिनप्रमाणा । अस्ति चैषा जिनकल्पिकानामहेतुकी । अपवादतश्चाषाढशुक्लचतुर्दशीतः कार्त्तिकासितचतुर्दशीं यावच्चतुर्मासात्मिका, आद्यन्तोषितमासद्वयेन षाण्मासिकी वा । वर्त्तते चैषा स्थविरकल्पिनामेव । अत्र सालम्बननिरालम्बनगृहिज्ञाताऽज्ञातत्वादिविवरणं ग्रन्थान्तरादवगन्तव्यम् । दशैते कल्पा आदिमान्तिमजिनतैर्थिकानामेव नियताः, द्वाविंशतिजिनतीर्थे तु आचेलक्यौद्देशिकप्रतिक्रमणराजपिण्डमासकल्पपर्युषणेति षडनियताः कल्पाः, शेषास्तु शय्यातर–चतुर्व्रत–पुरुषज्येष्ठ–कृतिकर्मेति चत्वारः कल्पा नियता एव १० ।

२ ऋजुजडत्वादिविभागः—

ननु सर्वे साधवः सदृशा एव सन्ति, साधयितव्योऽपि समेषामेक एव मोक्षो दृश्यते, तर्हि परस्परममीषामाचारभेदः कथमजायत ?, तत्राऽऽह—जीववैचित्र्याद् । एतदेव विवृणोति—

" पुरिमाणं दुव्विसोज्झो, चरिमाणं दुरणुपालओ कप्पो ।
मज्झिमगाणं जिणाणं, सुविसुज्झो सुहणुपालो अ ॥ १ ॥

उज्जुजडा पुरिमा खलु, नडाइमायाउ हुंति नायव्वा ।
वक्कजडा पुण चरिमा, उज्जुपण्णा मज्झिमा भणिआ ॥ २ ॥ ”

श्रीऋषभतीर्थकृतस्तीर्थवासिनः साधवः ऋजवः-सरलाः, जडाः-मतिविकला जायन्ते । अत एते धर्मं सुखेन ज्ञातुं नो शक्नुवन्ति । चरमतीर्थकृच्छासनवर्त्तिनां साधूनान्तु धर्मस्यानुपालनं न सुकरं वक्रजडत्वात् । ये चान्येऽजितादयस्तीर्थकृतस्तदीयतीर्थवासिनस्तु धर्ममवबोद्धुमनुपालयितुञ्च शक्नुवन्त्येव, यस्मादेते ऋजवः प्राज्ञाश्च भवन्ति अतएवाऽपप्रथच्च साधूनां परस्परमाचारभेदः ।

४ ऋजुजडत्वे दृष्टान्तः—

श्रीऋषभतीर्थे कस्यचिदेकस्य सूरेरन्तेवासी स्थण्डिलमगमत् । तदनु चिरादागतमेनं गुरुरप्राक्षीत्—भोः ! इयान् विलम्बः कथमकारि?, सोऽवक्—भगवन् ! बहिर्भूमेः परावर्त्तमानः पथि जायमानामद्भुतां नाटकीं लीलामवलोकितुं तस्थिवान्, अतो मे विलम्बोऽभूत् । इति यथाजातमेव कारणं स जल्पितवान्, सरलाशयत्वात् । तदा गुरुर्न्यगादीत्—वत्स ! पुनरेवं कुत्रापि नाटकादिकौतुकाऽवलोकनाय न स्थातव्यम्, यतः साधूनां तदवलोकने महत्पापं लगति । विनीतत्वात्सोऽपि गुरुणोक्तं तथ्यं पथ्यञ्चेति मत्वा यथावदङ्गीचक्रिवान् । पुनरन्यदा स एव शिष्यो बहिर्भूमितो निवर्त्तमानः क्वचिदेकत्र नृत्यन्तीं नटीं प्रेक्ष्य चिरेण गुर्वन्तिकमागात् । पुनस्तमपृच्छच्चिरादागमनकारणं सूरिः । तदोवाच सः—स्वामिन् ! अद्य भूयान्नरनारीगण एकत्र नट्या चतुरया विहितं नृत्यं पश्यन्नासीत् । अहमपि तदवलोकनार्थमियन्तं कालं तत्राऽतिष्ठम् । तदाऽभ्यधायि गुरुणा—साधो ! पुरैकदा त्वामेतद्विलोकनं न्यषेधिषम्, तर्हि पुनरद्य कथं तदन्वालोकिष्ठाः ?, पुनराचक्शौ शिष्यः—स्वामिन् ! प्राक् त्वं नटनर्त्तनविलोकनं प्रत्यषेधीः, नटीविलोकनन्तु न न्यवारयथाः । तदा मूर्खोऽयमिति मत्वा सूरिरवोचत—अरे ! नटे

निवारिते नटीवारणन्तु जातमेव । यदस्मत्सम्प्रदाये नटादपि नटीनर्त्तनादिविलोकनं साधूनां महापापकरमस्तीति गुरुवाक्यमाकर्ण्य सोऽवक्-भगवन् ! पुरैवं नाऽवेदिषम्, साम्प्रतमेवाऽबोधिषं भवत्कथनात्, पुनरग्रे कदापि तन्न प्रेक्षिष्ये । अत्र ऋजुत्वात्सत्यमवादीत्, मौर्ख्याच्च नटप्रतिषेधान्नटीप्रतिषेधं नो बुबोध ।

२ वक्रजडत्वे दृष्टान्तौ तत्राऽयं प्रथमः—

अन्तिमतीर्थकृत्तीर्थे केचित्साधवो बहिर्भूमिं गतवन्तः, ततः परावृत्ता मार्गे जायमानं नटनर्त्तनं विलोक्य चिरेण स्वस्थानमाजग्मुः । तदा तानपृच्छत्सूरिः—भोः ! इयती वेला वः कथमभूत् ?, तैरूचे—स्वामिन् ! स्थण्डिले सर्वस्यैव कालो लगति, तत्रैवं नः किं परीपृच्छयसे ? इत्थं वक्रत्वात्ते जल्पितवन्तः । पुनः पुनः सूरिणा पृष्टे तेऽजल्पन्—भगवन् ! मार्गे नटीयं नृत्यं विलोकयन्तो वयमियन्तङ्कालं स्थितवन्तः । इति तथ्यां तदुक्तिं श्रुत्वा गुरुः शिशिक्षे—भोः ! साधुभिर्नैव विलोक्यते तत्, सावद्यत्वात्, भवद्भिरद्य कुत्सितं तत्प्रेक्षणमकारि, अतस्तदपनोदाय मिथ्यादुष्कृतमादेयम्, ततस्ते ददुः । पुनरेकदा स्थण्डिलान्निवृत्ताः पथि प्रारब्धं नट्या नर्त्तनं विलोक्य तएव साधवश्चिरादुपाश्रयमागमन् । पुनरेव गुरुणा तत्कारणे पृष्टे च वक्रतयाऽन्यदेव तत्कारणं बभाषिरे, सत्यं नैव जगदुः । अत्याग्रहात्पौनःपुन्येन पृच्छति गुरौ—वयमद्य नटीनर्त्तनदर्शनेन कृतभूरिबिलम्बा अभूमेति सत्यमूचिरे । गुरुरुवाच—भोः ! मयैतत्प्रागेव न्यवारि, तत्कथमद्राक्षुः ?, तदा ते गुरुमब्रुवन्—यद्येवमस्ति, तर्हि प्रथममेव नटविलोकनं निषेधन् नटीमपि कथं तत्र भवान् नो निवारितवान्, अतोऽस्माकं कोऽत्र दोषः ?, इति वक्रत्वाद् गुरुमेवोपालब्धवन्तस्ते । इति प्रथमो दृष्टान्तः ।

द्वितीयो यथा—कस्याञ्चित्पुर्यां निवसतः श्रेष्ठिनः पुत्रो महादुर्मेधा आसीत् ।

मातापितृभ्यां बहुधा शिक्षितोऽपि तदुक्तिं श्रेयसीमपि नैव जग्राह, निर्भीकैवंस्तदग्रे प्रत्युत्तरयन्नेकदा पित्रादिना शिक्षितः—वत्स ! गुरुजनानामग्रत एवं मावादीः । तदनु एकदा पित्रादिवर्गस्तं सदने संस्थाप्य कस्मैचित्कार्याय बहिरगमत्, तदा 'गुरुजनाग्रे न भाषितव्यम्' इति गृहीतशिक्षां संस्मृत्य कपाटं पिधायाऽङ्गणे खट्वोपरि गत्वा शिश्ये । अचिरादेव समायातः पित्रादिपरिजनो बहिस्तिष्ठंश्चिरमाजुहाव, पुनः पुनस्तार-स्वरैराहूतोऽपि स यदा नोवाच तदा क्रुद्धः पिता कुड्यमुल्लंघ्यान्तर्गत्वा हसन्तं तमा-लोक्य मुखे चपेटां दत्त्वाऽभाषीत्—अरे ! इयतीं वेलां बहिस्तिष्ठन्नहमवादयं, तच्छृण्व-न्नपि कथं कपाटं नोद्घाटितवान्, नो किञ्चिज्जल्पितवान् वा ? सोऽवक्—पितः ! पुरा त्वमेव ममैवमशिक्षयथाः—यद्गुरुजनादेरभिमुखं त्वया नो गदनीयमिति मौनमाश्रित्याऽ-तिष्ठम्, तत्र को मे दोषः, यन्मे कुप्यसि ? जगादैवं पिता—अरेमूर्ख ! 'वृद्धानामग्रे कार्यमन्तरा न वक्तव्यम्, सति कारणे तु वक्तव्यमेव' इति पितुः शिक्षणं सहर्षं गृहीत्वा तमूचे—अद्यप्रभृति यथा भणसि, तथैव वदिष्यामि सत्यवसरे । पुनरन्यदा बहु-भिर्व्यापारिजनैः सहाऽऽलपन्नासीत्सः, गृहे च माता राबोडीं पक्त्वा तमेव शिशुमुवाच—शिशो ! याहि पितरं ब्रूहि यद्गृहमागच्छतु झटिति सुपाचितां राबोडीं भुक्त्वा पुनः कार्यं करोत्विति । शिशुरपि त्वरया तत्र गत्वा सकलजनसमक्षमुच्चैर्जगाद—पितः ! गृहेऽद्य माता राबोडीमपाक्षीदतस्त्वां तदशनाय तूर्णमाकारयति । तदेहि पश्चादेतदव-शिष्टं कार्यं कर्त्तव्यम् । इति श्रुत्वा लज्जितः श्रेष्ठी ततश्चलित्वा मार्गे तमवादीत्—अरे ! ईदृशं लज्जाकरं वचनं सदसि कथमवादीः ?, पुत्रोऽजल्पत्—किमहं कुर्याम्, त्वया पुरैव-मशिक्षि—सति कार्ये महता स्वरेण वाच्यमिति मया तथा भणितम् । पिताऽऽख्यत्—रे दुर्मते ! 'अग्रे पुनरेवं मा भाषिष्ठाः, कार्यश्चेत्कर्णान्तिके गुप्ततयैव वाच्यम्' सोऽपि तथेति प्रापद्यत । पुनरन्यदा गृहे लग्नं दहनं प्रेक्ष्य श्रेष्ठिनं द्रागानेतुं पुत्रं प्रैषीत्—स दुर्धीश्च तत्रागत्य बहूँल्लोकानालोक्य दूरादेव मन्दं मन्दं निगदितुमारेभे । कियत्कालान-न्तरं तत्र स्थितं तमवेक्ष्य पित्रा भणितः—अरे ! किमस्ति ? यदेवं मन्दं मन्दञ्जल्पसि ? समीपमागत्य कार्यं ब्रूहि ?, तदा स तत्पार्श्वमागत्य कर्णे व्याहृतवान्—पितः ! गृहं दह्यते तूर्णं गच्छेति श्रुत्वा स आख्यत्—रे कीदृङ् मूर्खोऽसि, यदैवाऽऽगास्तदैवैतत्कथं नो जगदिथ ? ईदृशे कार्ये त्वदन्यः को विलम्बयेत ? इदानीं गत्वापि किं करिष्यामीयता कालेन तु सदनं भस्मीभूतं स्यात् । इत्थं पित्रोपालब्धः स जगौ—सति कार्ये लोकसमक्षं मन्दं मन्दं त्वया वाच्यमिति शिक्षां मे ददिथ, तर्हि किमिदानीमेवमुपालभसे ?, नास्ति मे लेशतोऽपि दोषः किन्तु तवैव । तदा कुपितः पिता प्राह—दुर्मते ! 'यदैव धूम उद्ग-च्छेत्तदैव तस्मिन् धूलिः क्षेपणीया, तथाकरणे मनागपि विलम्बो नो विधेयः, येन तत्कालमेवाग्निः शाम्येत् ।' इति पितुः शिक्षणं सोऽपि प्रतिपेदे । एकदा शीतर्त्तौ प्रभाते पिता दन्तधावनं कुर्वन्मुखं व्याददे । तदा तदास्यान्निर्गच्छन्तं धूममवलोक्य

झटिति तेन निर्मतिकेनैकाञ्जलिर्धूलीः पितुर्मुखे निक्षिप्ता। तदवलोक्य पित्रा निरधारि, यदयं महामूर्खो जातः। पुनरेकदा तृषातुरं तुरगं जलं पाययितुं स्नापयितुञ्च तमादिशत्, तदाह–पितः! इदं द्वयमपि नो करिष्यामि किन्त्वेकमेव स्नपनं जलपायनं वेति। तदुक्तिं श्रुत्वा पिता जगाद्–यदि त्वमुभयं न विधित्ससि, तर्हि याहि, तुरगं तटाकान्तर्नीत्वा स्नपयित्वा तूर्णमिहैहि। तदा स दुर्मतिर्दध्यौ–मयाऽवश्यं द्वयं नैव कार्यम्। भणितश्च पित्राऽस्नानायैवेति तन्मुखं दृढं बद्ध्वा केवलं स्नपयित्वैव तृषार्त्तमपि घोटकं गृहमानयत्। तत्रावसरे प्रतिबद्धमुखं पिपासया व्याकुलीभवन्तमश्वं विलोक्य 'किमनेन जडतमेन पशुप्रायेण पुत्रेण' इति विचिन्त्य पिता तदैव गृहान्निरकाशयत्। प्रोवाचैवम्—रे! 'पथि गच्छता त्वया कश्चित्कोऽपि मिलेत्स महता स्वरेण नमस्करणीयः। पित्रा निष्काशितः सोऽचलत्। कियद्दूरं गत्वा कश्चिज्जालं वितत्य तिष्ठन्तं मृगयुं विलोक्याऽत्युच्चैः प्रणतिं व्यधात्। तदैव तन्नादेन पलायितान्मृगानालोक्य स व्याधस्तं भृशं जघान, प्रान्ते मूर्खमवगत्य तत्याज। बभाण च–रे वराक! 'अग्रे कमप्यालोक्य गुप्त्यैव त्वया गन्तव्यम्, नो चेदित्थमेवाऽन्योऽपि हनिष्यति।' तदग्रे गच्छन् मार्गे चौरगवेषणाय यान्तं कोट्टपालं दृष्ट्वा स्तेन इव छन्नतया चलितुं लग्नस्तथायान्तं तमालोक्य चौरधिया निगृह्य दण्डादिना बाढं निहत्य प्रान्ते मूर्खं विदित्वा मुमोच। जजल्प च–नराधम! 'यत्र भूयसीमेकत्र तिष्ठन्तीं जनतां पश्येस्तत्रैवमवश्यं वक्तव्यं यदीदृशं दिनं वः कदापि माभूत्।' अथ तन्मुक्तः स कियद्दूरमागत्यैकस्यां नगर्यां विवाहोत्सवे सम्मिलितां जनतां निरीक्ष्य प्रोच्चैरजल्पत्–भो भो लोकाः!, भवतां सदने जातुचिदीदृशं कार्यं माभूदिति, अमङ्गलमेतच्छ्रुत्वा तेऽपि पुरेव नितरां जघ्नुः। तदा सोऽवक्—भोः! मां मा निहत? यदहं मार्गे केनापि कोट्टपालेनैवं वक्तुमभिदधे। ततस्ते मूर्खोऽयमिति मत्वैनमौज्झन्। अशिक्षि च–दुर्मते! अधुना याहि, परमन्यत्र जनसमाजे विलोकिते 'सदा वः किलैवमेव दिनमस्त्विति भाषितव्यम्।' अथैवं शिक्षितः सोऽग्रे चचाल। ग्रामान्तरे च राज्ञः शवं वहन्तः क्रोशन्तश्च प्रजापुत्रप्रधानादिभूयांसो लोकाः श्मशानभूमिं यान्ति स्म, तदा सोऽत्युच्चैर्वदितुं लग्नः–सदा युष्माकमीदृगेव दिनमस्तु। इत्याकर्णयन्तः कियन्तः सेवकाः शिखामादाय तं ताडयामासुः। पश्चान्महामूर्खं जानानास्ते जहुः। इत्थं मौर्ख्यात्पदे पदे महाकष्टं सहमानः कियद्भिर्दिवसैरात्मसदनमायातः सः।

२ ऋजुप्राज्ञत्वे दृष्टान्तः—

द्वाविंशतिजिनतीर्थे कश्चित्साधुः स्थण्डिलमगमत्। अतिचिरेण समायातं तमप्राक्षीत्सूरिः–भोः! इयती वेला कथङ्कारमजा-

वत ?, तदाऽमायिकत्वाच्छिष्यो जगौ—प्रभो ! मार्गे नाटकदर्शनादियान् कालाऽतिक्रमोऽभूदिति तथ्यं वदन्तमेनमबोधयद् गुरुः—वत्स ! जात्वप्येतन्नाऽवलोकनीयम् । यदेतत्पश्यतां साधूनां पापं लगति । त्वमेतद्ज्ञानादद्राक्षीरतएव मिथ्यादुष्कृतं गृहाणेति श्रुत्वा तत् प्रायच्छत् । स एवान्यदा स्थण्डिलादागच्छन्मार्गे नृत्यन्तीं नटीं वीक्ष्य प्राज्ञत्वाद् व्यमृशत्—यन्मां गुरुर्नटनर्त्तनप्रेक्षणं न्यषेधीत्तर्हि तस्मादप्यधिकरागविधानपटीयसीयं नटी, तदवलोकनमपि निषिद्धमेवेति, न मयाऽत्र स्थातव्यमित्थं विमृश्य स्वस्थानमायातः ।

नन्वेवमेतेषां मध्यमजिनसाधूनामेव धर्मो वोभवीतुतमाम् । ये पुनः प्रथमतीर्थकृत्साधवः प्रकृत्या ऋजवो जडाश्च सन्ति, तेषां धर्मः कथमुत्पद्येत ?, अज्ञानप्रकृतिकत्वात् । ये च नैसर्गिकवक्रजडात्मानो वीरसाधवो वर्त्तन्ते, तेषामत्यन्ताभाव एव स्याद्धर्मस्य, इति कश्चिन्माशङ्केत । यतः प्रथमजिनसाधव ऋजुजडत्वान्न स्खलन्ति, अतएव भावस्य वैशुद्ध्येन भवतितमां धर्मः । एवं वक्रजडाश्चरमविभुसाधवोऽपि ऋजुप्राज्ञापेक्षया यद्यप्यवैशुद्ध्यमश्नन्ति, तथाप्येतेषां धर्मोऽत्यन्ताभावो न बोद्धव्यः, तथाभाषणे दोषभाग् भवेत् । तदुक्तम्—" जो भणइ नत्थि धम्मो, न य सामाइयं न चेव य वयाइं । सो समणसंघवज्झो, कायव्वो समणसंघेण " ॥ १ ॥

४ कल्पश्रुतिहितकरत्वे दृष्टान्तः—

योऽयं दशधा कल्पोऽभिहितः, स खलु तृतीयभिषग्भैषज्यवद्धितकारी वर्त्तते । तत्कथा चैवम्—कस्यचिदेकस्य राज्ञः प्रियतर एक एव पुत्र आसीत् । कदाचिन्मे सूनुं कोऽपि रोगो माबाधतामिति विमृशता तेन भूभुजाऽनागतानां रोगाणां चिकित्सायै वैद्यत्रयी समाहूता । तानागतानुवाचैवम्—भो भिषग्वराः ! भवन्तः शास्त्रनिष्णाताः प्रख्याताश्च सन्तीति हेतोर्मत्पुत्राय तदौषधं वितरन्तु, यन्निपीय यावज्जीवं जातुचि-

दपि तदुद्भूतां मनागपि पीडामसौ नानुभवेत् । तेष्वेकोऽजल्पत्–क्षितिपते ! ममौषधं निपीतं सद्रोगं निहन्ति, असति च रोगे तमुत्पादयते । तच्छ्रुत्वा नरपतिरवादीत्–भोः ! नाहममुं कामये ? यदेतत्प्रसुप्तसिंहोत्थापनप्रायमस्ति । द्वितीयोऽवदत्–नरपते ! मदीयं भैषज्यं यः पिबति स रोगान्मुच्यते, तदसद्भावे नो किञ्चित्पुष्णाति नैवाऽपकरोति । राजा न्यगदत्–भोः ! तवाप्यौषधं भस्मनिहुतप्रायमेव मन्ये । तृतीयोऽवदत्–स्वामिन् ! मामकमेतदौषधं निपीतं सदवश्यमुन्मूलयते रोगानशेषान्, तदभावे च रोगान्तरमनुत्पादयच्छरीरं पुष्णाति, बलं बुद्धिं वीर्यञ्च वर्धयते । इति श्रुत्वा प्रामोदततमां भूजानिः । ततस्तेन दत्तमौषधमेव पुत्रमपीप्यत्, भूरि रायं प्रदाय सत्कृतवांश्च तृतीयवैद्यम् । तद्वदिदं कल्पमपि श्रोतॄणां प्राग्भवार्जितमशुभं कर्मप्रचयं तथा विहन्ति, यथा पुनर्नैवोत्पत्तुं शक्येत । प्रणाश्य च सर्वा आपदः सुखसन्ततिमनुभावयते, परिपुष्णाति च चारित्रगुणान्, अधिगमयति च मोक्षमनायासेन ।

५ क्षेत्रगुणदर्शनम्—

अथ चतुर्मासकरणाय प्रथमं साधुभिः क्षेत्रगुणा गवेषणीयाः । तच्च क्षेत्रं, जघन्यमुत्कृष्टं मध्यमं चेति त्रिधा भवति । भैक्षसौलभ्य–निर्वद्यस्थण्डिलभूमि–स्वाध्यायसौलभ्य–जिनालयसद्भावलक्षणं चतुर्गुणोपेतं तज्जघन्यमवगच्छत । भवन्ति च यत्र त्रयोदशगुणास्तदुत्कृष्टमुच्यते । यथा—पथिकर्दमाऽभावः १, द्वीन्द्रियादिजीवाऽनुत्पत्तिः २, निरवद्या बहिर्भूमिः ३, स्त्रीपशुपण्डकादिसंसर्गरहितोपाश्रयः ४, दधिपयसां भूयसी लब्धिः ५, भविकश्रावकाणां प्रचुरा वसतिः ६, दक्षभिषजां सद्भावः ७, औषधस्य सौलभ्यम् ८, श्राद्धानां वेश्मसु धनधान्यादेर्महान् संग्रहः ९, साधुभक्तिकारी भव्यो नरपतिः १०, ब्राह्मणतापसादिवर्गैः साधूनामवज्ञाऽऽशङ्कानुत्पादः ११, जनसमुदायो महाभद्रकः १२, निर्विघ्न स्वाध्यायशुद्धिश्च १३ । जघन्यादाधिकमुत्कृष्टात्त्रयोदशगुणा-

न्न्यूनं पञ्चमादिद्वादशगुणसहितं मध्यमं तज्ज्ञेयम् । एवमुत्कृष्टे क्षेत्रे साधुभिश्चतुर्मासीं स्थातव्यम्, तदलाभे मध्यमे, तस्याप्यलाभे जघन्ये, साम्प्रतन्तु यत्र गुरव आदिशेयुस्तत्रैव कर्त्तव्या चतुर्मासी । यदत्र भूतले साधवो ग्रामानुग्रामं विहरन्ति । तत्राऽनेकतीर्थयात्रादि विदधतो मिथ्यात्वे निपततो भव्याञ्जीवानुद्धरन्ति, कुर्वन्ति च शासनप्रभावनाः । समायाते च वर्षर्त्तौ, वर्षत्सु च वारिवाहेषु, पदे पदे प्रवहत्सु च जलप्रवाहेषु, समुद्भवत्सु च कोमलबहुलबालतृणेषु, प्रतिस्थानं सूक्ष्मा बादराश्च भूयांसो जन्तव उत्पद्यन्ते । अतस्तद्रक्षणाय प्रयतमाना मुनयः प्रावृषि कुत्रापि नो विहरेयुरेकत्रैव स्थाने चतुर्मासीं यावत्तिष्ठेयुः, विदध्युश्च बहुविधान् घोरानभिग्रहान् ।

६ सहेतुकविहारस्थितिनिरूपणम् —

महामारीरोग आपतेत् १, भिक्षायां दौर्लभ्यं वा भवेत् २, राजा वा प्रकुप्येत् ३, कुन्थ्वादिजीवानां बहुधोत्पत्तिर्वा जायेत ४, सरीसृपाग्निदुर्जनानां भीतिर्वोत्पद्येत ५, इत्यादिकारणाऽन्यतमे तु चातुर्मासमध्येऽपि साधुभिरन्यत्र विहर्त्तव्यम् । तथा मेघे वर्षति, पथि च कर्दमाकुलिते, वनस्पतिसमाच्छादितभूमितले च सति कार्त्तिक्याः परतोऽपि मुनिभिस्तत्रैव स्थातव्यम्, नान्यत्र विहर्त्तव्यमित्यर्हतामादेशः ।

७ पर्वोत्कर्षदर्शनं साधुश्राद्धकृत्यकथनञ्च—

अथ यत्र पत्तनादौ चतुरो मासान्मुनयस्तिष्ठेयुस्तत्र क्रमादायाते पर्युषणमहापर्वणि बाहुल्येन स्वाध्यायशुभध्यानतपोजपादिकं समाचरेयुः । सर्वेषु पर्वस्वेतन्मुख्यतमम् । यथा—मन्त्रेषु परमेष्ठिनमस्कारः, तरुषु सहकारः, देवेषु इन्द्रः, तारासु चन्द्रः, न्यायिषु रामः, सुरूपेषु कामः, रूपवतीषु रम्भा, वादित्रेषु भम्भा, गजेषु शक्रवाहनः, साहसिकेषु दशाननः, सतीषु सीता, ग्रन्थेषु गीता, गुणेषु विनयः सारः,

बुद्धिष्वभयकुमारः, काननेषु नन्दनवनम्, इन्द्रियेषु नयनम्, धनुर्धराणामर्जुनः, दानिषु कर्णः, गोषु कामधेनुः, रत्नेषु चिन्तामणिः, पानीयेष्वमृतम्, धातुषु सुवर्णम्, कुसुमेषु कमलम्, तेजोवतामादित्यः, ज्ञानेषु कैवल्यम्, तीर्थेषु शत्रुञ्जयः, सुखेषु मोक्षो विलसति, तथाऽयं पर्वराजो जगत्यामस्यां विभ्राजतेतमाम् । तत्र साधूनां १ सर्वचैत्येषु श्रीमदार्हत्यः प्रतिमा वन्दनीयाः, २ शिरोरुहाणां लुञ्चनम्, ३ साम्वत्सरिकप्रतिक्रमणम्, ४ मिथःक्षमापणं, ५ अष्टमंतपः, ६ कल्पसूत्रवाचनञ्चेति षट् । श्रावकाणाञ्चैतस्मिन् १ षष्ठाष्टमादिकंतपः, २ सुपात्रदानम्, ३ श्रीफलादिप्रभावना, ४ सचित्तवस्तुत्यागः, ५ सर्वारम्भपरित्यागः, ६ ब्रह्मचर्यपालनम्, ७ अभयदानम्, ८ धर्मार्थे धनव्ययः, ९ चैत्यपरिपाटी, १० जिनप्रतिमाऽर्चनम्, ११ सकलसाधुवन्दनम्, १२ श्रीसंघभक्तिः, १३ द्वे सन्ध्ये प्रतिक्रमणम्, १४ अमारीपटहोद्घोषणम्, १५ श्रुतवृद्धानां भक्तिः, १६ दुष्कर्मक्षपणाय कायोत्सर्गकरणम्, १७ परस्परक्षमापणम्, १८ कल्पसूत्रस्य महोत्सवकरणम्, १९ भावना भावनम्, २० एकाग्रमनसा कल्पश्रुतश्रवणम्, २१ कल्पसूत्रवाचकस्य वैयावृत्यकरणं चेत्येकविंशतिकृत्यं कर्त्तव्यम् ।

८ सोदाहरणं कल्पश्रुतिमाहात्म्यम्—

अथ पर्युषणमहापर्वणि महाफलप्रापकं, रत्नत्रयवदान्यं, त्रिशल्योन्मूलनकरं, वाङ्मनःकायोद्भूतदोषशोषकरं, विश्वत्रयाऽग्र्यपदप्रापकं, साक्षात्कल्पपादपोपमं, श्रीकल्पसूत्रमिदं माङ्गल्याय पञ्चाहमवश्यं वाचनीयं साधुभिः । श्रावकैः श्राविकाभिश्च निद्राप्रमादादिकं विहाय परया भक्त्या समहोत्सवं श्रोतव्यम् । एतच्छ्रवणवाचनाभ्यामुभयेषां कल्याणं भवति । यथा—कस्याश्चिदेकस्या वृद्धायाः पुत्रः कानने गाश्चारयन् भोगिना दष्टो मूर्च्छामुपगतो मृतकल्पो भूमौ निपपात । लोकमुखात् तच्छ्रुत्वा सा वृद्धा तत्र गत्वा हंसहंसेति नाम ग्राहं ग्राहं सकलां रात्रिं

चक्रन्द । प्रभाते निर्विषतामुपगते च पुत्रे प्रहृष्टा सा पुत्रेण सह गृहमागतवती । तदा मृतमपि पुनरुज्जीवितं तमालोक्य सकला जना महदद्भुतं मेनिरे । तत्रैवावसरे कोऽपि व्यालग्राही तामप्राक्षीत्–रे जगति ! मन्त्रादिकमजानती केनोपायेन त्वमेनं निर्विषमकृथाः ?, सा जगाद–सत्यमहं मन्त्रमौषधं वा न जानामि, किन्तु मोहादशेषां रजनीं हंस हंसेति तन्नाम ग्राहं ग्राहमुच्चैरक्रन्दम् । ततो नैकटिकवनदेवप्रसादेन सूनुर्मे प्राण । इति वृद्धोक्तिमाकर्ण्य विषवैद्योऽवदत्–सत्यमेतदमोघमुपचेरिथ, यथा तन्नामाक्षराणि प्रयोगान्मन्त्राणि बभूवुः । तथैतत्कल्पसूत्रं शृण्वतां श्रावयताञ्चानेकभवसञ्चितानि कर्माणि क्षणाद्विलीयन्ते, गुणाश्च भूयांसो जायन्ते । अत एतदीयं माहात्म्यं सर्वोत्कृष्टमस्ति । उक्तञ्च–

नाऽर्हतः परमो देवो, न मुक्तेः परमं पदम् ।
न श्रीशत्रुञ्जयात्तीर्थं, श्रीकल्पान्न परं श्रुतम् ॥ १ ॥
वाचनात्साहाय्यदानात्सर्वाक्षरश्रुतेरपि ।
विधिनाराधितः कल्पः, शिवदोऽन्तर्भवाष्टकम् ॥ २ ॥
एगग्गचित्ता जिणसासणम्मि, पभावणा पूअपरायणा जे ।
तिसत्तवारं निसुणंति कप्पं, भवण्णवं गोयम ! ते तरंति ॥ ३ ॥

खल्वमुष्मिन् श्रीवीरचरित्रं बीजभूतम्, श्रीपार्श्वनाथचरित्रमङ्कुरम्, श्रीनेमिनाथचरित्रं पत्रम्, श्रीआदिनाथचरित्रं शाखाभूतम्, स्थविरावली कुसुमम्, समाचारी सौरभम्, फलन्तु मोक्षो विद्यते । तदेतत्सूत्रं कल्पद्रुमोपमं महापावनमाद्यन्तमक्षरशः श्रुत्वा जीवोऽयमष्टमे भवे मोक्षमुपैति । अतः शाश्वतं सुखं प्रेप्सवो ये भव्या उपवासत्रयात्मकमष्टमं तपः कृत्वा सावधानैकाग्रमनस एतत्सूत्रं शोश्रूयन्ते, ते नागकेतुवन्मोक्षमधिगच्छन्ति । तथाहि–इह जगति विचकास्ति चन्द्रकान्ता नगरी । तस्यां विभ्राजते खलु विजयसेनो नराधिपः । निवसति च तत्र श्रीका-

न्तनामा महेभ्यः। अस्ति चाऽमुष्य श्रीसखी मनोऽनुकूला धर्मपत्नी, तयोश्चरमे वयसि सूनुरध्यजायत । सचैकदाऽऽसन्ने पर्युषणमहापर्वणि पार्श्ववर्त्तिजनैः परस्परमालपितामष्टमतपःकथामश्रौषीत् । तच्छ्रवणेन तदैव जातजातिस्मृतिज्ञानेन प्राक्तनं भवमसावपश्यत्। ततः स्तनन्धयावस्थायामेवाष्टमं तपः कर्त्तुं निजस्वान्ते निश्चित्य स्तन्यपानमौज्झत्। ततोऽतिकृशतां नीतोऽसौ शिशुर्मृतकल्पोऽभवत्। विहितेष्वपि दुःखातुराभ्यां पितृभ्यां यन्त्रतन्त्रमन्त्रौषधादिबहूपचारेषु पयः पातुं नैव चकमे। तदा क्षुधया मूर्च्छितं बालं मृतम्मन्यमानौ पितरौ पुत्रशोकाद्विपन्नावभूताम्। ततो ज्ञातयस्तं बालं श्मशानभूमौ गर्त्तं खनित्वा तत्र निक्षिप्य मृदाऽपिदधुः। अपुत्रं तं श्रेष्ठिनं मृतं श्रुत्वा तद्धनजिघृक्षया राजा तत्र प्रधानान् प्राहिणोद्। अस्मिन्नवसरे विहिताष्टमतपःप्रभावाद्धरणेन्द्रस्यासनमचालीत्, तदाऽवधिज्ञानेन तत्कारणं विदित्वाऽऽगत्य चामृतसेकात्तं बालमुज्जीव्य विप्रवेषेण तद्गृहद्वारि तस्थिवान् सः। ऊचिवांश्च राजपुरुषान्–भोः! इदं धनं मा लात । तेन वारितास्ते पुरुषा आगत्य राजानमूचिवांसः–स्वामिन्! तद्गृहे स्थितः कश्चिदेको विप्रो निवारयते धनानि लातुकामानस्मान्। इति निशम्य क्रुधारुणलोचनो नरनाथस्तैः समं तत्रागत्य विप्रमवादीत्–भोः! अस्मिन्नगरे यो निरपत्यो म्रियते तस्य धनगृहादिसर्वमात्मसात्कुरुते राजा, इति शाश्वतं नृपशासनं जागर्त्ति। तर्हि कथमेतान् राजकीयान् पुरुषान् प्रतिषेधसि। विप्रोऽवदत्–तत्र भवता सत्यमभाणि, परमसौ निरपत्यो नो ममार, वर्त्ततेऽधुनापि जीवन्नेव तत्पुत्रः । नृपालोऽजल्पत्–विद्यते जीवंस्तर्हि तं मां दर्शय? सोऽपि तदैव गर्त्तान्निष्काश्य निधानामिव जीवन्तमेव शिशुमदीदृशत्। तमवलोकमानाः सर्वे भूपादिका विस्मिता जाताः। राजाऽवदत्–कस्त्वम्?,कश्चाऽयं स्तनन्धयः?, कथमेतदवेदि वा भवता?, विप्रउवाच–राजन्! मामवेहि धरणेन्द्रनागराजम्। अष्टमतपःप्रभावा-

दमुष्य शिशोर्जीवनधनपरित्राणाय समायातोऽस्म्यत्र । राजोवाच—देवेन्द्र ! जातमात्रेणामुना कथं तदकारि ?, धरणेन्द्रोऽवदत्—अयं खलु पूर्वस्मिन् भवे कस्यचिद्वणिजः सूनुरासीत् । शैशवे मृतमातृके तत्पिताऽन्यां पर्यणयत, सा दुराशयाऽऽसीदतएवाऽल्पाऽपराधेऽप्येनं बहुताडयन्ती दुःखं ददाति स्म । तेन प्रत्याहिकदुःखेन खिद्यमानोऽयं बालः कमप्येकं श्रावकं सखायं तत्कारणमचकथत् । सखाऽजल्पत्—त्वया भवान्तरे धर्मो नाऽकारि, अतोऽमुष्मिन् भवे किलेदृशं दुःखमनुभवसि । अतस्त्वं धर्ममाराधय, संसारे धर्मएव प्राणिनां वाञ्छितं फलं प्रापयते । मित्रोपदेशमाकर्ण्य धर्ममना भवन्नष्टम्यां चतुर्दश्यांश्चोपवसन् द्वितीयेऽहनि नवकारसी पोरसीत्यादि तपांसि विदधदनुक्रमेण पर्युषणेचागामिन्यवश्यमहमष्टमं तपः करिष्यामीति निश्चित्य तृणमय्यां कुट्यामस्वाप्सीत् । तदा समीपे कस्मिंश्चित्सदने लग्नमग्निमवलोक्य पापपरायणा विमाताऽवसरं लब्ध्वा तस्यामपि कुट्यामग्निकणं क्षिप्तवती । ततः प्रदीप्तेऽग्नौ तदन्तः सुतोऽसावपि शुभध्यानेन ममार । विहिताष्टमतपोमहिम्ना निरपत्यस्याऽमुष्य श्रीकान्तस्य गृहे पुत्रोऽभवत् । अतएवाऽमुष्मिन् भवे जातिस्मृत्या बाल्येऽपि शिशुनाऽमुकेनाष्टमं तपश्चक्रे, बालत्वात्क्षुधया मूर्च्छामेव महतीमाप, न ममार । परन्तु तदजानन्तो लोका मृतधिया भूमावेनं निचख्नुः । तदहं ज्ञात्वा तत्राऽऽगत्य सुधां संसिच्यैनमुज्जीवितमकार्षम् । राजन् ! अयं नरोत्तमोऽस्ति, व्रजिष्यति चामुष्मिन्नेव भवे मोक्षम्, अतोऽयं यत्नतस्त्वया संरक्षणीयः । उपकरिष्यते चाग्रे त्वामपि तत्र मा संशयीथाः । इत्थं व्याहृत्य निजग्रीवातो हारमुत्तार्य शिशोरधिग्रीवं निधाय धरणेन्द्रः स्वस्थानमागात् । तदनु राजा हस्तिस्कन्धे तमारोप्य महताऽऽडम्बरेण गृहमनयत् । ज्ञातिभिः साकं श्रेष्ठिनो मृत्कार्यञ्चाऽकरोत् । तस्य शिशोर्महोत्सवं विधाय नागकेतुरित्यभिधानं व्यधाद् । असौ जन्मनैव जितेन्द्रियो द्वादश-

व्रतधारी सुश्रावकोऽभवत् । अष्टमीचतुर्दश्योरुपोषणं चतुर्मासके च षष्ठं तपः पर्युषणे चाऽष्टमं तपः प्रत्यब्दमकरोत् । प्रत्यहं जिनार्चनं श्रमणसेवनं, सन्ध्याद्वयेच प्रतिक्रमणं सामायिकादि कुर्वाण आसीत्। अथैकदा विजयसेनो राजा निरागसमपि कमपि पुमांसं मुधैव चौर्यकलङ्कमारोप्य शूलिकारोपणेनाऽजीघतत् । स मृत्वा व्यन्तरीभूय प्राग्वैरानुसन्धानेन सकलपौरजनविघाताय व्योम्नि नगरद्वयसीमेकां शिलां व्यकरोत्। सर्वांश्च भीषयन् प्रथमं राजसभायामागत्य नरनाथं पादेन प्रहृत्य शोणितं वमन्तं सिंहासनादधः पातितवान् । तदा तदद्भुतं विलोक्य नागकेतुः कथङ्कारमहं सकलसंघनरपालजिनप्रासादादेरकालसंहारं जीवन्नेव पश्येयमिति विमृश्य मनसि जीवदयामानीय भगवतः प्रासादशिखरमारुह्याऽधः पतन्तीं शिलामेकेन पाणिना धृतवान् । तादृशीं नागकेतोस्तपःशक्तिमसहमानः स व्यन्तरोऽपि विकृतां शिलां संहृत्य नागकेतोः पादयोः पपात, स्वापराधं क्षमयँस्तदीयवचसा भूपतिमपि निरुपद्रवं विधाय निजस्थानमगमत् । नागकेतोश्च सर्वत्र महिमा ववृधे, राजापि भृशं सत्कृतवानेनम् । ततः प्रथमतोऽप्यधिकं तपोजपादिनानाविधानि सुकृतानि कुर्वन् विचचार । अथान्यदा जिनेश्वरमर्चन्तमेनं कुसुमान्तःस्थितश्चक्षुश्रवा अदांक्षीत्, तदा तद्विषव्यासाऽशेषदेहो भूत्वा शुभध्यानलीनमनाः कैवल्यज्ञानमापत् । तदैव शासनदेवता च रजोहरणादिसाधुवेषोपकरणानि तस्मै दत्तवती । केवलीभूत्वा स चिरं यथेच्छं विहरन् बहून् भव्यजीवान् प्रतिबोधयन्मोक्षमीयिवान् । एवमन्येऽपि ये भव्याः पर्युषणे महापर्वणि विधिवदष्टमं तपःकृत्वा समस्तमनोरथावाप्तिकरं निकाचितघातिकर्मचतुष्टयजिष्णु श्रीकल्पसूत्रं श्रोष्यन्ति तेऽवश्यं सदा शाश्वतसुखमयमजरामरपदमंहिष्यन्ति ।

९ ग्रन्थकर्त्तुर्नामपूर्वमानकथनञ्च—

अथैतस्य कल्पसूत्रस्य प्रणेता श्रुतकेवलिश्रीभद्रबाहुस्तेन प्रत्या-

ख्यानप्रवादात्मकनवमपूर्वात्सारमुद्धृत्य श्रीदशाश्रुतस्कन्धसूत्रस्याऽष्टसाध्ययनतयैतन्निरमायि । सहासनगजपरिमितमषीपुञ्जलेख्यमानतस्तेषां पूर्वाणां परिमाणमित्थम्—

| पूर्वनाम | गजमानं | पूर्वनाम | गजमानं |
|---|---|---|---|
| १ उत्पादपूर्वम् । | १ | ८ कर्मप्रवादपूर्वम् । | १२८ |
| २ आग्रायणीयपूर्वम् । | २ | ९ प्रत्याख्यानप्रवादपूर्वम् | २५६ |
| ३ वीर्यप्रवादपूर्वम् । | ४ | १० विद्याप्रवादपूर्वम् । | ५१२ |
| ४ अस्तिनास्तिप्रवादपूर्वं | ८ | ११ अवन्ध्यप्रवादपूर्वम् । | १०२४ |
| ५ ज्ञानप्रवादपूर्वम् । | १६ | १२ प्राणापायप्रवादपूर्वम् । | २०४८ |
| ६ सत्यप्रवादपूर्वम् । | ३२ | १३ क्रियाविशालपूर्वम् । | ४०९६ |
| ७ आत्मप्रवादपूर्वम् | ६४ | १४ लोकबिन्दुसारपूर्वम् । | ८१९२ |

यद्यप्येते १६३८३ एतावद्गजप्रमितमषीपुञ्जेन लेख्याः स्युः, परमद्यावधि कोऽपि पुमांस्तन्नैव लिलेख, नो लेखिष्यति, तथाप्येतत्परिमाणकथनेन केवलमुपमैवाऽदर्शि भगवता । अथ च कल्पसूत्रस्य महापुरुषप्रणीतत्वात्तदर्थसंख्या कर्त्तुं नैव शक्या । यदि जगत्यामस्यां सकलकूलङ्कषासैकतकणान् गणयेत्कथञ्चित्, असंख्यातसरित्पतिवारिबिन्दून् वा कोऽपि कदापि गणयेत्तथापि कल्पसूत्रस्यार्थपरिमाणकथनमसंभवमेवास्ति । तदुक्तम्—" मुखे जिह्वासहस्रं स्याद्, हृदये केवलं यदि । तथापि कल्पमाहात्म्यं, वक्तुं शक्यं न मानवैः ॥ १ ॥ "

१० सङ्घसमक्षवाचनपरिपाटी—

प्रागेतत्कल्पसूत्रं भाद्रसितपञ्चम्यां सांवत्सरिकप्रतिक्रमणानन्तरं मध्यरात्रे कालग्रहणं विधाय तिष्ठन्नेव गुरुः सूत्रपाठमुच्चारयन्नासीत्, इतरे च साधवः कायोत्सर्गेण शृण्वन्ति स्म । साध्व्यस्तु तद्दिन एव शृण्वन्ति स्म । तदनु श्रीवीरनिर्वाणतोऽशीत्यधिकनवशततमे वा त्रिणवत्यधिकनवशते वर्षे किलानन्दपुरे ( सांप्रतं वडनगरे ) ध्रुवसेनो राजा-

सीत्, तस्यातिप्रेयान् सेनागजनामा सूनुरासीत् । सचाल्पायुषत्वादल्पे वयसि ममार, तेन हेतुना शोकपूर्णमना नरपतिः सर्वं त्यजति स्म । समागाच्चपर्युषणपर्वाधिराजः, अनागच्छति च धर्मशालां क्षितिपता- वितरेऽपि लोका नैवाऽऽगच्छन्ति स्म । तदा धर्महानिं विलोक्य गुरुः कालिकाचार्यो नरपालान्तिकमगमत्, प्रत्यबोधच्चैवम्—राजन् ! त्वयि शोकातिरेकाद्धर्मकृत्यमुज्झति सतीतरेऽपि पुरवासिनो लोकाः सर्वे धर्म- मत्यजन् । सर्वमिदं धनपुत्रकलत्रादिकं क्षणभङ्गुरमस्ति, आयुरपि सर्वेषां समानं शाश्वतं वा नैव जायते । इत्थममुष्मिन् संसारे कमपि मा शोचीः । सर्वाधिकोपकरिष्णुः शाश्वतसौख्यदायी धर्म एव सेव्यताम् । कृतेऽपि बहुशोके मृतं गतं वा नैव लभते । इति विजानता मतिमता भवता मनसः शोको निष्कासनीयः, वर्त्तते च पञ्चम्यां पर्युषणम् । तस्या- मुपाश्रयमागच्छेत्तर्हि श्रीभद्रबाहुस्वामिना नवमपूर्वादुद्धृतं महामङ्गलमयं कल्पसूत्रमहं वाचयेय । राजाऽजल्पत्—भगवन् ! पञ्चम्यामिन्द्रमहो- त्सवो भविष्यति, करणीयश्चास्ति मृतपुत्रशोकापनोदनम् । अतस्तां जहाहि, चतुर्थीं षष्ठीं वा स्थिरी कुरु ? पञ्चम्यान्तु नागन्तुमर्हामि । तदा गुरुः 'अंतरा वि य से कप्पति' इतिसूत्रपाठमनुस्मरंश्चतुर्थीमेव स्थापयामास । इति निर्धारिते प्रहृष्यन् राजा बलमित्रभानुमित्राभ्यां भागिनेयाभ्यां प्रधानादिवर्गैः सहोपाश्रयमाययौ । तदनु नवभिर्वाच- नाभिः सप्रभावनं महता महेन सकललोकेषु विधिवच्छ्रोतुकामेषु गुरुः कल्पसूत्रं वाचयामास । तद्दिनादमुष्मिन्महापर्वणि चतुर्विधसङ्घाग्रे कल्पसूत्रश्रावणव्यवहारः प्रससार । अद्यापि तदनुसरन्ति सर्वे महान्तो मुनिगणाः ।

---

( १ ) आनन्दपुरे कालिकाचार्यश्चातुर्मासके तस्थिवान् । इतश्च ध्रुवसेनमहीशितुरेकएव पुत्र आसीत्सचाऽतिदारुणेन दाहज्वरेण परिपीडितो जज्ञे । भूयानुपचारोऽकारि परमेकोऽपि तां बाधां शमयितुं नो शशाक । ततश्चिन्तातुरः क्षितीशः सर्वं राजकार्यं जहौ, गुरुवन्दनार्थं

## ११ भाद्रसितपञ्चम्याः प्राधान्यकथनम्—

भाद्रसितपञ्चमी तिथिर्यथा श्रीजिनशासने मान्यतमास्ति, तथाऽन्यदर्शनेऽपि ऋषिपञ्चमीतया श्रेयस्करी परिगण्यते ; तथाहि—पुष्पवत्यां नगर्यां नीलकण्ठनामा भूदेवो न्यवात्सीत् । तस्य सोमा नाम्नी भार्याऽवर्त्तत । आसीच्चेन्द्रदेवाभिधानः सूनुः । असौ जन्मप्रभृत्येव रङ्कशिरोमणिरवर्त्तिष्ट । कियता कालेन तन्मातापितरौ मृत्वा माता शुनी पिता च वृषभोऽमुष्य सद्मन्येव बभूवतुः । तयोः साम्वत्सरिके श्राद्धदिवसे समुपस्थिते निर्धनत्वादसौ शुशोच—हन्त ! अद्य मे पित्रोर्वार्षिकदिवसो वर्त्तते, सामग्री च सदने क्वापि नास्ति, कथं तत्सम्पद्येत, अकरणे च लोका उपहासिष्यन्ति, पितरौ च मां शप्स्यतः । तावदेकस्तैलिको भाटकेन वृषभं लातुमागात् । नीलकण्ठोऽपि तस्मै तं प्रदाय तद्भाटकेन घृतगोधूमशर्करातण्डुलादिसकलां सामग्रीमानीय पत्न्यै समर्प्य ब्राह्मणान्निमंत्रयितुं गतवान् । तत्पत्नी च पायसमोदकापूपिकशाष्कुलिकादिनानाविधमपाक्षीत् । पायसान्तश्च सरीसृपो गरलमवमत् । विप्रस्त्री तन्नावेदीत्, तदा शुन्या जातिस्मृतिर्जाता, तद्बलेन तस्मिन् क्षीरपाके वान्तं गरलं विदित्वा प्राग्भवीयमात्मसदनमेतदिति तत्रागात् । दध्यौ च यद्येतद्भोक्ष्यन्ति विप्रास्तर्हि मरिष्यन्ति, एतदशनात्पुत्रोऽपि विपत्स्यते नूनमिति विचिन्त्य तत्र मुखं दत्त्वोच्छिष्टं कृतवती । तद्विलोक्य कुपिता पुत्रवधूर्मुसलेन तच्छिरसि गाढं जघान । तत्प्रहारेण भग्नमस्तका सा शुनी महत्या वेदनया व्याकुलीभूय भृशं क्रन्दन्ती तत्रैव गोशालायामागत्य भूमावपप्तत् । पश्चाद् गृहागतो विप्रस्तत्स्वरूपमवगत्य दुग्धान्तरमानीय पाचयित्वा निमन्त्रितान् द्विजानभोजयत् । सायङ्काले च श्रान्तो नीलकण्ठस्तस्यामेव गोशालायां खट्वोपरि सुष्वाप । सकलं दिनं तैलयन्त्रे संयोज्य स्तोकमपि यवसमभोज्य सायं तत्रैवानीय तं क्षुधार्त्तं वृषभमबध्नात्स तैलिकः । तत्रैवावसरे तयोर्वृषभशुन्योः शरीरे तदीया कुलदेवी समक्राम्यत्, तेन सा कुक्कुरी वृषभमवोचत—अद्यावयोः श्राद्धे द्विजाः संभोजिताः, परमेषा पापीयसी वधूर्मे शिरोऽभाङ्क्षीत्तेन महतीमसह्यां वेदनामनुभवामि । वृषोऽप्यवक्—पुत्रोऽपि

---

धर्मशालामप्यागन्तुं नेहाञ्चक्रे । तदाऽत्यासन्ने पर्युषणपर्वणि लोकानामप्रवृत्तिमालोक्य गुरुणा तद्धेतौ पृष्टे राज्ञः शोक एव तत्र कारणमिति विदित्वा गुरू राजसभामागत्य धर्मोपदेशेन राजानं प्रत्यबुधत् । प्रतिबुद्धे च राजनि महालाभो भविष्यतीतिधिया मङ्गलहेतवे प्रथमां वाचनामकरोद् गुरुः । तदाकर्ण्य राजपुत्रस्य सा ज्वरपीडा किञ्चिच्छमनोन्मुखी जाता । इत्थं गुरुमुखाच्छ्रुतासु नववाचनासु राजपुत्रः सर्वथा ज्वरदाहेनाऽमुच्यत । सहर्षमना राजा महामहोत्सवं व्यधत्त, अभ्यर्थयच्च गुरून्—भगवन् ! प्रत्यब्दमेतत्कल्पसूत्रं समस्तसङ्घमङ्गलाय वाचनीयम् । इति ग्रन्थान्तरेऽलेखि ।

पापीयानजायत, यद्यापि तैलिकालये प्राहिणोत् । सोऽपि समग्रं दिनं घाणिके संवाह्याऽभुक्तमेव मामप्यत्राऽबध्नात् । इत्थं तयोर्भाषणं निशम्य खट्वास्थः पुत्रो दध्यौ–हा ! हा ! ! ममैतौ पितरौ स्तः । कथमिमौ सद्गतिमेतारौ, धिङ्माम्, यः पितरौ सद्गतिं नो नयते, किन्तेन तनयेनेत्यादि विचिन्त्य तूर्णमुत्थाय प्रभूतं पायसमानीय शुनीं यथेच्छमभोजयत, वृषभाय च यवसं पर्याप्तमार्पयत । जाते च प्रभाते मातापित्रोः सद्गतिप्रापणाय देशान्तरमगमत् । बहूंश्च तीर्थान् प्राप्य तेषु ताभ्यां पिण्डमदात्, तयोः सुगतये नानाविधं यथाशक्तिदानमप्यदात् । क्वचिन्महातीर्थे कञ्चनमहार्षिमपृच्छत्–महर्षे ! केन पापेन मे माता श्वयोनौ जाता ? पिता च वृषभोऽभवत् ? केनोपायेन पुनस्तौ सद्गतिमेष्यतः ? महर्षिरूचे–विप्र ! तव पितरौ ऋषिपञ्चम्यां पशुवत्कामकिङ्करीभूतौ यभनमकुषाताम् । तत्पापेन तौ तादृग्योनौ जज्ञाते । यदि तौ सद्गतिं निनीषसि तर्हि तदुपायं शृणु–या भाद्रसितपञ्चमी सैव ऋषिपञ्चमी निगद्यते । तस्यामुपोष्य चतुर्विधाहारो हातव्यः, तद्दिने च भाटक जिघृक्षया वृषभः कस्मैचिन्न दातव्यः । उपवासाऽशक्तौ च केवलं दशमुष्टिमितं खिन्नमाषमात्रमशनीयम् । एतत्प्रभावादेव तौ सुगतिं लप्स्येते । ब्राह्मणोऽपि तथा विधाय पितरौ सद्गतिं निनाय । तद्दिनादेव सर्वत्र लोके ऋषिपञ्चमी व्यवजह्रुः ।

१२ वाचनक्रमनिरूपणम्—

तत्रेदानीन्तनी वाचनापरिपाटी चेत्थं वर्त्तते–भाद्रकृष्णामायां पीठिकया सह प्रथमं द्वितीयञ्च व्याख्यानं समापयेत् । शुक्लप्रतिपदि तृतीयचतुर्थे व्याख्याने, शुक्लद्वितीयायां पञ्चमषष्ठे, तृतीयायां सप्तमाष्टमव्याख्याने समापयेत् । चतुर्थ्यान्तु तन्मूलमात्रं परिपूर्णं श्रावयेत् । नवमव्याख्यानवाचने समापने च कालानियमो नास्ति । पर्युषणानन्तरमपि तत्समापयेयुः । एतद्वाचनारम्भवेलायामादावेषा महामङ्गलमयी गाथा वक्तव्या—

‘ पुरिमचरिमाण कप्पो, मंगलं वद्धमाण तित्थम्मि ।
इह परिकहिया जिण–गणहराइ थेरावली चरित्तं ॥ ’

प्रथमान्तिमजिनेशयोस्तीर्थे कल्पसूत्रमवश्यं वाचनीयम् । अत्राधिकारत्रयी वर्त्तते । प्रथमे जिनानां चरित्राणि १, द्वितीये गणधरादिस्थविरावली २, तृतीये चाष्टाविंशतिधा साधुसमाचारी ३।

इति कल्पपीठिका समाप्ता ।

# अथ ग्रन्थारम्भः ।

णमो अरिहंताणं, णमो सिद्धाणं, णमो आयरियाणं, णमो उवज्झायाणं, णमो लोए सव्वसाहूणं । " एसो पंचनमुक्कारो, सव्वपावप्पणासणो । मंगलाणं च सव्वेसिं, पढमं हवइ मंगलं ॥ १ ॥ "

१३ षडारकस्वरूपदर्शनम्—

साम्प्रतं प्रथमाधिकारे वर्त्तमानशासनोपकारितया प्रथमं श्रीमहावीरप्रभुचरित्रं वर्णयितुमारकाणां स्वरूपमाख्याति—अथाऽमुष्मिञ्जम्बूद्वीपे भारतैरावर्त्तक्षेत्रयोरवसर्पिण्युत्सर्पिण्यौ कालौ स्तः। यत्र प्रतिसमयं रूपरसादीनां ह्रासः सावसर्पिणी, प्रतिसमयं च यत्र रूपरसादयो वर्द्धन्ते सोत्सर्पिणी निगद्यते । ते प्रत्येकं दशकोटाकोटिसागरोपमप्रमाणे स्तः, एकैकस्याश्च षडारका जायन्ते। इत्थमेव धातकीखण्डपुष्करावर्त्तद्वीपीयभरतैरावर्त्तयोरप्येतदवगन्तव्यम् । तेषु प्रथमः सुषमसुषमा नामा चतुष्कोटाकोटीसागरप्रमाणो वर्त्तते । तत्र मनुजास्तिर्यञ्चश्च त्रिपल्योपमाऽऽयुषो जायन्ते । तेषां शरीरञ्च त्रिकोशमात्रं भवति । पार्श्वयोरस्थीनि च षट्पञ्चाशदधिकानि द्विशतानि । कल्पवृक्षफलमपि मसूरिकाप्रमाणं त्रिभिर्दिनैरश्नन्ति । एकोनपञ्चाशद्दिनावधियुग्मजातमवन्ति, व्रजन्ति च पश्चाद्देवलोकम् । इत्यवसर्पिण्याः प्रथमारकस्योत्सर्पिण्याः षष्ठारकस्य च स्थितिरस्ति १, द्वितीयः सुषमा नामा त्रिकोटाकोटिसागरोपमो वर्वर्त्ति । तत्र मनुष्यस्तिर्यङ् च द्विपल्योपमायुरुत्पद्यते, चतुष्षष्टिदिवसान्येवाऽपत्यं परिपालयते, द्विक्रोशप्रमाणं शरीरम् । द्वाभ्यां दिनाभ्यां बदरप्रमाणमभ्यवहरते । पार्श्वयोरस्थीन्यष्टाविंशत्यधिकशतानि भवन्ति । इत्यवसर्पिण्या द्वितीयारकस्योत्सर्पिण्याः पञ्चमारकस्य च स्थितिरभिहिता २, तृतीयः सुषमदुःषमा नामा द्विकोटाकोटिसागरोपमप्रमाणो वर्त्तते । तत्र युग्मजातमनुजतिरश्चोरेकपल्यो-

पमायुरुत्पद्यते । क्रोशैकमात्रं शरीरम् । एकाहमतिक्रम्य धात्रीफलप्रमाणमाहारं कुर्वन्ति । पार्श्वयोरस्थीनि चतुष्षष्टिपरिमितानि जायन्ते । एकोनाऽशीतिदिवसान्येव सन्ततिं परिपाल्य स्वर्यान्ति । इत्यवसर्पिण्यास्तृतीयारकस्योत्सर्पिण्याश्चतुर्थारकस्य च पद्धतिरुक्ता ३, तुरीयो दुःषमसुषमा नामा द्विचत्वारिंशत्सहस्रोणैककोटाकोटिसागरोपमोऽस्ति । तत्राऽऽयुरेकपूर्वकोट्यब्दप्रमाणम् । शरीरञ्च पञ्चशतधनुःप्रमाणम् । स्वेच्छाप्रमाणमशनम् । मृत्वा च चतुर्गतिषु कामपि गतिमधिगच्छन्ति, क्षीणकर्मा च कश्चिन्मोक्षमपि याति । इत्यवसर्पिण्याश्चतुर्थारकस्योत्सर्पिण्यास्तृतीयारकस्य च रीतिरुक्ता ४, पञ्चमो दुःषमनामाऽस्त्येकविंशतिसहस्राऽब्दप्रमाण आरकः । तत्र प्राणिनां शरीरं सप्तहस्तद्वयसम् । विंशत्यधिकशतमायुः[1] । मृत्वा च चतुर्गतिमध्ये कामपि गतिं प्रारब्धानुसारेण व्रजन्ति । परमत्र सर्वकर्माणि क्षपयित्वा कोऽपि मोक्षं व्रजितुं नार्हति । इत्यवसर्पिण्याः पञ्चमारकस्योत्सर्पिण्या द्वितीयारकस्य च स्थितिरभाणि ५, षष्ठो दुःषमदुष्षमा नामैकविंशतिसहस्रवर्षप्रमाणकोऽस्त्यारकः । अत्र हि षोडशवर्षमात्रमायुः, द्विहस्तमात्रं शरीरम्, बिलवासी क्रूरकर्मोज्झितनीतिमार्गश्च जीवो भवति, अतएव दुर्गतिमेवोपयाति । इत्यवसर्पिण्याः षष्ठारकस्योत्सर्पिण्याः प्रथमारकस्य च स्थितिरुक्ता ६ । इत्थमुभयकालयोरवसर्पिण्युत्सर्पिणीलक्षणयोरारकाणां द्विरावर्त्तनं यावज्जायते, तावद्विंशतिकोटाकोटिसागरोपमः कालो याति ।

१४ श्रीवीरविभोः सप्तविंशतिभवप्रदर्शनम्—

ईदृशाऽवसर्पिण्यास्तृतीयारके सार्धाष्टमासाधिकत्रिवर्षावशिष्टे निर्वृते भगवान् श्रीऋषभदेवः । तदनु तत्कुलाऽऽविर्भूतश्रीअजितादिविंशतितीर्थपतीनां हरिवंशवंशावतीर्णमुनिसुव्रतनेमिनाथयोरित्थं द्वाविंशति-

१ इतोऽधिकमप्यायुर्भरतक्षेत्रीयोत्तरदिग्भागे सम्भवतीति वित्त ।

तीर्थङ्कृतां निर्वाणे जाते, तुरीयारकीयसार्धाष्टमासाधिकपञ्चसप्ततिवर्षेऽवशिष्टे, दशमस्वर्गीयातिरमणीयपुष्पोत्तरवरपुण्डरीकाविमाने विंशतिसागरोपमामुत्कृष्टां स्थितिं भुक्त्वा क्षपयित्वा च देवगतिनामकर्माणि, ततश्च्युत आषाढशुक्लषष्ठ्यां मध्यरात्रेऽस्मिञ्जम्बूद्वीपे दक्षिणार्धभरते ब्राह्मणकुण्डनगरे कोडालगोत्रीयऋषभदत्तब्राह्मणस्य पत्न्या जालन्धरगोत्राया देवानन्दाया ब्राह्मण्याः कुक्षावुत्तराफल्गुन्यां श्रमणो भगवान् महावीरोऽवततार ।

पुरैकदा भरतश्चक्री भगवन्तमादिनाथमपृच्छत्—स्वामिन् ! अस्यामवसर्पिण्यां के के तीर्थङ्कराः कुत्र कुत्र च कुले समुत्पत्स्यन्ते ?, भगवानाख्यत्—एकविंशतितीर्थपा इक्ष्वाकुकुले, द्वौ च हरिवंशकुले, चरमश्च वर्द्धमानो ज्ञातकुले जनितारः । इत्थं प्रथमजिनेशसूचितस्याऽमुष्य तीर्थकृतः सप्तविंशतिभवानाह—अमुष्मिञ्जम्बूद्वीपे पश्चिममहाविदेहे प्रतिष्ठानपत्तने कश्चिन्नृपादेशकरो नयसारनामा पटहवादको न्यवात्सीत् । स चैकदा राजवचसा बहूनि शकटानि पुरुषांश्च लात्वा काष्ठार्थे काननमगमत् । तत्र कस्यचित्तरोरधस्तात्स्वयमुपाविशत्, चराश्च काष्ठानि छेत्तुं लग्नाः । तदवसरे सार्थच्युता विस्मृतमार्गाः कियन्तः साधवस्तत्राऽऽययुः । अमूनालोक्य प्रमुदितः सुदिनं मन्यमानः स नयसारस्तदभिमुखमागत्य भक्त्या विधिवदभिवन्द्य शुद्धमाहारं तेभ्यः प्रायच्छत् । साधवोऽपि तं शुद्धं मङ्गलमयं धर्ममुपादिशन् । तन्निशम्य स सम्यक्त्वमीयिवान् । तदनु तद्दर्शितमार्गेण साधवः स्वगणे समागच्छन् । यावदयं जीवः सम्यक्त्वं नाऽऽसादयति, तावद्भवा नैव परिगण्यन्ते । याते च सम्यक्त्वे क्रियते भवपरिगणना, इति प्रथमो भवः । तदसौ सकलमायुरुपभुज्य प्रान्ते शुभध्यानेन मृत्वा प्रथमं देवलोकमध्यगच्छदिति द्वितीयः । तत्र चैकं पल्योपममायुरुपभुज्य ततश्च्युत्वा तृतीये भवे श्रीऋषभदेवस्य सूनोर्भरतचक्रिणो मरीचिनामा सूनुरभवत् । स

चैकदा श्रीप्रथमजिनविभोर्देशनामाकर्ण्य दीक्षां ललौ । तदाऽन्येऽपि भरतचक्रिणः पञ्चशतपुत्राः सप्तशतपौत्राश्च दीक्षाञ्जगृहुः । एकदा निदाघे सन्तप्ताङ्गो मरीचिः स्नातुमैच्छत् । तदा संयमपरिपालनमति-दुर्वहं जानन् गृहीतदीक्षामवितुमप्यशक्नुवन् गृहेऽपि स्थातुमनिच्छन् साधुवेषं विहाय मनःकल्पितं नवं त्रिदण्डिनो वेषं बिभरामास । पृष्टे सत्येवमवोचत्—साधवो हि त्रिदण्डैर्मुक्ताः सन्ति, अहन्तु तैर्युक्तोऽस्मि, अतोऽहं त्रिदण्डिवेषं बिभर्मि । साधवो द्रव्यतो भावतश्च लुञ्चन्ति, अहन्तु तदशक्तत्वाच्छिखां वहन् क्षौरमेव विदधामि । साधवः खलु सर्वेभ्यः प्राणातिपातादिभ्यो विरमन्ति, ते च शीलसुगन्धिना सुरभी-कृता लसन्ति, मम तु तदभावाद्रक्चन्दनविलेपनमेव घटते । साधूनां मोहलोभादयो नैव सन्ति, मम तु मोहादिर्वर्त्तते, अतश्छत्रं पादुके च भरामि । साधवः समस्तकषायविमुक्ता भवन्ति, अहन्तु तत्सहितत्वा-त्काषायाम्बरं धरामि । साधवो विशुद्धत्वान्न स्नान्ति, नास्म्यहं तथे-त्यल्पवारिणाऽचित्तेन स्नामि । इत्थं कल्पितवेषभाक् कमण्डलुपाणिः प्रभोः समवसरणाद्बहिरेवोपविशति स्म । पृच्छकांस्तु तथ्यमेव जल्प-ति स्म । ये पुनर्मोक्षार्थिनस्तदन्तिकमागच्छन्ति स्म, तेभ्यः साधुमार्गं यथावदुपदिश्य श्रीऋषभदेवपार्श्वे दीक्षां दापयन् भगवता सह विचर-न्नासीत् । अथैकदा श्रीऋषभदेवस्वाम्ययोध्यानगरीमाययौ । तत्र भग-वन्तं वन्दितुं भरतचक्री समागत्य प्रभुमभिवन्द्य पृच्छति स्म—प्रभो ! अमुके समवसरणे सोऽस्ति कश्चिद्योऽग्रिमतीर्थङ्करो भविता ?, प्रभुणा व्याहारि—समवसरणे कोऽपि नास्ति, किन्तु तद्बहिर्यस्त्रिदण्डिवेषधारी मरीचिनामा तव सूनुरास्ते, स एव चतुर्विंशतितमस्तीर्थङ्करो भविता महावीर नामा । अयमेव खल्वस्मिन् भरतक्षेत्रे पोतनपुरे त्रिपृष्ठनामा प्रथमो वासुदेवो भविष्यति, महाविदेहक्षेत्रे मूकानगर्यां प्रियमित्र-नामा चक्रवर्त्तित्वमनुभविष्यतीति भगवद्वाक्यमाकर्ण्य प्रहृष्टमना भर-

तच्चक्री मरीचिमभिवादयितुं समवसरणाद्वहिस्तदभ्याशमागत्य विधिवदभिवाद्य तमवोचत-मरीचे ! 'अहं त्वयि भविष्यद्वासुदेवत्वचक्रवर्त्तित्वे च नाऽभिवन्दे, किन्तु भविष्यन्तं चतुर्विंशतितमं महावीरनामानं तीर्थङ्करं वन्दे, इति निगद्य भरतचक्री स्वस्थानमगमत् । मरीचिरसीमानन्दं मनसि बिभराञ्चकार, जगाद च यन्मे पितामहस्तीर्थंकारः, पिता च चक्रवर्त्ती वर्त्तते । स्वयमप्यहं वासुदेवत्वचक्रवर्त्तित्वयोः सुखमनुभूय चरमतीर्थङ्करपदमाप्स्यामि । महन्मे कुलमित्थं निगदन् हर्षोद्रेकाद्भुजौ च ताडयन् करतालिकां ददानो नरीनृत्यते स । तेन च नीचगोत्रकर्माऽवध्नात् । यतः—जातिकुललाभैश्वर्यबलरूपतपःश्रुतैरष्टधा मदकरणेन जीवो हीनजात्यादिकमुपैति । एकदा मरीचेः शरीरे रोगो जातः, परन्त्वसंयतत्वाच्चैकोऽपि साधुस्तद्वैयावृत्त्यं नाऽकरोत् । तदा मरीचिनाऽचिन्ति—यदाऽयं रोगो मोक्ष्यति, तदैव कमप्येकं शिष्यं करिष्यामि, यो मामीदृशे संक्लेशे सेविष्यते । अथ कियद्भिर्दिवसैस्तस्य रोगो न्यवृतत् । ततः कपिलनामा राजपुत्रस्तत्पार्श्वमागात् । स मरीचिमुखाद्धर्मोपदेशमाकर्ण्य प्रत्यबोधि । ततो दीक्षां ययाचे । मरीचिनाऽभाणि—भोः ! भगवतः पार्श्वं याहि, तत एव दीक्षां गृहाण । तदनु कपिलो दीक्षार्थी ऋषभदेवपार्श्वमागत्य समवसरणे क्षणमुपविश्य, पुनर्मरीचिसमीपमागत्य चचक्षे—स तु राज्यलीलां विदधाति, धर्मस्तु मनागपि तत्र नाऽलोकि । भवतामपि पार्श्वे विद्यते न वा धर्मः? इति कपिलोक्तेः पुनः पुनस्तथ्येन धर्मवचनेन मरीचिस्तं प्रतिबोधयामास, तथापि कर्मबाहुल्येन स नैव मेने । तदा सकषायो मरीचिः स्वधर्मस्थापनकामनया शिष्यलोभात्तमेवमवादीत्—कपिल ! 'यदत्रापिधर्मस्तत्रापि धर्मः' अतएव दीक्षां सुखेन गृहाण, दास्याम्यहं ते दीक्षाम् । इत्थं तस्मै दीक्षां प्रदाय मरीचिरुत्सूत्रं बभाषे । प्रान्ते तदनालोचितकर्मयोगादेककोटाकोटीसागरप्रमाणसंसारकारिकर्मोपार्जनेन क्रमशश्चतु-

रशीतिलक्षपूर्वमायुरुपभुज्य ममार। चतुर्थे भवे पञ्चमदेवलोके दशसागरोपमायुष्को देवोऽभवत्। ततोऽप्यायुषि परिपूर्णे च्युत्वा कोल्लागसन्निवेशेऽशीतिलक्षपूर्वायुष्कः कौशिकनामा विप्रोऽभूत्। अत्रापि प्रान्ते तापसीं दीक्षां गृहीत्वाऽऽयुषः क्षये मृत्वा संसारे चिराय बंभ्रमाञ्चकारेति पञ्चमो भवः। षष्ठे भवे स्थूणानगर्यां पुष्पमित्रनामा ब्राह्मणोऽजनि। तत्रापि त्रिदण्डिनस्तापसीं दीक्षां लात्वा द्विसप्ततिलक्षपूर्वमायुर्बुभुजे। सप्तमे भवे प्रथमदेवलोके मध्यमायुर्देवोऽभवत्। अष्टमे भवे ततश्च्युतश्चैत्यसन्निवेशे षष्टिलक्षपूर्वायुरग्निद्योतनामा विप्रो भूत्वा त्रिदण्डितापसवेषः कालमकरोत्। नवमे भवे द्वितीयस्वर्गे मध्यमायुष्को देवो बभूव। ततश्च्युत्वा दशमे भवे मन्दिरसन्निवेशे षट्पञ्चाशल्लक्षपूर्वायुरग्निभूतिनामा विप्रो भूत्वा धृतत्रिदण्डिवेषो ममार। एकादशे भवे तृतीयदेवलोके मध्यमायुर्देवत्वेनोत्पेदे। ततश्च्युतः श्वेताम्बिकायां नगर्यां चतुश्चत्वारिंशल्लक्षपूर्वायुर्भारद्वाजनामा द्विजो जज्ञे। तत्रापि त्रिदण्डिवेषेणाऽम्रियत, इति द्वादशो भवः। त्रयोदशे च भवे चतुर्थदेवलोके मध्यमायुर्देवत्वेनोदपद्यत। ततश्च्युत्वा चिराय संसारे भ्राम्यन् राजगृहनगरे चतुश्चत्वारिंशल्लक्षपूर्वायुष्कः स्थावरनामा विप्रोऽभवत्त्रापि त्रिदण्डितापसतां दधन्ममारेति चतुर्दशो भवः। पञ्चदशे भवे पञ्चमस्वर्गे मध्यमायुर्देवो जज्ञे। ततश्च्युत्वा चिरं संसारे भ्रामं भ्रामं राजगृहनगरे चित्रनन्दिनाम्नः क्षितिपतेः प्रियङ्गुराज्ञ्यामुत्पन्नो विशाखनन्दिपुत्र आसीत्। तस्य राज्ञः कनीयान्भ्राता विशाखभूतिर्युवराज आसीत्। धारणी नाम्नी तत्पत्न्यभूत्, तस्या गर्भे मरीचिजीवः पुत्रत्वेनाऽवातरत्। तस्य विश्वभूतिनाम दधाते मातापितरौ। जाते च यौवने वयसि बहुरूपवत्या गुणवत्या कन्यया सत्रा पित्रा परिणायितः। प्रत्यहं स तया सह नृपोपवने रन्तुं व्रजति स्म। एकदा विशाखनन्दी राजकुमार आरामे क्रीडन्तमेनमपश्यत्। मनसि दध्यौ—यत्रोपवने

राजपुत्रोऽहं न क्रीडामि, तत्राऽसौ युवराजपुत्रो विश्वभूतिः स्त्रिया सह सदा रमते । अयुक्तमेतदत एनं निरुध्याऽहमेवात्र सस्त्रीकः क्रीडामि चेद्वरमित्यवधार्य नृपमुवाच—पूज्य ! अहं हि तत्रोपवने रिरंसामि, अतो विश्वभूतिं निवारय । नृप आख्यत्—वत्स ! अहमचिरादेव केनापि व्याजेन ततस्तं निष्काश्य तुभ्यं तत्प्रदास्यामीत्याश्वास्य पुत्रमतूतुपत् । पश्चाद्राजा स्वयमेव सिंहनृपं निग्रहीतुं प्रयातीति सर्वत्र नगरे पटहं वादयामास । तदाकर्ण्य विश्वभूतिरवदत्—स्वामिन् ! वराकमेकं शृगालं ग्रहीतुं केसरी नैव प्रयाति, अतस्तत्र ते गमनं न घटते । अहमेव तत्र गत्वा बद्ध्वा तमत्रानेष्यामीति निगदन् सहसैन्यगणैर्विश्वभूतिस्तं सिंहराजमाक्रमितुं चचाल । गते च तस्मिंस्तत्पत्नीं राजवाटिकातो निष्काश्य विशाखनन्दिनं तत्र न्यवासयन्नृपतिः । कियद्भिर्दिनैस्तमानीय नृपाय समर्पयामास । नृपादयो भृशं प्रशशंसुः । अथ पुरेव तस्यां वाटिकायां क्रीडायै प्रविशन् विश्वभूतिः प्रतिहारिणा न्यवारि । व्याहारि च—भवानिदानीमन्तः प्रवेष्टुं नार्हति, यदस्यां विशाखनन्दी क्रीडन्नास्ते। तदा राज्ञः प्रपञ्चं विदित्वाऽसारममुं संसारं धिक्कुर्वन् व्यरंस्त, तथापि विपक्षपक्षदलनदक्षनिजबलदर्शनाय द्वारास्थितं महातरुं मुष्टिना समूलं भूमौ निपात्य यावानेव काल एतस्य तरोरुन्मूलने लग्नस्तावानेव वैरिसमुच्छेदनेऽपि मे लगिष्यति, परन्तु लोकापवादभिया तदकृत्वैव परिव्रजामीति व्याजहार विश्वभूतिः । ततः सम्भूतिविजयमुनिपार्श्वे दीक्षितो बभूव । मासक्षपणादिबहुदुष्करतपांसि विदधद्विश्वभूतिमुनिरेकदा मथुरानगरीमागात् । तत्र च मासक्षपणपारणाकृते गोचर्यै गच्छन्नेकस्यां प्रतोल्यां नवप्रसूतया गवा हतो दौर्बल्यादधः पपात । तदवसरे सन्निधावेव श्वशुरवेश्मनि गवाक्षे संस्थितो विशाखनन्दी तमुपलक्ष्य सहासमवादीत्—विश्वभूते ! अद्य ते तद्बलं क्व गतम् ? येन पुरैकेन मुष्टिना महान्तमपि तरुमभाङ्क्षीः ?, तदाकर्ण्य समुद्वीक्ष्य तमाह विश्वभूतिः—

रे ! इदानीमपि मामुपहससि तर्हि पश्य मे बलमिति जल्पन् कराभ्यां शृङ्गं गृहीत्वा व्योम्नि नीत्वा भूमौ गामपातयत् । किञ्चात्र जन्मनि मया यदकारि तपस्तत्प्रभावाद्भवान्तरे तव हन्ता स्यामिति निदानमकरोत् । तदनु कोटिवर्षाणि चारित्रमवित्वा प्रान्ते निरशनो ममारेति षोडशो भवः । सप्तदशे भवे सप्तमस्वर्गे सप्तदशसागरोपमायुष्कोदेवो जातः ।

अथ पोतनपुरे प्रजापतिनाम्नो भूपतेर्धारणी नाम्न्या राज्ञ्याः कुक्षौ चतुर्भिः स्वप्नैः संसूचितः सूनुरचलनामाऽजनिष्ट । तस्यैव राज्ञो मृगावती नाम्न्येका दुहिताऽऽसीत् । स चैकदा लग्नचिन्तायै सर्वैराभरणै श्चीनांशुकैश्च विभूषिता लसत्तारुण्यपरिपूर्णा मात्रा नृपान्तिके प्रेषिता । तदा सदसि समायातां स्वपुत्रीमतिरूपवतीं तरुणीमालोक्य कामकिङ्करीभूतो राजा स्वयमेव तामुद्वोढुमचकमत । ततो लोकापवादभिया सभ्यानित्थं जगाद–सभ्याः ! अस्मद्राज्ये यदस्ति श्रेष्ठं वस्तु तत्केन भोक्तव्यम् ? तच्छ्रुत्वा सभ्या जगदुः–यद्भवति सारतरं जगत्यामस्यां तस्य भोक्ता भवानेवेति लोकैः कथिते राजाऽजल्पत्–यत्कथ्यते भवद्भिस्तत्तथ्यमेव, अतोऽहं सर्वतः श्रेष्ठमिदं कन्यारत्नमन्यस्मै नैव दित्सामि, किन्तु स्वयमेव परिणिनीषामीति व्याहृत्य तां परिणीय स्वैरं सुचिरं तस्यामरंस्त । अथ स्वर्गाच्च्युतो विश्वभूतिजीवो मृगावत्या गर्भेऽवततार । तस्मिंश्चावतीर्णे मृगावती सप्तमहास्वप्नानद्राक्षीत् । नवमासपूर्त्तौ सा पुत्रं सुषुवे । राज्ञा महामहश्चक्रे, विदधे च तदीयमभिधानं त्रिपृष्ठ इति । अनुक्रमेणाऽसौ यौवनमापत्, इतश्च शङ्खपुरोपकण्ठे तुङ्गगिरिगुहायां विशाखनन्दिर्जीवो बभूव सिंहः । तस्यैव गिरेः समीपे तत्कालीनस्याऽश्वग्रीवाभिधप्रतिवासुदेवस्य क्षेत्रमासीत् । तद्रक्षकानशेषांश्च समागतान् पुरुषानजीघतत्स सिंहः । अतोऽश्वग्रीवो राजा स्वसेवकीभूतनृपाणामेवैकैकं प्रत्यब्दं तच्छालिक्षेत्रं गोप्तुं वारक्रमेण समा-

दिशत् । ततो वारक्रमेण तद्रक्षणं तस्मिन् वत्सरे प्रजापतिराजस्याऽऽययौ । अतएव तत्कृते जिगमिषुं पितरं त्रिपृष्ठो जगाद–त्वं मागाः, अहमेव व्रजामि । इत्थं राजानं निवार्य ज्यायसा भाविबलदेवेन गौतमजीवेनाऽचलाख्येन बन्धुना सत्रा ससैन्यः परिहितकवचो रथारूढश्चचाल । अथ रथरवमाकर्ण्य स केसरी रोषाद्रक्तलोचनो बहिरागत्य तस्थौ । तमालोक्य त्रिपृष्ठो व्यमृशत्–यदसौ पादचारी वर्त्तते, कवचं नो बिभर्त्ति, शस्त्रं वा नो धत्ते । अतो मयापि यानं कवचं शस्त्रञ्च विसृज्य रथादवतीर्य स्वयमेक एवाऽमुना योद्धव्यम् । तदनु रथादवतीर्य तमेवमजल्पत्–रे ! तूर्णमुत्तिष्ठ ममाग्रे समायाहीति निशम्य सिंहोऽपि युयुत्सुः सन्ननाह । ततो व्यात्ताननं जिघांसया समागच्छन्तं तं विलोक्य त्वरया पूर्ववैरादोष्ठं गृहीत्वा विददार । विदीर्णवदनोऽपि स यदा व्यसुर्नाभूत्तदा त्रिपृष्ठस्याऽचलसारथिस्तमवादीत्–रे ! किं शोचसि ?, यथासि त्वं मृगाणामीशस्तथाऽयं त्वद्धन्तापि नराणामीशिता वर्त्तते, कश्चित्साधारणो ना न जघान । इति श्रवणानन्तरमेव मृगारातिर्मृत्वा नरकं ययौ । तच्छवञ्च ग्राममानीयपश्यतां लोकानामग्रे निधाय व्याजहार–यदमुं शालिनाशकं बहुजनघातिनं सिंहमहमहनम् । मद्दोर्दण्डप्रतापेनाऽश्वग्रीवभूपतिः सुखेन शालीनश्नातु । लोकमुखात्तन्निशम्याऽश्वग्रीवो राजा भृशं चुकोप । ततः ससैन्यस्तेन सत्रा योद्धमाययौ, प्रवृत्ते च परस्परं युद्धे निहते च दलद्वये जनसमूहे प्रचण्डभुजदण्डोऽसौ त्रिपृष्ठस्तत्प्रेषितेनैव चक्रेणाऽश्वग्रीवस्य शिरश्चिच्छेद । निहते च तस्मिन् देव्यो जयजयारावं विदधत्यस्त्रिपृष्ठोपरि कुसुमानि विकीर्य जगदुः–यदमुके भरतखण्डेऽयमेव प्रथमो वासुदेवोऽजनीति । तदनु क्रमशः खण्डत्रयं संसाध्य वासुदेवोचिताऽसीमं सुखं बुभुजे । अथैकदा नाटके प्रारब्धे शय्यापालकमवादी-

द्राजा—मयि निद्राणे गाथकमेनं व्यस्राक्षीः । अथ जागृतः पुरेव गायन्तं तमवलोक्य शय्यापालकमगदत्—किं रे ! मयि सुप्ते कथमेनं न न्यषेधी-वृतः ?, सोऽवक्—स्वामिन् ! श्रुतिसुखपारवश्यतया प्रभोरादेशमहं व्यस्मार्षम् । तदा प्रकुपितो राजा तच्छ्रवसोरत्युष्णशीशकं धारितवान्, तेन शय्यापालको मृत्वा नरकमगमत् । इत्थमसौ त्रिपृष्ठो वासुदेवभवे बहुविधघोरपापमर्जयंश्चतुरशीतिलक्षवर्षमायुर्भुक्त्वाऽशीतिधनुःप्रमाणकं-शरीरमत्याक्षीदित्यष्टादशो भवः ।

एकोनविंशतितमे भवे सप्तमे नरके समुदपद्यत । ततो विंशतितमे भवे सिंहो जज्ञे । ततो मृत्वा तुरीयं नरकमाशिश्रियत, इत्येक-विंशतितमो भवः । ततो मृत्वा चिरं संसारे भ्रामं भ्रामं रथनूपुरन-गरे प्रियमित्रक्षितिपस्य विमलाराज्ञ्याः कुक्षौ पुत्रत्वेनाऽवातरत् । पितृभ्यामचल इत्यभिधाऽकारि, क्रमशः शुक्लपक्षे शशधर इव प्रतिघस्त्रं वर्धमानः सकलकलाकुशलस्तारुण्यमीयिवान् । ततस्तस्मै राजा यौवराज्यं प्रायच्छत् । सचैकदा वने क्रीडन्ननुकम्पया पाशान्मृगं मुमोच । तेन च मनुष्यायुर्बबन्ध, प्रान्ते सुदीक्षित उग्रं तपस्तप्त्वा चक्रवर्त्तिपददायि-कर्मोपार्ज्य मासमेकं निरशनं विधाय ममारेति द्वाविंशतितमो भवः । ततश्च्युत्वा पश्चिममहाविदेहे मूकानगर्यां धनञ्जयाभिधो राजास्ति, तस्य धारणी राज्ञ्यस्ति, तस्या गर्भे समुद्पादि । तस्मिन् गर्भगते धारणी चतुर्दशस्वप्नानपश्यत् । पूर्णे मासे शुभवेलायां सा राज्ञी पुत्रं सुषुवे, महतोत्सवेन पिता द्वादशेऽहनि ' प्रियमित्र ' इति नाम ददे । तदनु षट्खण्डान् साधयित्वा चक्रवर्त्ती बभूव । प्रान्ते च पोटिलाचार्य-समीपे दीक्षां गृहीत्वा कोटिवर्षाणि चारित्रं परिपाल्य सकलं चतुर-शीतिलक्षपूर्वमायुर्भुक्त्वा मृत्युमध्यगच्छदिति त्रयोविंशतितमो भवः । चतुर्विंशतितमे भवे शुक्राऽभिधे सप्तमे देवलोके सप्तदशसागरोपमायुर्दे-

वत्वेनोदपादि। ततोऽस्मिन्नेव भरतक्षेत्रे छत्रिकापुर्यां जितशत्रुराजस्य भद्राराज्ञ्याः कुक्षौ पञ्चविंशतिलक्षवर्षायुष्को 'नन्दन'नामा राजपुत्रो जज्ञे। तत्र चतुर्विंशतिलक्षवर्षाणि गार्हस्थ्यं सुखमनुभूय पोटिलाचार्यपार्श्वे दीक्षां गृहीत्वा लक्षवर्षाणि चारित्रमवित्वा यावज्जीवं मासक्षपणमकरोत्। तेन समाराधितविंशतिस्थानकतपास्तीर्थङ्करनामकर्मनिकाचितमर्जितवान्। प्रान्ते मासमेकमनशनं विधाय शरीरमजहादिति पञ्चविंशतितमो भवः। ततः षट्विंशतितमे भवे प्राणतदेवलोके पुष्पोत्तरावतंसकविमाने विंशतिसागरोपमायुर्देवो बभूव। ततश्च्युत्वा मरीचिभवे विहितमदयोगेन नीचगोत्रकर्मोदयात्सप्तविंशतितमे भवे ऋषभदत्तविप्रस्य पत्न्या देवानन्दायाः कुक्षाववततार। इत्थं पुरा भरतचक्रिणा पृष्टो भगवाञ्छ्रीऋषभदेवो यदभ्यधान्मरीचिजीवो भविष्यति महावीरनामा तीर्थङ्करस्तत्सत्यतामाप।

१५ देवानन्दांप्रति स्वप्नफलकथनादि—

अथासौ भगवान् महावीरो यदा देवानन्दागर्भमशिश्रियत, तदा देवलोकादहं च्योष्य इति जानन्नप्यसौ च्यवमानो नो विजानातिस्मि, एकसामयिकत्वात्। अनन्तरं देवलोकाच्च्युतोऽहं गर्भे संक्रान्तोऽस्मीत्यपि जानाति। यस्यां रजन्यां श्रमणो महावीरस्तस्या गर्भे सञ्चक्राम, तस्यां शयनीये नाऽतिसुप्ता नातिजाग्रती देवानन्दा ब्राह्मणी प्रशस्तान् कल्याणकारकान् सश्रीकान् मङ्गलमयान् धनधान्यप्रदांश्चतुर्दशमहास्वप्नानद्राक्षीत्। यथा—हस्ती १, वृषभः २, सिंहः ३, साभिषेकालक्ष्मीः ४, पुष्पमाला ५, चन्द्रमाः ६, सूर्यः ७, ध्वजः ८, पूर्णकलशः ९, सपद्मं सरः १०, सागरः ११, देवविमानम् १२, रत्नराशिः १३, निर्धूमवह्निश्च १४। इमांश्चतुर्दशमहास्वप्नान् विलोक्य प्रवुद्धा मनसा मोमुद्यमाना निःसीमानन्दयोगाद् वालकदम्बकल्पविकासितरोमराजिः सन्तुष्टचित्ता सा तानशेषान् संस्मृत्य शय्याया उत्थाय निरुत्सुका चाञ्चल्यरहिता

राजहंसीव गच्छन्ती भर्त्तुः पार्श्वमागत्य जयविजयशब्दाभ्यामेनं वर्द्धयन्ती सती, पथि श्रमोद्भूतस्वेदबिन्दून् व्यपगच्छन्ती, भद्रासने समुपविश्य भर्त्तारं कृताञ्जलिरजल्पत्—स्वामिन्! अहमस्यां रात्रौ हस्त्यादिचतुर्दशस्वप्नान् प्रैक्षिषि, तत्फलं मे किं भविता ?, प्रमुदितमनाः पुलकिताऽशेषगात्रः स ऋषभदत्तो विप्रस्तामेवमवादीत्—प्रेयसि ! या कामिनी धन्यानेतान् प्रेक्षते, सा तूर्णं धनमङ्गलादिकं मनोवाञ्छितं पुत्रञ्चाधिगच्छति । त्वमपीदृशस्वप्नावलोकनेन सार्धसप्तदिनाधिकनवमासात्परं मृदुतरपाणिपादमहीनाङ्गं समस्तशुभलक्षणलक्षितं परिपूर्णपञ्चेन्द्रियं सलक्षणव्यञ्जनं सद्गुणाधारं समानोन्मानं पुत्रं प्रसविष्यसे, निरुपमं धनं सुखञ्च लप्स्यसे ।

तत्र पुंसामधिशरीरं यत्सुकृतरेखादि तल्लक्षणं निगद्यते, ‘ सहजं लक्षणमिति वचनात् । ’ चक्रवर्त्तितीर्थङ्करयोर्देहे वसूत्तरसहस्रं, बलदेववासुदेवयोश्चाऽष्टोत्तरशतं लक्षणं जायते । इतरेषां छत्रम् १, पद्मम् २, धनुः ३, रथः ४, वज्रम् ५, कूर्मः ६, अङ्कुशः ७, वापी ८, स्वस्तिकः ९, तोरणम् १०, सरः ११, सिंहः १२, वृक्षः १३, शङ्खः १४, चक्रम् १५, गजः १६, समुद्रः १७, कलशः १८, प्रासादः १९, मत्स्यः २०, यवः २१, यूपः २२, स्तूपः २३, कमण्डलुः २४, गिरिः २५, चामरः २६, दर्पणः २७, वृषभः २८, ध्वजः २९, लक्ष्मीः ३०, माला ३१, मयूरश्च ३२, अमूनि द्वात्रिंशल्लक्षणानि भाग्यवतां पुंसां पाणितले पादतले च वर्त्तन्ते ।

येषां नख–चरण–हस्त–जिह्वौष्ठतालु–नयनप्रान्तानि सप्त रक्तानि भवन्ति, ते पुरुषा भाग्यभाजो जायन्ते; भुञ्जते च सप्ताङ्गां श्रियम् । येषां कक्षा–हृदय–ग्रीवा–नासिका–नख–मुखानीमानि षडुन्नतानि, दन्ताः–केशा अङ्गुलिपर्वाणि नखानि त्वक्, इमानि पञ्च सूक्ष्माणि, नयने

१, हृदयं २, नासिका ३, हनुः ४, भुजौ ५ एतानि पञ्चदीर्घाणि च वर्त्तन्ते, ते दीर्घजीविनो महाधनिनः पराक्रमिणश्च जायन्ते । ललाटवक्षो वदनानीमानि त्रीणि यस्य विस्तीर्णानि स्युः, स राजा भवति । यस्य ग्रीवाजघनमेहनत्रितयो लम्बो भवति स पुमानोजस्वी जायते, राज्यं च कुरुते । यस्य च सत्वं स्वरो नाभीचैतानि गम्भीराणि स राजा तस्य प्रधानो वा जायते । येषु यादृशानि लक्षणानि जायन्ते, तेषु तादृशमेवाऽऽचरणमपि वर्त्तते । यथारूपं तथा लक्ष्मीः, यथा चाकृतिस्तथा गुणा भवन्ति पुंसाम् । यश्चातिह्रस्वः, अतिदीर्घः, अतिस्थूलः, कृशतमः, अतिश्यामलः, अतिगौरः, एते षट् सत्त्ववन्तो भवन्ति । यो हि सद्धर्मः, सुभगो, नीरोगः, सुस्वप्नः सुनयी, सुकविर्भवति स पुमानात्मनः स्वर्गगमाऽऽगमौ प्रथयति । यो वै निर्दम्भः, सदयः, दानी, दान्तो दक्षः, सदा सरलः, स मानवीं योनिं व्यनक्ति । यश्च मायिको लुब्धः, क्षुधातुरः, सालसो बह्वाशी भवति, स तिर्यक्त्वं ख्यापयति । यः सरागी स्वजनद्वेषी दुर्भाषी मूर्खसङ्गी स स्वस्मिन्नारकीयतामेव प्रकटयति । यस्य पुंसो दक्षिणे दक्षिणावर्त्तो जायते स शुभंयुर्यस्य वामे वामावर्त्तः सोऽति गर्हितो यस्य च दिगन्तरे पार्श्वावर्त्तः स मध्यमो भवति । करतलेऽरेखे बहुरेखे वा प्राणिनो निर्धना अल्पायुषो दुःखिनश्च जायन्ते । अनामिकान्त्यपर्वणः कनिष्ठाया अधिकत्वे लक्ष्मीर्मातृपक्षश्च वर्धते । येषां पाणिपादयोस्तले कमलाङ्कुशवज्रच्छत्रशङ्खमीनादिरेखाः स्युस्ते धनिनो जायन्ते । द्वात्रिंशल्लक्षणेषु सत्सु राजा, एकत्रिंशत्सु तेषु भोगिनः, त्रिंशत्सु तेषु मध्यमः, इतो न्यूनेषु साधारणो जनो भवति । यस्य करतले मणिबन्धादुत्थितापितृरेखा, करभाच्च विनिर्गता वित्ताऽऽयुषो रेखाद्वयी तिस्रोऽपि वा तर्जन्यङ्गुष्ठयोरन्तरं यान्ति, परिपूर्णाः परिपुष्टा भासुराश्च सत्यस्तेषामायुर्वित्तं गोत्रश्च सम्पूर्णम्भवति । जीवितरेखा यावतीरङ्गुलीरतिक्रामति शरदां तावती पञ्चविंशतिर्ज्ञातव्या । दक्षाङ्गुष्ठमध्य-

गतैर्यैवैर्विद्याकीर्त्तिः श्रीः शुक्लपक्षीया जनिश्च लक्ष्यन्ते। यस्य लोचने रक्ते भवतः स कामिनीजनवल्लभो भवति, यश्च कनकपिङ्गलाक्षः स सदा धनी तिष्ठति. भुजयोर्दैर्घ्ये किलैश्वर्यवान् भवति। यस्य शरीरं मांसलं स सुखमनुभवति। यस्य नेत्रे स्निग्धे स सौभाग्यमुपैति। दन्तस्नेही भोजनं, वपुःस्नेही च सुखी स्यात्। नखानां लौहित्ये सधनत्वमौज्ज्वल्ये च भिक्षुको भवति। येषां कररुहा रूक्षास्तेऽनाचारिणो भवन्ति। यस्य वक्षो विशालं स धनधान्यभोक्ता, दीर्घशिरा नृपपुङ्गवो जायते। विस्तीर्णकटिको नरो बहुपुत्रकलत्रवान् भवति, विशालपाक्ष्व सदैव सुखमाप्नोति। व्यञ्जनानि—मषतिलादीनि पुंसां दक्षिणे स्त्रीणां वामे च शुभानि भवन्ति।

मानोन्मानोपेतम्—पुरुषप्रमाणे जलभृते यत्र कुण्डादौ पञ्चविंशतिवर्षीये पुंसि प्रविष्टे तज्जलं द्रोणमात्रं निर्गच्छति तर्हि स मानोपेतो ज्ञायते। तुलायामधिरोपितस्य पुंसोऽर्धभारं मानश्चेत्स उन्मानोपेतो ज्ञेयः। प्रसङ्गाद् भारमानं दर्शयितुमाह—षड्भिः सर्षपैरेको यवः, त्रिभिश्च यवैरेका गुञ्जा, ताभिस्तिसृभिर्वल्लः, षोडशाभिश्च वल्लैरेको गद्याणकः, दशभिरेतैः पलः, पलानां सार्धशतेन मणो भवति। मणैश्च दशभिर्धडिका, दशभिर्धडिकाभिर्भार उच्यते। तथा च भारे चत्वारिंशत्सेटकमानेन पादोना अष्टमणाः किञ्चिदधिकाः। तदर्धन्तु पञ्चसेटकाधिकपादोनचतुर्मणप्रमाणशरीरम्। निजाङ्गुल्याऽष्टोत्तरशताङ्गुलो ना खलूत्तमः, षण्णवत्यङ्गुलो मध्यमः, चतुरशीत्यङ्गुलस्तु जघन्यः, तीर्थङ्करस्तु द्वादशाङ्गुलोष्णीषगणनया विंशत्यधिकशताङ्गुलोच्चो भवति। इत्थं सर्वाङ्गसुन्दरं शशधरमिवाऽभिरामं देवकुमारसमं पुत्रं जनयिष्यति। स दारको यदाष्टवर्षीयान् भविष्यति, तदा ऋग्यजुःसामाऽथर्वेति चतुर्वेदानां पञ्चमेतिहासानां निघण्टु—संग्रहलक्षणामिति षण्णां साङ्गोपाङ्गानां पारगामी भविता। तत्राङ्गानि—शिक्षा १, कल्पः २, व्याकरणम् ३, छन्दो

४, ज्योति ५, निरुक्तयः ६ । उपाङ्गानि–अङ्गार्थविस्तररूपाणि, तदेतेषां सर्वेषामध्येताऽध्यापयिता, विस्मरतामशुद्धं पठताञ्च वारयिता भविता । कापिलीयशास्त्रस्य वेदिता, गणितशास्त्रस्य विज्ञाता भविष्यति । तच्च–

'अर्धं तोये कर्दमे द्वादशांशः, षष्ठो भागो वालुकायां निमग्नः ।
सार्धो हस्तो दृश्यते यस्य तस्य, स्तम्भस्याशु ब्रूहि मानं विचिन्त्य ॥'

अक्षरसमाम्नायो ग्रन्थः, विविधयज्ञादिप्रतिपादकं शास्त्रम्, ऐन्द्र १, जैनेन्द्र २, सिद्धहैम ३, चान्द्र ४, पाणिनीय ५, सारस्वत ६, शाकटायन ७, वामन ८, विश्रान्त ९, बुद्धिसागर १०, विद्याधर ११ सरस्वतीकण्ठाभरण १२, कलापक १३, भीमसेन १४, शैव १५, गौड १६, नन्दि १७, जयोत्पल १८, मुष्टि १९, जयदेवाभिधानेति विंशतिव्याकरणानि, एषु चान्येषु शास्त्रेष्वपि पटीयान् भविष्यति ते दारकस्तत्र मा संशयीथाः । इत्थं स्वप्नफलानि श्रुत्वा मनसि प्रहृष्यन्ती सा देवानन्दा कुड्मलीकृतकरकमला भर्त्तारमेवं व्याजह्रे–यथा तत्फलानि व्याहरसि तत्तथ्यमेव, मनागपि तत्र न संशये । ततः प्रभृति सा भर्त्रा सत्रा विविधं मानुषं सुखमन्वभूत्तमाम् ।

१९ शक्रस्य प्राग्भवकथनं तत्कृतस्तवनञ्च—

अत्रैवाऽवसरे निजोदारकान्तिमत्त्वादिगुणैर्विराजमानः, करधृतवज्रः, यथास्थानपरिहितमहार्हरत्नजटितभासुरमालामुकुटाभ्यां शोशुभ्यमानः, अत्युज्ज्वलचञ्चलमहार्हसद्रत्नखचितकनककुण्डलयुगलशोभितकपोलः, आपादप्रलम्बिनीं पञ्चवर्णात्मिकां कुसुममालां परिदधन्महौजाः, महर्द्धिकः, महायशाः, महासुखः, महाबलवीर्यो देदीप्यमानशरीरः श्रीसौधर्मेन्द्रः सौधर्मकल्पे सौधर्मावतंसके महाविमाने सुधर्मासभायां शक्राख्य

---

१ जलेऽर्धं त्रिहस्तः, कर्दमेऽर्धहस्तः, वालुकायामेकहस्तः, बाह्ये सार्धहस्तो दृश्यते, एवं हस्ताः षट् ६. इति ।

सिंहासनोपरि विहरति । अस्ति चाऽयं द्वात्रिंशल्लक्षविमानानाम्, षट्-त्रिंशत्सहस्राधिकत्रिलक्षाणामात्मरक्षकदेवानाम्, चतुरशीतिसहस्रसामानिकदेवानाम्, त्रयस्त्रिंशत्त्रायस्त्रिंशकानाम्, सोमयमवरुणकुबेरेतिचतुर्लोकपालानाम्, पद्मा शिवा शची अञ्जुः अमला अप्सराः नवमिका रोहिणीत्यष्टानामग्रमहिषीणाम्, बाह्यमध्यमाऽऽभ्यन्तरेतितिसृणां परिषदाम्, गान्धर्वनाट्याऽश्वगजरथसुभटवृषभेतिसंज्ञकानां सप्तानीकिनीनाम्, तदधिपतीनाम्, अन्येषामपि सौधर्मकल्पवासिबहुदेवदेवीनां सर्वेषामधिपतिः, पोषयिता च । स शक्रेन्द्रो महता रवेण जायमानं विविधनाटकं गानं मृदङ्गवीणादिवाद्यानाञ्च श्रुतिसुखं रवं शृण्वन् दिव्यं भोगम्भुङ्क्ते । स हि द्विनयनोऽप्यनुचरीभूतकार्यार्थनैकाटिकपञ्चशतदेवलोचनयोगात्सहस्राक्षत्वं बिभर्त्ति, महामेघानां तद्वश्यत्वान्मह्यते पूज्यते वा मघवत्वम्, पाको नाम दैत्यस्य शास्तृत्वात्पाकशासनत्वम्, पूर्वस्मिञ्जन्मनि श्राद्धपञ्चमप्रतिमाशतवारसमाचरणाच्छतक्रतुत्वमलभत । एतच्च कार्त्तिकश्रेष्ठिभवापेक्षम् । तथाहि—

पृथ्वीभूषणनगरे प्रजापालो नाम राजा राज्यं करोति स्म । तेन मानितो महर्द्धिकः सुश्रावकः कार्त्तिकनामा महेभ्यः प्रतिवसति स्म । सहि श्रावकीयैकादशप्रतिमासु पञ्चमीम्प्रतिमां शतकृत्वः कृतवान् । तेन लोके शतक्रतुरिति ख्यातिमलभत । तत्रैकदा गैरिकनामा तापसो मासोपवासी तत्रागत्य बहिरतिष्ठत् । तमभिवन्दितुं नृपादयः सर्वे पौरा आबालवृद्धा जग्मुः । केवलं शुद्धसम्यक्त्ववानेकः कार्त्तिकश्रेष्ठ्येव नागात् । तेन हेतुना तदुपरि स तापसो भृशं चुकोप । तमेकदा निजगृहे भोक्तुं नरनाथो न्यमन्त्रयत् । तदोवाच सः—राजन्! यदि कार्त्तिकमहेभ्यः स्वपृष्ठे पायसभृतां स्थालीं बिभृयात्तर्हि त्वदोकसि भुञ्जीयेति श्रुत्वा तथेति प्रतिपद्य राजा निजसदनमागात् । ततः कार्त्तिकमाकार्य जगाद—श्रेष्ठिन्! मम गुरुर्गैरिकपरिव्राजको मया निमन्त्रितोऽजल्पत्—

'यदि कार्त्तिकः स्वपृष्ठोपरि स्थालं धरेत्तर्हि तत्र गत्वा खादेयमिति हेतोस्त्वया तथानुष्ठेयम्।' इति राजनि निगदति सति कार्त्तिक आहस्म–स्वामिन्! मम सम्यक्त्वव्रतस्तथाकरणं न घटते, तथापि भवदाज्ञयाऽकार्यमप्येतद्विधास्यामि। ततः समागते तापसे कराङ्गुलीयके स्थितामार्हतीम्प्रतिमां नमस्कृत्य पृष्ठोपर्यत्युष्णपायसपूर्णस्थालं धृत्वा कार्त्तिकोऽतिष्ठत्, तापसश्च सोत्कुमलगत्। तत्रावसरे सदसि पायसं भुञ्जानोऽङ्गुल्या च तस्य नासिकां घर्षयन् सर्वेषु लोकेषु मां प्रणमत्सु त्वमेक एव न प्राणमत्, तत्फलं दर्शयामि भूयो भूयोऽधुना नमयामीति चेष्टमानः सुखेन जघास। तस्मिंश्च भुक्त्वा स्वस्थानं गतवति कार्त्तिकपृष्ठचर्मणि तापातिशयात्संदग्धे संलग्नं तत्स्थालं महता कष्टेन राजा नीचैरुत्तारयामास। तदा व्यचिन्ति कार्त्तिकेन–यद्यहं प्रागेव दीक्षामग्रहीष्यं तर्हीदृशं पराभवमद्य नाऽद्रक्ष्यम्। ततः समुत्पन्नवैराग्यः स वसूत्तरसहस्रवणिक्पुत्रैः सह मुनिसुव्रतस्वामिपार्श्वे दीक्षां लात्वा द्वादशाङ्गीमधीत्याऽर्कवर्षाणि चारित्रं परिपाल्य सौधर्मेन्द्रो बभूव। इतश्च गैरिकतापसोऽप्यज्ञानतपःकरणेन मृत्वा तस्यैव वाहनं ऐरावतोऽभूत्। तदा तं सौधर्मेन्द्रमवधिज्ञानेन कार्त्तिकजीवं विदित्वा तद्भीत्या पलायितुं लग्नः, परन्तु बलात्तं निगृह्य शक्रस्तदुपर्यारुरोह। शक्रं विभीषयिषुः सरूपद्वयमधरत्। शक्रोऽपि तावद्रूपं यावदकरोत्तावद्गजश्चत्वारि रूपाणि व्यकरोत्। तदनु सौधर्मेन्द्रोऽपि चतुर्धाभूत्वाऽवधिना च प्राग्भवं विदित्वा भृशं तर्जयन्नवदत्–रे गैरिक! इदानीं मुक्त्वा क गमिष्यसि?, किमिदानीं प्राग्भवीयं न स्मरसि यन्मे पृष्ठोपरि सन्तप्तं स्थालं निधाय पायसमघसः सएवाऽधुना मम वाहनतां नीतोऽसि तर्हि यदर्जितं तत्सुखेन भुङ्क्ष्व, मा भैषीरिति शक्रोक्तमाकर्ण्य स्वमन्तुं क्षमयित्वा निजाऽकृत्रिमं रूपं धृत्वा तदानुकूल्यमुररीचक्रे स गैरिको गजः।

अथ देवानन्दाकुक्षौ विलसन्तं भगवन्तं महावीरं विलोक्य प्रावृषि बालकदम्ब इव स्फुरद्रोमप्रकरः, प्रमोदातिशयविकसितकमलाकारवदन-नयनः, श्रीमद्भगवद्दिदृक्षयोद्भूतप्रभूतसम्भ्रमोच्चलितवलयवीरवलयकिरीटकुण्डलयुगलः, सौधर्मेन्द्रस्त्वरया सिंहासनादुत्थाय पादपीठादवततार । तदनु वैदूर्यनीलरिष्टाञ्जनादिजटितचारुकारुविरचितभासुरपादुके विहाय, विधाय चोत्तरासङ्गं कृताञ्जलिर्भगवदभिमुखं सप्ताऽष्टपदानि सोऽगच्छत् । तत्र वारत्रयं भूमावलग्नवामजानुर्दक्षिणजानुस्पृष्टभूतलोमूर्धानं भूमौ निवेश्य, ततः किञ्चिदूर्ध्वीभूय कटककेयूरादिप्रदीप्रनखप्रभाभासितमञ्जलिं शिरसि धृत्वा तमेवमस्तावीत्—

भगवन् ! तस्मै ते नमोऽस्तु, यस्त्वं त्रिभुवनजनविहितार्चनं लभसे, रागद्वेषारातिसमूलविघातकारित्वादरिहन्तासि, रागद्वेषरूपकर्मबीजाऽभावेन भवप्ररोहाऽभावादरुहन्ताऽसि, आदिकरोऽसि, चतुर्विधसङ्घरूपतीर्थस्थापयितासि, श्रीसङ्घस्य तारयितासि, परोपदेशं विनैव बुद्धोऽसि, अनन्तगुणाधारत्वादुच्यसे पुरुषोत्तमः, कर्मवीरदलनात्पुरुषसिंहोऽसि, पुरुषवरपुण्डरीकोऽसि । यथा पङ्के जातं जलेनैव वर्धितं पद्मं, तदुभयं भित्त्वा तदुपरि वर्त्तते, तथा त्वमपि कर्मकर्दमे जातो भोगवारिवर्धितोऽपि तदुभयमुक्तोऽसि, यथा वा गन्धहस्तिगन्धेनाऽन्ये दन्तिनः पलायन्ते, तथा त्वत्प्रभावेणापि दुर्भिक्षादिरोगाः प्रतिवादिनश्च पलायन्तेऽतस्त्वं पुरुषवरगन्धहस्तितुल्योऽसि, चतुस्त्रिंशद्गुणातिशयत्वाल्लोकोत्तमोऽसि, चराचरजीवनाथोऽसि, अप्राप्तस्य प्रापणं योगं प्राप्तस्य रक्षणं क्षेमञ्च समेषां वहसि, दयालुत्वाज्जगद्धितैषी, मिथ्यात्वतिमिरापहत्वाल्लोकप्रदीपोऽसि, रविरिव जगद्भासकोऽसि, सप्तभयनाशकत्वादभयदोऽसि, चक्षुःकल्पश्रुतज्ञानदोऽसि, यथा चौरादिभिर्धनमपहृत्य नयने पिधाय क्वचिदमार्गे क्षिप्तं दैवात्तत्राऽऽगतः सुसाधुर्दृग्बन्धनमोचनमार्गद-

र्शनलुण्टितधनदापनादिना तमुपकुरुते, तथा त्वमपि कषायहृतधर्मरत्नान्मिथ्यात्वपिहितविवेकदृशः प्राणिनः श्रुतज्ञानसद्धर्म्ममोक्षमार्गप्रदर्शनैरुपकुरुषे, सारथिरिव पथश्च्युतमेनं जीवं सन्मार्गमानयसि मेघकुमारवत्। तथाहि–राजगृहनगर्यां श्रेणिकभूपतेर्धारिण्याः कुक्षौ मेघकुमारः पुत्ररूपेणाऽवततार। तदा राज्या ईदृशो दोहदोऽजनि–यदहं प्रावृषि राज्ञा सह गजारूढा सती वने क्रीडाव। ततोऽभयकुमारः पूर्वभवे सखायं कमपि देवमाराध्य तं दोहदं परिपूरयामास। इत्थं परिपूर्णदोहदा सा राज्ञी नवमे मासे पुत्रमसोष्ट। जाते च तस्मिन् प्रहृष्टो राजा महोत्सवं विधाय मेघकुमार इत्यभिधामकरोत्। क्रमशः समधिगतयौवनवया अधीतविद्यः स पित्राऽष्टाभिः कन्याभिरुद्वाहितस्ताभिः स्वैरं सुखमनुभवन्नासीत्। अथैकदा तत्र भगवान् वीरः समवसृतः। श्रेणिकादयः सर्वे पौरजनास्तमभिवन्दितुं तत्राऽऽजग्मुः। मेघकुमारोऽपि तत्रागात्, पपिवांश्च भगवन्मुखचन्द्रच्युतां देशनामयीं सुधाम्। ईयिवांश्च प्रतिबोधम्, पितरौ समापृच्छ्य श्रीवीरकरकमलेन दीक्षितोऽभूत्। नवदीक्षितमेनं साध्वाचारशिक्षणाय स्थविरान्तिके न्यस्तवान्भगवान्। रात्रौ संस्तारवेलायां क्रमेण सकलेभ्यः पश्चान्मेघकुमारस्याधिद्वारं संस्तारक आगात्। तत्र च प्रस्रवणार्थमुत्तिष्ठतां साधूनां गमाऽऽगमाभ्यां पादाहतो मनागपि निद्रामलभमानो सकलामपि रजनीमजागरीत्। क्लिष्टोऽसौ दध्यौ–'धिङ्मां योऽहं पुरा सुकोमलशय्यायामस्वाप्सम्' सोऽहमधुना भूमौ शये, तत्राप्येकस्यां रात्रावियानुपसर्गो जज्ञे, तर्हि कियन्तं कालमेवंविधां कदर्थनां सहितास्मि ?, दीक्षापालनं सर्वथा दुष्करमेव। ततोऽहं प्रातरुत्थाय भगवन्तमापृच्छ्य गृहमेव गमिष्यामि।' इत्थमवधार्य प्रगे च रजोहरणादिलात्वा भगवतः समीपमागात्। तन्मनोगतं भावं विदित्वा भगवान् मिष्टवाक्यैस्तमभ्यधात्–महर्षे! त्वमस्यां रात्रौ गमाऽऽगमौ विदधतां साधूनां क्रमरजसा तच्चरणघातेन च खिद्यमानः क्षणमपि

निद्रामलभमानः समुद्विग्नमना एवं दध्याथ–यदहं प्रभाते वेषमेनं विहाय भगवन्तमापृच्छ्य गेहं गन्तास्मीति, तत् किं सत्यम् ? । मेघर्षिरगदत्–भगवन् ! सत्यमेवैतत् । प्रभुरगादीत्–मेघर्षे ! तवैतन्नो युज्यते । यतः प्राणिनो नरके तिर्यगादियोनौ वा यावन्ति महान्ति दुःखानि भूयोभूयश्चिरं सहन्ते, सेहिरे, सोढारश्च, तदग्रे खल्वेतादृशां दुःखानां का गणना ?, को नाम मूर्खः स्याद्यश्चक्रवर्त्तिसाम्राज्यमपहाय दासत्वमनुबुभूषेत्, किमधिकं भणामि–वह्नौ प्रविश्य मरणमेव वरं, परं गृहीतव्रतभग्नत्वं न वरम् । येऽत्र लोके संयमं यथावदवन्ति सहन्ते च बहुशः क्लेशांस्तेऽवश्यं स्वर्गापवर्गादिसुखानि लभन्ते । त्वमेव भवान्तरे धर्मार्थं महत्कष्टमन्वभूस्तस्यैतावन्ति फलान्यमुष्मिञ्जन्मन्यभूवंस्ते । तांश्च भूतपूर्वान्भवान्मत्तः शृणु–अमुष्माद् भवात्तृतीये भवे वैताढ्याऽचलोपकण्ठे सहस्र करिणीपातिः षड्दन्तो धवलः सुमेरुप्रभनामा गजेन्द्रो जज्ञिषे । तत्रैकदा दावानले सर्वत्र प्रसृते बिभ्यत्पलायमानः कान्दिशीकः क्वचिदेकत्र सरसि तृषार्त्तः प्रविशन्नेव मार्गाज्ञानतया कर्दमस्य बाहुल्याच्च गाढं निमग्नतामीयिवान् । तत्राऽऽगतेन केनचित्पूर्ववैरिणा दन्तिना दन्तप्रहारैर्जर्जरीकृतः । प्रतिकर्त्तुमशक्तः सप्ताहं महतीं वेदनामनुभवन् परिपूर्णे च विंशाधिकशतायुषि मृत्वा विन्ध्याचलीयभूमौ चतुर्दन्तो लोहितः सप्तशतहस्तिनीभर्त्ता मेरुप्रभनामा दन्तावलेपोऽभूः । तत्राप्येकदा क्वचिल्लग्नं दावानलमवलोक्य ते जातिस्मृतिरजायत । तेन त्वं पूर्वभवमुदीक्ष्य तद्भीतिमुदेष्यन्तीं निराकर्त्तुं योजनपरिमितं मण्डलमकृथाः । तत्र समुत्पद्यमानं तृणवल्ल्यादिसर्वं वर्षाणामादिमध्यावसानेषु समुन्मूलयन्नासीः । तत्राप्येकदा महीयान् दवाग्निर्लग्नस्तद्भीत्या सर्वे वन्या जीवास्तत्रैव मण्डले समाजग्मुः । त्वमप्यागत्य तत्रैव तस्थिवान् । तिलमात्रोऽप्यवकाशो नाऽतिष्ठत्, सर्वत्र तनुदीर्घजीवैर्व्याप्ते कदाचिद्गात्रकण्डूतिं चिकीर्षुस्त्वमेकं पादमुत्थाप्य यावत्तदकृथास्तावत्तत्रैकः

क्वचिदन्यत्र स्थानमलभमानः शशकः समागत्य तस्थौ । तमालोक्या-नुकम्पनेन सार्धं द्व्यहं तथैवैकेन चरणेन तस्थाथ । यदा दवः शशाम, जग्मुश्च ते शशकादयः सर्वे स्वस्वस्थानम् । तदा तावत्कालिकक्षुत्तृषोः पीडया व्याकुलतां नीतः शोणितभरं स्तब्धीभूतं तच्चरणं भूमौ कथ-मपि स्थापयन् गिरिरिव क्षितौ पेतिथ । ततः सदयः शतायुस्त्वं ममर्थ, सएव त्वमधुना श्रेणिकराजस्य धारिणीगर्भजो मेघकुमारनामा पुत्रोऽ-सि । यदि तदानीं तिर्यग्भवेऽपि धर्मार्थं प्रचुरक्लेशानसहथास्तर्हीदानीं साधुचरणसङ्घट्टनाद्विदूयसे किम् ? । यदेते साधवो विश्वपूज्या जायन्ते, अमीषां क्रमयुगलरजांसि सुकृतिनामेव लगन्ति । अतएव मनसि मना-गपि दुःखं नाऽऽनेतव्यमिति भगवद्वाक्यं श्रुत्वा जातिस्मृतिरुत्पेदे । तत-स्तेन प्राक्तनाः सर्वे भवा ददृशिरे ! ततो भगवच्चरणकमलयोः पतित्वा संयमे च दार्ढ्यं नीत्वा ईदृशमभिजग्राह–' यदद्यारभ्य यावज्जीवमहं दृशौ विहाय सर्वाङ्गं व्युत्सृजामि । ' ततो निरतिचारं संयमं परिपाल्य प्रान्ते मासिकीं संलेखनां कृत्वा विजयनाम्न्यनुत्तरविमाने देवो बभूव । ततश्च्युत्वा महाविदेहक्षेत्रे मोक्षमधिगमिष्यति ।

दानादिधर्मप्ररूपकत्वाद्धर्मचक्रवर्त्ती, जलधौ पततां द्वीप इव भवा-ब्धिपतितप्राणिनामाश्रयदातासि । इत्थंभूताय, विमुक्तकर्मणे, सर्व-ज्ञाय, सर्वदर्शिनेऽप्रतिहतनिश्चलानन्तज्ञानदर्शनधराय, वीतरागाय भग-वते जिनाय चरमतीर्थकृते श्रीमहावीराय ते नमोऽस्तु । गर्भगतो भग-वानिहस्थितं मां प्रेक्षतामिति वारत्रयमजल्पत् ।

इति श्रीवीरजिनशासनस्फारशृङ्गारहार–सुविहितसूरिपुरन्दरनन्दनवनाऽऽ-रामविहारि–शिथिलाऽऽचारप्रचारतमोहारिजैनाचार्य–भट्टारक–श्रीम-द्विजयराजेन्द्रसूरीश्वर–सङ्कलितायां श्रीकल्पसूत्रार्थप्रबोधिनी नाम्न्यां टीकायां पीठिकासहितं प्रथमं व्याख्यानं समाप्तम् ।



## अथ द्वितीयं व्याख्यानं प्रारभ्यते ।

—✲卐✲—

१७ शक्रविचिन्तनमाश्चर्यकथनञ्च—

अथ पूर्वाभिमुखीभूय शक्रसिंहासने समासीनः सौधर्मेन्द्रो मनस्येवमचिन्तयत्—यदेते तीर्थकर्तारश्चक्रवर्त्तिनो वा, वासुदेवा बलदेवा वा शूद्राऽधमकृपणनिर्धनभिक्षुकद्विजाऽल्पकुटुम्बानां कुले नाविर्भवन्ति, नाविर्भूताः, नाविर्भवितारः । किन्तूग्र[1]भोग[2]राजन्[3]येक्ष्वाकु[4]क्षत्रिय[5]हरिवं[6]शादिविशुद्धजातिकुल एवाऽवतरन्ति, अवातरन्, अवतरिष्यन्ति च । सतीदृशे नियमेऽपि भगवाञ्छ्रीवीरो विप्रकुलेऽवातरदित्यद्भुतमजायत, यस्मादनन्ताऽवसर्पिण्युत्सर्पिण्योर्गतयोरीदृशं किञ्चिदाश्चर्यं जायते । अतएवैतस्यामवसर्पिण्यामपि दशाश्चर्याणीमानि जातानि ।

१ पुरा कस्यचिदपि तीर्थकर्त्तुः केवले समुत्पन्ने नाऽभूदुपसर्गः । भगवतो महावीरस्य कैवल्यज्ञानप्राप्तेः पश्चादपि शिष्याभासेन गोशालकेनोपसर्गोऽकारि । यथा—

एकदा श्रीमहावीरः श्रावस्त्यां नगर्यां समवसृतः । तत्राऽस्म्यहं ‘ जिन ’ इति लोकान् कथयन् गोशालोऽप्यागात् । तदा नगर्यां सर्वे खल्वेवमूचुर्यदत्र जिनद्वयी वर्त्तते—तत्रैको महावीरः, द्वितीयो गोशालकश्चेतिगोचर्यैं गतो गौतमः श्रुतवान् । तदनु शङ्कमानो गौतमः समागत्य भगवन्तं तदवोचत, पप्रच्छ च—विभो ! कोऽसौ गोशालो यः स्वस्मिञ्जिनतां ख्यापयति ?, भगवानाख्यत्—गौतम ! नायं जिनः, किन्तु शरवणग्रामे कश्चिन्मङ्खलीनामा शनिग्रहप्रतिग्रहग्राही भरडजातीयो निवसति, सुभद्राभिधाना तस्य भार्याऽस्ति, तयोरेव पुत्रोऽसौ वर्त्तते । ब्राह्मणगोशालायामुत्पन्नत्वाद् ‘ गोशाल ’ इत्याख्यां लेभे । निर्धनत्वाद्भिक्षमाणः कथमपि कालं गमयन्मम शिष्योऽभूत् । छद्मावस्थस्य मम पार्श्वे षड्वर्षाणि स्थित्वा मत्त एव सर्वाणि पठित्वा च बहुश्रुतोऽभवत्,

---

१ आदिनाथेनाऽऽरक्षकत्वेन स्थापिता लोका उग्राः । २ गुरुत्वेन स्वीकृता भोगाः । ३ मित्रत्वेन स्थापिता राजन्याः । ४ श्रीऋषभदेववंश्या इक्ष्वाकवः । ५ प्रजाजनत्वेनाऽभिमताः क्षत्रियाः । ६ प्राग्भवारातिसुरानीतहरिवर्षक्षेत्रीययुगलिकस्य वंशो हरिवंशः ।

तेजोलेश्यामपि विदाञ्चकार, इतरेभ्यश्च निमित्तविद्यादिकमध्यगीष्ट । सोऽयं मुधैव जिन-नाम बिभ्रल्लोके विहरति । इति प्रभुमुखाच्छ्रुतां वार्त्तां गौतमो बहूनामग्रेऽजल्पत् । क्रमशो लोकमुखादात्मनो गर्हितामेनां वार्त्तां निशम्य गोशालको भगवते भृशं चुकोप, द्वेषञ्चा-विर्कं भगवत्युवाह ।

अथैकदाऽऽनन्दनामा शिष्यो गोचर्यै गतवान् । तमाहूय चैवं सोऽवदत्—भो आनन्द ! एकं दृष्टान्तं सावधानमना निशामय—एकदा चत्वारो वणिजो धनार्जनाय विविधैः क्रयाणकैः परिपूरिताञ्छकटान् आदाय देशान्तरं चेलुः । मार्गे क्वचिन्महाऽ-रण्ये संप्राप्ताः पिपासया व्याकुलीकृताः कुत्रापि जलमपश्यन्तश्चत्वारि वल्मीकशिख-राणि ददृशुः । तदुपरि वृक्षोद्गमावलोकनेनाऽवश्यमत्र वारिणा भाव्यमिति निश्चित्यै-कस्मिञ्छिखरे त्रोटिते तन्मध्यादतिशीतलं मिष्टं वारि निरगच्छत् । तज्जलं पीत्वा पात्रा-णि च पूरयाञ्चक्रुः । पुनरपरं तत्रोटयितुं यदा प्रवर्तितिरे, तदैकेन वृद्धेन व्याहारि—यत्स-मीहिते सिद्धेऽपरं मा स्फोटयत, तथापि ते द्वितीयमपि शिखरं स्फोटयामासुः । एत-स्माच्च निर्गतं स्वर्णं विलोकमाना अधिकं लुलुभिरे । ततः पुरेव तेन वृद्धेन बहुधा वार्यमाणास्ते तृतीयमपि स्फोटयन्ति स्म, तस्माद्रत्नानि लेभिरे । ततः प्रवृद्धलोभग्रस्तास्ते भूयोभूयस्तथैव वारिता अपि तुरीयं स्फोटयामासुः । तस्माच्च महाकायो दृष्टिविषः सर्पः प्रादुरासीत्स च त्रीनपि तान् दृशैव पञ्चत्वमनैषीत् । दयया हितशिक्षाकरणेन च तमेकं वृद्धमजहात् । इत्थं यस्ते धर्माचार्यः सोऽपि तावत्यां संपत्त्यां सत्यामप्यसन्तुष्यँल्लो-कानामग्रे मामकमवाच्यं जल्पति । अतोऽहं सञ्जातप्रभूतप्रकोपस्तमवश्यं निजोग्रतेजसा भस्मसात्करिष्यामीति तत्र गत्वा सत्वरं तमाचक्ष्व । त्वान्तु वृद्धं वणिजं भोगीव जीव-न्तमेव हास्यामि । इत्थं गोशालेनाऽभिहित आनन्दो मुनिस्ततः समागत्य तदुदितं भगवन्तं न्यगादीत् । भगवतोक्तम्—आनन्द ! त्वं याहि, गौतमादीन् कथय, यदा मे क्षाशि-ष्यो गोशाल आगच्छेत्तदा तेन सत्राकेनापि साधुना न भाषितव्यम्, यतो नूनमत्रागत्य-कमप्युपसर्गं विधास्यति, समागते तस्मिन् मौनमाश्रित्य सर्वैः स्थातव्यम् । यो वक्ष्यति तमवश्यं धक्ष्यति, तस्मादितस्ततः सर्वैरपसर्त्तव्यमेव श्रेयस्करं भविष्यति ।' इत्थं भगवता शिक्षिते सर्वैरन्यत्र गत्वा स्थितम् । किन्तु सर्वानुभूतिसुनक्षत्रनामानौ मुनी भगवतः पार्श्व एव तस्थतुः । तावद् गोशालस्तत्रागत्य भगवन्तमेवमवादीत्—रे काश्यप ! गोशालो मे शिष्य इति यन्निगदसि तत्तु तथ्यमेव, किन्तु स त्वदन्तेवासी ममार, नेदानीं जीवति । अहन्तु तदन्य एवास्मि, केवलं तदीयां तनुं परीषहसहनसमर्थां मत्वा तत्र प्रविष्टोऽस्मि । तथासति यद् ब्रूषे गोशालो मङ्खलीसूनुरिति तत्कथं मया सोढव्यम् । भगवता न्यगादि—अरे ! किमेवं जल्पसि, यदि कश्चिच्चौरः कुत्रापि चौर्यं कृत्वा पृष्ठे समायान्तं पुरुषमवलोक्य तृणेन कराङ्गुल्या वा स्वं गोपायेत्परमेतावता स यथा

गोपितो न भवति, तथा त्वमप्यमुनाऽऽत्मानं गोप्तुं नार्हसि। स एवाऽसि त्वं तत्र नास्ति संशयः।' गोशालोऽजल्पत्—अरे! यावत्त्वं जीविष्यसि, तावदहं सुखी न स्याम्। इति तुच्छोक्तिमाकर्ण्य सुनक्षत्रसर्वानुभूती जगदतुः—गोशालक! एवं गुरुं तिरस्कुर्वं-स्त्वं कथं न त्रपसे। इत्थं वारयन्तौ तावुभावनगारौ तेन तेजोलेश्यया भस्मसाच्चक्राते, उभावपि तौ साधुमरणेन स्वर्ययतुः। भगवतोक्तम्—अरे! किमकारि, धिक् त्वामीदृग्गर्हितकर्त्तारम्। तदा भगवता तिरस्कृतः स भगवत उपरि तेजोलेश्यां मुमोच, सा च भगवन्तं त्रिःपरिक्रम्य तस्यैव दुर्धियो गोशालस्य शरीरे प्राविशत्। तया दग्धीभूतः स विविधां वेदनामनुभूय सप्तमरात्रेऽम्रियत। भगवानपि तत्तापेन षड्मासान् रक्तातिसारां महतीं वेदनामनुबभूव। ततो रेवतीश्राविकागृहादनगारकरादानीतं बीजपूरपाकं जग्ध्वा भगवानारोग्यवानभवत्। यस्य नामस्मरणादितरेषां सकला उपद्रवा विलीयन्ते, तस्य जगत्पूज्यस्य भगवतोऽपीदृगुपसर्गोऽजनीत्याश्चर्यम्प्रथमम्।

**२ प्रायशो नहि कश्चिदपि तीर्थकृत् स्त्रीत्वेन समुत्पद्यते। किन्त्वे-कोनविंशतितमस्तीर्थङ्करो हि वर्त्तमानायामस्यामवसर्पिण्यां स्त्रीत्वेन समुत्पन्न इत्याश्चर्यम्। तथाहि—**

एतस्मिञ्जम्बूद्वीपे महाविदेहक्षेत्रे सलिलावतीविजये वीतशोकानगर्यां 'बलराजा' राज्यं कुरुते। तस्यास्ति धरणी महिषी, महाबल नामा पुत्रो वर्त्तते। तेन यौवने पञ्च-शतकन्या रूपवत्यः पित्रा परिणायिताः। समागते वार्धक्ये राजा पुत्राय राज्यं दत्त्वा दीक्षामुपादाय चारित्रं निरतिचारराराध्य मोक्षमध्यगच्छत्। इतश्च पृथ्वीं शासतो राज्ञो महाबलस्याऽचलधरणाभिचन्द्रपूर्णवसुवैश्रमणा इति षण्मित्राण्यासन्। अथैकदा स-प्तापि ते सखायः श्रीगुरोः पार्श्वे श्रुतधर्मा विषयविरक्ता दीक्षां ललुः। परस्परमेवं नि-यमं कृतवन्तस्ते—यदस्माभिः सर्वैः षष्ठाष्टमादितपांसि तुल्यान्येव कर्त्तव्यानि नो न्यूनाऽ-धिकानि। तेष्वेकदा महाबलो मनस्येवं व्यमृशत्—यदहमेतेभ्योऽधिकं तपः कुर्याम्। ततोऽसौ पारणाकाले शिरोवेदनाच्छद्मना तदकृत्वा दिवसान्तरे च तैः सहैव तपो विद-धद्विंशतिस्थानकं तपःकृतवान्, तेन तपसा तीर्थकृतां नामकर्मार्जितवान्, परममुना कपटेन स्त्रैणमपि कर्माऽबध्नात्। प्रान्ते च सप्ताप्येते द्वैमासिकीं संलेखनां विधाय चतु-रशीतिलक्षपूर्वमायुरुपभुज्य मृत्वा द्वात्रिंशत्सागरोपमायुषो विजयन्तनामानुत्तरविमाने समुदपद्यन्त। ततश्च्युत्वाऽचलजीवोऽयोध्यायां सुप्रतिबद्धनामा राजाऽभूत्। धरणजी-वश्चम्पापुर्यां चन्द्रयशानामा भूपतिरभवत्। अभिचन्द्रजीवः काश्यां शङ्खनामा क्षितीशो बभूवान्। पूरणजीवः श्रावस्त्यां रुक्मिनामा भूजानिरभूत्। वसुजीवः कुरुदेशेऽदीनश-त्रुनामा भूभर्त्ता जज्ञे। वैश्रमणजीवः कपिलनगरे जितशत्रुनामा प्रजेश्वरोऽभवत्। महा-

बलजीवो मिथिलानगर्यां कुम्भराजस्य प्रभावत्या राज्ञ्याः कुक्षौ मल्लीकुमारीरूपेणाऽवातरत्, तदा तन्माता चतुर्दशस्वप्नानैक्षिष्ट । तदनु आश्विनशुक्लैकादश्यां तां प्रासूत । अनुक्रमेण शशिकलेव वर्द्धमाना यौवनं वयोऽधिगता सती सा कुमारी तान्प्राग्भवीयान् सखीन् पृथक् पृथगुत्पन्नान् प्रेक्षितवती । ततस्तेषां प्रतिबोधनायाऽशोकवाटिकायामेकं सद्रत्नजटितं सुन्दरं षड्द्वारमयं भवनमचीकरत्, तत्र स्वर्णमयीं रत्नजटितामात्मनः प्रतिमां स्थापितवती । यदा यदा साऽऽदत्तदा तदैकं कवलं, प्रत्यहं तत्प्रतिमायामूर्ध्निकृतबिले क्षिपति स्म ।

इतश्चैकदाऽयोध्यायां सुप्रतिबद्धेन राज्ञा यक्षार्चनं व्यधायि । तत्र सुरचितामेकां मनोहरां कुसुमस्रजमालोक्य राजा दूतमवादीत्—भोः ! ईदृशं सुन्दरं दाम क्वाप्यालोकि ? तदोक्तं तेन—मल्ली राजकुमारी रूपाद्देवीव लक्ष्यमाणाऽतिचतुरा वर्त्तते, तत्पाणिपद्मविरचितसुललिताया मालाया लक्षांशमपीयं स्रङ् नार्हति । तच्छ्रुत्वा प्राग्भवीयप्रेम्णा तां याचितुं कुम्भराजंप्रति कमप्यात्मीयं दूतं प्राहिणोत् । ततः स तत्रागत्य तमभ्यधात्—राजन् ! अयोध्यापतिर्मन्मुखेन त्वां मल्लीकुमारीमभ्यर्थयते १, इतश्च चम्पानगरीनिवासी कश्चिदर्हन्नकनामा महेभ्यवर्यः क्रयाणकैः पोतं भृत्वा गम्भीरपत्तनं प्रत्यचालीत् । तत्रावसरे देवेन्द्रः सभायामर्हन्नकमेवं प्रशशंस—यदधुना भारते खल्वेतत्समोऽपरः कोऽपि श्रावको धर्मे दार्ढ्यं नीतो नैवास्ति । तदाकर्ण्य कोऽपि सुरः तदसहमानस्तत्रागत्य महोपसर्गं प्रारेभे, जायमाने च तस्मिन्नर्हन्नकः सागारिकमनशनं विधाय निश्चलमना वीतरागमेव केवलं स्मर्त्तुं लग्नः । देवश्च बहुविधान् विघ्नानकरोत्तथापि धर्मादचलन्तं तमालोक्य जगादैवम्—भोरर्हन्नक ! जिजीविषसि चेत्तूर्णं वीतरागस्य स्मरणं विमुञ्च, देवान्तरञ्च भज । नोचेदिदानीमेव सपोतं त्वां समुद्रान्तः पातयिष्यामि, तत्र संशयं माकृथाः, इति निगद्य सपोतं मज्जयितुमचेष्टत । लोका ऊचिरे—अर्हन्नक ! यथाऽसौ देवो भणति तथैव कुरु, अगतिकान्नस्त्रायस्व, नो चेत्सर्वे मरिष्याम इत्थं सर्वैरुदितोऽप्यसौ यदा मनागपि न चचाल, तदा स देवः सन्तुष्य तस्मै दिव्ये कुण्डलाऽऽभरणे दत्त्वा पादयोः पतित्वा जगाद—अर्हन्नक ! क्षम्यतां ममापराधस्त्वमेव लोके धन्योऽसि, तवैव जीवनं सफलमस्ति । अहमिन्द्रमुखाच्छ्रावकीं प्रशंसामाकर्ण्य जातशङ्को बहूंस्ते विघ्नाध्यानरचम् । इतिसुरोदितं निशम्याऽर्हन्नकोऽवक्—देव ! नूनमहं लोकद्वयश्रेयस्करमार्हतं शाश्वतं धर्ममाश्रित्य प्राणान्तेऽपि धर्मान्तरं कथमाश्रयेय ? । इति निगदिते पुनरस्मै कुण्डलयुगलं प्रदाय सुरः स्वस्थानमगच्छत् । ततोऽर्हन्नकः गम्भीरपत्तनमागत्य व्यापृत्य धनमभिमतं समर्ज्य क्रमेण मिथिलापुरीमाससाद । तत्र च स देवार्पितं कुण्डलयुगलं क्षितिपाय ढुढौके । राजा च तदपूर्वमाभरणं मल्लीकुमार्यै ददौ । नृपानुमतोऽर्हन्नकश्चम्पापुरीमाययौ, तत्रापि स्वमहीजानये तदपरं कुण्डलयुगलमुपदीचक्रे ।

राज्ञा पृष्टः—श्रेष्ठिन् ! त्वमनेकं देशं भ्राम्यसि, कुत्र किमाश्चर्यमालुलोकिषे, । अर्हन्नको-ऽवक्—स्वामिन् ! अन्यत्र कुत्रापि तादृगत्यद्भुतं नापश्यम्, केवलं मिथिलायां कुम्भराजस्य पुत्री मल्लीनाम्नी या विचकास्ति, तस्या रूपं लावण्यं तारुण्यमद्राक्षम् । किमधिकं वर्णयामि तद्रूपम्, तादृशी सैवैका जगत्यामास्ति द्वितीया कापि नास्ति, नासीत्, नाग्रे भाविनीति तथ्यमवेहि । इत्थं तद्गुणश्रवणेन प्राक्तनप्रेम्णा च तद्गतमनाश्चन्द्रयशा राजापि तदैव कुम्भराजपार्श्वे दूतं प्राहिणोदबोधयच्च मे मल्लीकुमारीं देहीति २. इतश्चैकदा मल्लीकुमार्यास्ते कुण्डले तुत्रुटतुः, तदा राजा निपुणान् स्वर्णकारानाहूय समादिशत्—इमे कुण्डले पुरेव निर्मान्तु । ते जगदुः—स्वामिन् ! नैते मनुष्यनिर्मिते ? किन्तु देवनिर्मितेऽत इमे केऽपि मर्त्या योजयितुं न प्रभवेयुः । ततः प्रकुपितेन नरपालेन निष्काशितास्ते सर्वे स्वर्णकाराः काशीमाययुः । तत्र च शङ्खराजा प्राक्षीत्—यत्कुतो भवतो निष्कासितवान् ?, ते जगदुः—राजन् ! अस्मद्राजस्य मल्लीकुमारी लोकोत्तररूपलावण्यशालिनी वर्वर्त्ति, तदीये कुण्डले देवदत्ते दैवाद्भग्नेऽभूताम् । ते सन्धातुं क्षितिपतिरस्मानादिदेश, परन्तु देवनिर्मितत्वात्तत्सन्धानमस्माभिर्नाऽकारि, तेनैव हेतुना राजा नो देशादतित्यजत् । इत्थं तद्रूपप्राशस्त्यं निशम्य तां परिणिनीषू राजा शङ्खस्तद्याचनायै कमपि चतुरं नरं तत्र सम्प्रेष्य कुम्भराजमसूचयत्—यन्मया सह निजपुत्रीमुद्वाहयेति ३. इतश्चतुर्भिर्मासैरुद्वर्त्तनस्नानादिना धौतगात्रां सुसज्जितां सदस्यागतां पुत्रीमालोक्य रुक्मी नरपतिः कमपि दूतमपृच्छत्—भो ! यादृग् रूपं मे तनया बिभर्त्ति, तादृग्रूपवती काप्यन्या कामिनी त्वयाऽऽलोकिता वा दृष्टा ?, न्यगददूदूतः—मिथिलायां मल्लीकुमार्या यादृग्रूपं तल्लक्षांशमप्येषा नो धत्ते । तच्छ्रुत्वा रुक्मीनरनाथोऽपि दूतमुखेन कुम्भक्षितीशं तामयाचत ४. इतश्चैकदा कुम्भराजपुत्रश्चित्रशालां निरमीमपत्, तत्र मल्लीकुमार्या अङ्गुष्ठमवलोक्य तस्याः सर्वाङ्गसुन्दरीं प्रतिमामनुरूपां स शिल्पी व्यलिखत् । एकदा तद्भ्राता तत्र शालायां रममाणस्तां प्रतिमामुदीक्ष्य समुद्भूतप्रभूतकोपश्चित्रकर्त्तुर्दक्षाङ्गुष्ठमचिच्छिदत् । तदनु स कारुर्हस्तिनापुरमागत्याऽदीनशत्रुणा राज्ञाऽमिलत्, अकथयच्च मल्लीकुमार्या लोकोत्तरं तनुसौष्ठवम् । तदाकर्ण्य तेनापि दूतमात्मीयं प्रेष्य कुम्भराजस्तां याचितः ५. अथैकदा धर्मचर्चायां मल्लीकुमार्या निर्जिताऽज्ञाता काचित्परिव्राजिका प्रकुपिता कपिलनगरे समागता सा जितशत्रो राज्ञः सदसि मल्लीकुमार्या रूपं भृशं प्रशशंस । तच्छ्रुत्वा तां परिणेतुं कुम्भराजःपार्श्वे स्वकीयं दूतं प्राहिणोत् ६.

इत्थमेकदैव तेषां षण्णामपि क्षितिभुजां दूतास्तत्र मिलिताः । तांश्च राजा कुम्भ इत्यभ्यधात्—यदहं तेभ्यः पुत्रीं नैव दित्सामि, यूयं यात, तदा ते दूता आगत्य स्वस्वराजं तदाचचक्षिरे । तच्छ्रुत्वा रोषादेकदैव ते षडपि भूमीपतयः स्वस्वसैन्यगणै-

रनुगता आगत्य मिथिलामरौत्सुः । कुम्भराजोऽपि तैः सत्रा योद्धुं लग्नः, परमेनं ते क्षणादेव जिग्युः । विजिते च तस्मिन्नन्तःप्रविशतस्तान् राज्ञः कस्याश्चिद्दास्या मुखेन सा कुमारीति व्याहृतवती—यद् भवद्भिर्मद्रत्नशालायामागन्तव्यम् । तदाकर्ण्य ते षड्राजानः षड्भिर्द्वारैस्तत्राऽऽययुः । तत्र तस्याश्चित्रमालोक्य सर्वे व्यामोहमापुः । तत्रावसरे मल्लीकुमारी झटित्यागत्य तच्छिरस आवरणमपाकरोत्तदा तन्मध्यादुद्भूतदुर्गन्धेन व्याकुलीभवन्तस्ते नासिकां सङ्कोचयन्तस्थूत्कारं कर्त्तुं लग्नाः । तदा मल्ली तानवादीत्—भो राजानः ! यूयमेवं मा कुरुत, मनसि विचारयत, यदियं रत्नमयी प्रतिमाऽचेतना वर्त्तते, तत्र प्रत्याह्निकैकग्रासमात्रान्ननिक्षेपेण यदीदृग्दुर्गन्ध उद्गच्छेत्तर्हि या चेतना प्रतिवत्सं सेटकान्नं खादति, तस्या मलमूत्रमय्या अङ्गतः कियानुद्गच्छेत् ? । अविचारयन्तो भवन्तो बहिरेव विषकुम्भं पयोमुखमिव सुन्दरं विदन्तो मुधा मलमूत्रक्लिन्नायामपि रागान्धाः कथं भवथ ?, इत्थं प्रतिबोधिताः श्रावितप्राग्भवाः समुत्पन्नया जातिस्मृत्या स्वस्वप्राग्भवान् प्रैक्षन्त । अवादिषुस्ताम्—धन्यतमे ! त्वमधुनाऽमुष्मादपारात्संसारसागरादनायासेन नस्तारयेति । साऽवक्—इदानीं यूयं स्वस्वसदनं व्रजत, यदा मे केवलज्ञानमुत्पद्येत तदाऽऽगन्तव्यं भवद्भिः, दास्यामि तर्हि वो दीक्षाम् । तयोक्तं श्रुत्वा ते यथाऽऽगतास्तथा ययुः स्वस्वनगरम् । इतश्च मल्लीकुमारी सांवत्सरिकं दानं दत्त्वा मार्गशीर्षमासीयैकादश्यां दीक्षामलासीत् । तस्मिन्नेव दिवसे केवलज्ञानमुदपादि । तदनु तान् षण्मित्राण्यपि दीक्षयामास, चकार च तान् गणधरान्मल्लिनाथो भगवान्, ईयिवांश्च तस्मिन्नेव भवे मोक्षम् । अयमेकोनविंशतितमः स्त्रीवेदी तीर्थङ्करोऽभवद्, एतस्य समवसरणे स्त्रीणां परिषदग्रे, पुंसां समज्या पश्चादुपविशति स्म ।

३ पुराऽन्यस्य कस्यापि तीर्थेशितुर्गर्भापहारो नो बभूव, परमस्यामवसर्पिण्यां भगवतो महावीरस्य नीचकर्मोदयतो गर्भव्यत्यासोऽजनीत्याश्चर्यम् ।

४ प्राक्कस्यापि तीर्थकृतो देशना निष्फला नो बभूव, किन्तु श्रीमहावीरप्रभुः केवलीभूय प्रथम एव समवसरणे धर्मदेशनामदात्, परमेतया कोऽपि न प्रतिबोधादि लेभे । इत्थं श्रीमहावीरस्य देशना विफलाऽभूदिति तुरीयमाश्चर्यम् ।

५ एकद्वीपस्य वासुदेवो द्वीपान्तरं पुरा कोऽपि न वव्राज, परमस्यामवसर्पिण्यां श्रीकृष्णो द्रौपद्या अर्थे धातकीखण्डमगमत्, तदा श्रीकृ-

णकपिलयोर्वासुदेवयोः शङ्खाभ्यां मिथो मिलितं युगपदेवेति महदाश्चर्यमजायत । तथाहि—

काम्पीलनगरे द्रुपदराजस्य चुलडी नाम्नी पट्टराज्ञी वर्त्तते, तस्याः कुक्षिजा द्रौपदी विद्यते, तदुद्वाहाय पित्रा महीयान् स्वयम्वरो रचितः । नानादेशीया निमन्त्रिता राजानो राजकुमाराश्च तत्राऽऽजग्मुः । हस्तिनापुरतः पञ्चपाण्डवा अपि समायातास्तेषु पार्थेन राधावेधे साधिते द्रौपदी वरमालां तद्ग्रीवायामक्षिपत्, परन्तु प्राग्भवे तया पञ्चभर्त्तृनिदानमकारि, तस्मादेकापि सा माला पञ्चधाभूय पञ्चानामपि ग्रीवामभजत । एषा द्रौपदी प्रागूजन्मनि नागिला ब्राह्मणी, सैकदा धर्मरुचिमुनये कटुतुम्बिकायाः शाकं दत्तवती । तदशित्वा मुनिरम्रियत, तदाऽऽचार्यो । नागिला साधुहत्याकारीति लोकानुवाच । ततस्तां भर्त्ता गृहान्निर्वासितवान् । सा स्वैरमटाट्यमाना मृत्वा नरकमधिगतवती । ततश्च्युत्वाऽनेकातिर्यगादियोनौ समुत्पद्य कस्यचिदेकस्य श्रेष्ठिनः सदने रूपवती सुकुमालिकानाम्नी दुहिताऽभवत् । तत्रत्येनैव केनचिन्महेभ्यपुत्रेण परिणीता, स तस्यामेव रात्रौ तां स्पृशन्नेव वहुदाहज्वरेण परिपीडितोऽभूत् । अत एनां विषकन्यां मत्वा त्यक्त्वा च स्वालयमाययौ । ततः शोचन्ती सा पित्रा केनचिद् भिक्षुकेण परिणायिता। अमुनापि समुज्झिता, दुःखाद्वैराग्यं नीता सा सुकुमालिका साध्वीभूय गुरुणा वारितापि वने तप्तुं गता । तत्र तपस्यन्ती सा पञ्चपुरुषैरनुगतामेकां वारवधूमपश्यत् । तदेयं भवान्तरे मे तपसोऽस्य प्रभावात्पञ्चभर्त्तारः स्युरिति निदानमकृत। प्रान्ते च निरशनेन मृत्वेशानदेवलोकमगच्छत् । ततश्च्युताऽत्र द्रुपदात्मजाऽस्ति, पुरा यदकरोन्निदानं तत एवैकापि माला पञ्चधा बभूव । तदाऽऽकाशे दैवी वागभूत्-यदियं द्रौपदी पञ्चप्रिया भूत्वापि सतीमतल्लिका भविष्यतीति । ततस्तां पञ्चापि पाण्डुपुत्राः परिणीय हस्तिनापुरमानीय तया साकं सुखमनुभवन्ति स्म । तत्रैकदा नारदर्षिर्व्योमवर्त्मना धर्मराजपरिषदि समागतस्तदा सकला अपि नृपादयस्तमभ्युत्थानादिना सच्चक्रिरे । तत उत्थाय द्रौपदीभवनमगात् । तमागतं साऽसंयतत्वान्न ववन्दे, नाऽऽनर्च, नवाऽभ्युदतिष्ठत्, नवा किमप्यवादीत् । ततस्तेन रुष्टेन ध्यातम्—यदेषा पञ्चभर्त्तृत्वादखर्वं दर्पं बिभर्त्ति, अत एनां केनाप्युपायेन महासङ्कटे पातयानि चेदीप्सितं सिध्येदिति निश्चित्य धातकीखण्डीयप्राच्यभरतक्षेत्रेऽमरकङ्कापुरि कपिलवासुदेवस्य सेवको राजा पद्मनाभः सप्तशतसीमन्तिनीभिः साकमधिवनं क्रीडन्नासीत् । तत्र समये समायातं नारदमर्घ्यादिदानेन सन्तोष्य कियतीं प्रासङ्गिकीं वार्त्तां पप्रच्छ—नारदर्षे ! मामकमिवान्तःपुरं कुत्राप्यन्यत्र व्यलोकि ?, स्त्रीलुब्धमवगत्य तं नारदोवकुमारभत—राजन् ! एवं पृच्छया त्वमवश्यं कूपमण्डूक इव लक्ष्यसे —यत्कश्चित्सागरवासी मण्डूकः कूपमण्डूकान्तिकमा-

गात्, तदा कूपवासिना पृष्टः—भ्रातः! क ते वासः, कुतो वाऽऽगम्यते ?; सागरवासी जजल्प—बन्धो! रत्नाकरे निवसामि, तत एवाऽऽगच्छामि च। पुनरवोचत्कूपवासी—सागरः कियानस्ति ?, तेनोक्तं महीयान्। कूपदर्दुरो निजाङ्घ्री प्रसार्य जगाद—इयन्मात्रो वर्त्तते किम् ?, नहि नहि स तु महानस्ति। तेन हस्तौ पादौ च वितत्य न्यगादि—तर्हि किमेतावानस्ति ?, तेनोक्तम्—मित्र! उदधिर्महाप्रमाणो वर्त्तते। ततः स्वकूपे परित उत्प्लुत्य जजल्प—किमियन्मात्रोऽस्ति ते समुद्रः ?, विहस्य सागरवासिनोक्तम्—इतस्तु बहुविपुलो वर्त्तते। ततः कूपमण्डूकोऽवदत्—इतोऽपसर, यतोऽमुष्मान्मत्फालतो व्यायतं क्वापि किमपि नैव विद्यते। राजन्! त्वमपि तद्वदेवेयतीरेव स्त्रीः पश्यन् वेत्सि—यन्मदीय दारेभ्यो विशिष्टा कापि कामिनी जगत्यां नास्ति। परन्तु हस्तिनापुरे निवसतां पाण्डवानां प्रेयस्या द्रौपद्याश्चरणाङ्गुष्ठे यावती भा वर्त्तते, तावती द्युतिरेतासां वदनेऽपि नैवास्तीति व्याहृत्य नारदः स्वस्थानमगमत्। इतश्च पद्मोत्तरो राजा तद्रूपमोहितस्तल्लाभोपायान् विचिन्तयंस्तां विना चात्मानं निष्फलं जानन् यदा कमपि सुलभमुपायं नापश्यत्, तदा तदर्थमष्टमतपसा पूर्वभवसखं देवमाराधयामास। स देवः प्रत्यक्षीभूय तमुवाच—सखे! मामधुना किमर्थं सस्मर्थ ?, राजोवाच—द्रौपदीं विना मे राज्यं जीवितञ्च विफलायते, अतस्त्वं तामानीय मम समर्पय। देवोऽवदत्—सखे! सा खलु सतीनामग्रणीर्वर्वर्त्ति, जात्वपि शीलं नो भङ्क्ष्यति तर्हि मुधा तामत्रानीय किं स्यात् ?, इत्थं बहुवारितोऽपि पद्मोत्तरो यदाग्रहं नामुञ्चत्तदा देवस्तत्र गत्वाऽवस्वापिनीं निद्रां वितत्य सुखसुप्तां तां पल्यङ्कसहितामुत्पाट्य पद्मोत्तरस्य वाटिकायां मुमोच। जगाद च—राजन्! त्वमेतन्महदकार्यं मया कारयाञ्चकर्थ, अतः पुनरीदृशकार्यकरणाय मां मास्मार्षीः, स्मरिष्यसि चेत्तथापि नैवाऽऽगमिष्यामि, इत्याभाष्य देवः स्वस्थानमाययौ। द्रौपदी च यदा जजागार तदैवं ध्यातुं लग्ना—यदत्र को मामानीतवान् ?; तदा पद्मनाभस्तामेवं बभाषे—अयि सुभगे! अलमिदानीं शोकेन यतस्त्वं देवतया भोगाय मयैवाऽत्राऽऽनायितासि, अतएव मया सार्धं विषयसुखं भुङ्क्ष्व, मदनशरपरिपीडितं दासमिव रतिं याचमानं मां सुखय। द्रौपदी जगाद—षण्मासपर्यन्तं मन्नामापि मा गृहाण, यतो मामनुगन्तारः पञ्चपाण्डवा महौजसो विश्ववन्द्याः श्रीकृष्णश्च विद्यन्ते। यद्येते नो शोधयिष्यन्ति। इयता समयेन, तर्हि यथा निगदसि तथा भविष्यति पद्मनाभोऽपि कोऽप्येतस्याः शुद्धिकृते नाऽत्राऽऽगन्तुमर्हति, हठाद्रागोऽपि नोत्पद्यत इति मनस्यवधार्य तदुक्तिमुररीचक्रे। तदनु तां द्रौपदीं सौधे स्थापयामास। तत्र च तिष्ठन्ती सा षष्ठं तपो विदधती पारणादिवसे चाऽऽचाम्लं कर्त्तुमारेभे। इतश्च जाते प्रभाते शयनागारे प्रेयसीमपश्यन्तः पाण्डवास्तन्माता च दुःखीभवन्तः सर्वत्र दिक्षु तां गवेषयितुं जविनो जनान् प्रेषयाञ्चक्रिरे। यदा च तस्याः शुद्धिः कुत्रापि नैव लेभे, तदा कुन्ती स्वयमेव

द्वारिकामागत्य सर्वमेतच्छ्रीकृष्णं व्यजिज्ञपत्—वत्स ! रात्रौ सुप्तां द्रौपदीं कश्चित्सुरोऽसुरो वा, राक्षसो विद्याधरो वाऽपाहरत् । कृष्णः किञ्चिद्विहस्य तामूचिवान्—अहमेक एव द्वात्रिंशत्सहस्रं स्त्रियो रक्षामि, ते सुतास्तु पञ्च, तथाप्येकां प्रेयसीं रक्षितुं न प्रनभूवुः । कुन्ती प्रोचे-नेदानीमुपहासावसरः किन्त्वचिरादन्विष्य समानीयताम् । ततः कृष्णोऽपि बहुशः परिशोध्य तामलभमानो महतीं चिन्तामाप । तदवसरे नारदर्षिस्तत्रागात् । खिद्यमानं कृष्णमालोक्य खेदकारणमपृच्छत् । कृष्ण उवाच—नारदर्षे ! हस्तिनापुरे रात्रौ सुखसुप्ता द्रौपदी केनाप्यपाहारि, अनेकत्र भ्रमता त्वया कुत्रापि दृष्टा ? । नारदोऽवक्—आसीत्सा पापीयसी दैवादागतं साधुमपि नो भाषते स्म, न वाऽभिवादयते स्म, अतएवेदृग्दुःखेऽपतत् । मम तु तथापरिचिता नासीत्परन्तु धातकीखण्डेऽमरकङ्कायां तादृश्यैवैका सीमन्तिनी मयाऽदर्शि, को जानाति सैवाऽन्या वेति । वासुदेवो विवेद यदेतदमुनैवाऽकारि, तत्रैव सा वर्त्तते, तत्र संशयो नास्तीति निश्चित्य सह पाण्डवैः ससैन्यः कृष्णः समुद्रतीरमाययौ । समुद्रोल्लङ्घनहेतवेऽष्टमं तपो विधाय लवणाधिपतिं देवं सस्मार । सोऽपि तदग्रे प्रकटीभूय व्याजह्रे—हरे ! किमस्ति ते कार्यम् ?, अवदद्धरिः—द्रौपद्याः केनापि हृतायाः शुद्धिकृते धातकीखण्डे यियासुरस्मि, अतो मे चमूभ्यः सागरे गन्तुं पन्थानं देहि । देवोऽजल्पत्—एतदर्थं तत्र गमनाय भवान् नोत्सहतामहमेव तत्र गत्वा द्रौपदीमत्रानीय तुभ्यमर्पयेयम्, भवदादेशेन सलोकं पद्मनाभं सागरे निपातयेयम्वा । हरिरगदत्—देव ! त्वमेतत्कर्त्तुमर्हसि मनागपि नात्र संशये, परन्तु स्वयं तत्र गत्वा विपक्षपक्षं जित्वा तामानयानि चेन्महती कीर्त्तिरपि स्यादतो नः षण्णां रथगमनमार्गं वितरतु । ततः सुस्थितदेवप्रदत्तमार्गेण पाण्डवैरनुगतः श्रीकृष्णः समुद्रमुल्लङ्घ्याऽऽमरकङ्कामागत्य क्वचिदेकत्र रम्योद्याने तस्थौ । ततो दारुकं सारथिं दूतं विधाय तदभ्याशं प्राहिणोत्, सोऽपि दूतस्तत्पार्श्वमागत्य निर्भीकः पादोपरि पादं निधाय भ्रुवौ वक्रीकृत्य तमेवमभाषिष्ट—पद्मनाभ ! श्रीकृष्णो वासुदेवस्त्वां मन्मुखेन यदुवाच तदाकर्णय, त्वं हि चौरवद्रात्रौ सुप्तां पाण्डवप्रयेसीं द्रौपदीमपजहर्थ, तदतीवगर्हितं चकर्थ । यद्यप्यद्यापि किमपि गतं नास्ति, अतोऽत्राऽऽगताय मह्यं तामर्पय । तच्छ्रुत्वा पद्मनाभः कोपाटोपं वितन्वन्नुवाच—अरे ! किमहं प्रत्यर्पणाय तामपाहरं यदेवं भाषसे, अपसर स्वस्वामिनं ब्रूहि—यच्छक्तिं बिभरते चेद् युद्धाय सज्जताम्, अहमपि क्षत्रियोऽस्मि, मनागपि ततो नैव बिभेमि । इत्थमाभाष्य निर्भर्त्स्य च दूतं विससर्ज, दूत आगत्य सकलं तद्भाषितं श्रीकृष्णमुवाच । तच्छ्रुत्वा दुःसाध्यो रोगो यथौषधिमन्तरा न नश्यति, तथाऽयमपि दुर्धीर्युद्धमेव कामयते, इति भाषमाणः कृष्णः समराय सज्जितोऽभवत् । पद्मनाभोऽपि सह सैन्यगणैस्तदभिमुखं युयुत्सुरायासौ । तस्मिन्नवसरे पाण्डुपुत्रा ऊचुः—स्वामिन् ! वयममुना साकं योद्धुं समराङ्गणे व्रजामः । तत्राऽस्माकं

पराक्रमो हीयेत, नः पराजयो वा संभवेत्तदाऽवश्यं त्वया साहाय्यं कर्त्तव्यम् । कृष्णोऽवक्-भोः पाण्डवाः ! भवन्तो महाबला लब्धकीर्त्तयस्तथाप्येवं बिभीथ कातरवद् भापध्वे च तेनाऽनुमिनोमि यद्वो विपक्षाज्जयप्राप्तिर्दुष्करैव, तथापि समुत्साहितास्ते पाण्डवा युद्धाय चेलुः । तत्र पद्मनाभेन युध्यमानास्ते विजिग्यिरे । तत्रावसरे भीत्या समराङ्गणात्पलायमानास्ते सिंहनादञ्चक्रुः। तच्छ्रुत्वा पाण्डवानां पराजयमनुमाय कृष्ण एकाक्येव रथमारुह्य तत्रागत्य विपक्षपक्षं मन्थितुं लग्नः । मुरारेः शार्ङ्गरवमाकर्ण्यैव कान्दिशीकाश्चम्वः सकला अपि नेशुः । स्वयमपि पद्मनाभः कथमपि नष्ट्वा नगरान्तः प्रविश्य पुरद्वारि कपाटं पिधाय स्वमत्रायत । तदा नरसिंहरूपधारी मुरारिरपि तलप्रहारेण नगर्याः कोट्टमभनक्, तस्मिंश्च भग्ने सर्वे लोकास्तत्रसुः, प्रासादाश्च भूयांसो निपेतुस्ततो महतीं भीतिमापन्नो निरुपायः पद्मनाभो द्रौपद्याः समीपमागत्य तामवादीत्-सतीमतल्लिके ! मम शरणं भव । द्रौपदी बभाषे-रेदुर्मते ! मया तु प्रागेव गदितं यन्मामत्राऽऽनीय सुखं नानुभविष्यसि, यतो मद्गवेषणाय कृष्णप्रमुखा बहवो बलीयांसो विपक्षपक्षजेतारः समेष्यन्ति, अस्त्वधुनापि जिजीविषसि चेत्स्त्रीवेषं विधाय मुखे च तृणं दत्त्वा मत्पृष्ठे स्थीयतामिति । द्रौपद्या आपितमुरीकृतवान् सोऽपि । तावत्तत्र श्रीकृष्णः समायातः, धृतस्त्रीवेषं पद्मनाभं द्रौपद्याः पृष्ठे स्थितमालोक्य कोऽयमित्यपृच्छत् । सोवाच-भवद्भीत्या राजा पद्मनाभ इत्थमत्रागत्य तावकक्रमतामरसौ सेवितुं स्थितोऽस्ति । इति तयोक्ते पद्मनाभः पाहि मां शरणागतमिति व्याहरन् वासुदेवस्य चरणकमलयोः पपात । तदा कृष्णोऽपि तदुपरि दयामानीय जीवन्तं तममुञ्चत् । बभाषे च पुरैवं त्वया नाऽवेदि यदस्याः शोधयितारो भूयांसोऽत्रागता मां दुर्दशां करिष्यन्तीति । याहि 'एतस्या दययैव त्वां जीवन्तं जहामि' इत्याभाष्याऽखण्डितशीलशालिनीं द्रौपदीं लात्वा सह पाण्डवैः कृष्णः परावर्त्तत । विजयसूचनाय पाञ्चजन्यमधमत् । एतस्मिन्नवसरे तत्रैव क्षेत्रे श्रीमुनिसुव्रततीर्थकर्त्तुः पार्श्वे देशनां शृण्वन्नासीत्कपिलो वासुदेवः । स मुरारेः शङ्खध्वनिं श्रुत्वा मनसि शशङ्के-यदपरः कोऽप्यत्र वासुदेवोऽजायत । अतएव भगवन्तमपृच्छत्-भगवन् ! किमत्र कश्चिदपरो वासुदेवो जज्ञे, यो मे शङ्खं दध्मौ । भगवानुवाच-कपिल ! एकस्मिन् क्षेत्रे युगपदुभौ तीर्थङ्करौ वासुदेवौ वा न भवतः । अयन्तु जम्बूद्वीपस्थो भरतक्षेत्रीयः कृष्णस्त्वमिव समृद्धिशाली वासुदेवः पद्मनाभेन हृतां कौन्तेयपत्नीं लातुमत्रागात् । सएव पद्मनाभं विजित्य परावर्त्तमानः शङ्खेन जयध्वनिं वितताम । एतन्निशम्य तीर्थङ्करमभिवन्द्य तत उत्थाय सदर्शं वासुदेवमागतमवलोकितुमुदधेस्तीरमाययौ कपिलः । तावता कृष्णस्तु बहुदूरमुपयातस्तथापि तत्रोदधौ गच्छतां रथानामनेकवर्णामत्युन्नतां वैजयन्तीमालोक्य कपिलोऽपि शङ्खनादेन कृष्णमित्यभ्यधात्—सखे ! तत्र भवता सह मेलनाय समागच्छामि, अतस्त्वं तत्रैव क्षणं तिष्ठ । श्रीकृष्णोऽपि निजशङ्खनादेन कपिलमेवमसूचयत्—मित्र ! ममाप्यासीद् भवद्दर्शनौत्सुक्यम्, परमधुनाऽतिदूरं

मार्गमतिक्रम्य मध्यमार्गे स्थितिः श्रेयसे नस्यादतस्त्वया तत एव ममोपरिकृपादृष्टि-वृष्टिः कार्येति निगदन्नग्रे चचाल । कपिलः पश्चाद्वलित्वा पद्मनाभमूचे-भोः पामर ! तव नगर्याः कोष्ठभञ्जनं केनाऽकारि ?, पद्मनाभो जगाद—स्वामिन् ! जम्बूद्वीपतः श्रीकृष्णो वासुदेवो मद्राज्यं जिघृक्षुरिहागात्, तेन साकं मया बहुभीषणमयोधि, सएव सर्वमेतदकृत । तदाऽलीकं वचो निशम्य प्रकुपितः कपिलो व्याजहे-रे पापिष्ठ ! ममाग्रे मृषा जल्पसि ?, धिक्त्वामनर्थकारिणमित्थं निर्भर्त्स्य देशात्तस्मान्निष्काश्य तत्पुत्रञ्च तद्राज्ये संस्थाप्य कपिलो वासुदेवः स्वस्थानमागात् ।

अथ पुरुषोत्तमः श्रीकृष्णः सागरं सुखेन समुल्लङ्घ्य पाण्डवानाख्यत्-अहं लव-णाधिपसुस्थितदेवं द्रष्टुं व्रजामि, यूयं नावमारुह्य गङ्गामुत्तीर्य मदर्थं नावमत्र तूर्णं प्रेषयेत । इत्युक्त्वा श्रीकृष्णे प्रस्थिते द्रौपद्या सार्धं पाण्डवा महापोतेन गङ्गामुत्तेरुः । तत्रैवं तैरचिन्ति–नावं विना श्रीकृष्णो भागीरथीमुत्तरिष्यति नवेति दिदृक्षवस्ते नावं न प्रैषिषुः । इतः कृष्णः पोतं प्रतीक्षमाणश्चिरमतिष्ठत्, मनसि शशङ्के च–यदेते पाण्डवा ब्रुडिताः किम् ? नोचेत्कथमियत्यां वेलायां गतायामपि नौर्नागात्, प्रान्ते च तेषां ब्रुडनमवधार्य करेणैकेन ससारथिं रथं, द्वितीयेन शस्त्राणि, तृतीयेन तुरगांश्चतुर्थेन सार्धद्याधिकषष्टियोजनाऽऽयतां गङ्गां सन्तरन्मध्यगतः श्राम्यति स्म । तदा श्रमापनोदाय मध्ये रम्यं स्थलं जाह्नवी व्यकरोत्, तत्र चिरं विश्रम्य पुनरवशिष्टां तामुत्तीर्य तीरमा-गात्। तत्र हसतस्तानुदीक्ष्य प्रकुपितः श्रीकृष्णो बभाषे-भोदुर्मतिकाः ! भवद्भिर्नौः कथं न प्रेषिता ?–तैरुक्तम्, भवत्पौरुषप्रेक्षणाय । पुनरूचे वासुदेवः–लक्षयोजनमम्बुं सागर-मुल्लङ्घ्य वः पञ्चानामपि विजेतारं पद्मनाभं जित्वा हृतां द्रौपदीं वः समार्पयम् । तदा मे पौरुषं किं नाऽपश्यत ?, इत्थं कोपाटोपं दर्शयन् पञ्चापि कौन्तेयाँल्लोहदण्डमादाय हन्तुमुद्यतोऽभवत् । परमेवं दध्यौ–यदमीषां हनने महाननर्थो भवितेति विचिन्त्य दयालुत्वात्तानहिंसन् रथानेव तेषामभाङ्क्षीत्, अवोचच्च-दुर्मतयः ! मुखं मां मादर्शयत, देशान्तरमेवाऽतः परं श्रयत । ततः श्रीकृष्णः सहसैन्यगणैर्द्वारिकामाप । पाण्डवा अपि हस्तिनापुरमीयुः, कृष्णाऽऽदिष्टदेशनिष्काशनादिसकलोदन्तं मातरं न्यवेदयंश्च । ततः कुन्ती तदैव द्वारिकामागत्य श्रीकृष्णं मधुरवचसा प्रसादयामास । कृतापराधान् निजसु-तांस्तत्पादयोर्दण्डवन्न्यपातयँश्च । तदा तानेवमुवाच वासुदेवः–यत्र रथानभनजम्, तत्रैव ‘ रथनूपुर ’ नाम नगरं निर्माय निवसत । ततस्ते तत्रैव गत्वा न्यवात्सुः, प्रान्ते च पुत्राय राज्यं दत्वा द्रौपद्या सह दीक्षां लात्वा षष्ठाऽष्टमादितपांसि कृत्वा भणित्वा च चतुर्दशपूर्वान् शत्रुञ्जये महातीर्थे मोक्षमापुः । द्रौपद्यप्येकादशाङ्गीमधीत्य दुष्कराणि तपांसि कृतवती, प्रान्ते च मासिकीं संलेखनां कृत्वा मृत्वा पञ्चमं देवलोकं प्राप्तवती, ततश्च्युत्वा महाविदेहक्षेत्रेऽवतीर्य मोक्षमधिगमिष्यति ।

६ बहुशो युगलिनो मृत्वा नरकं न गच्छन्ति, किन्त्वस्यामवसर्पिण्यां हरिहरिण्यौ नरकं जग्मतुरित्याश्चर्यम् । तथाहि—

अस्मिन्नेव जम्बूद्वीपे भरतक्षेत्रे कौशाम्बी नगरी वर्त्तते, तत्र सुमुखो नाम राजाऽस्ति । स चैकदा वसन्तर्त्तौ गजारूढः पुराऽऽसन्नवाटिकायां क्रीडार्थं गच्छन्मार्गे कस्यचिद्वीरकाभिधशालापतेरतिरूपवतीं प्रेयसीं वनमालामवलोक्य परस्परसरागावलोकने च जाते तदनुरागीभूयैकपदमपि गन्तुं नो शशाक क्षितिपतिः । तदा मन्त्रिणा भणितम्—स्वामिन् ! कथमत्र चिरं तिष्ठसि, अग्रे न चलसि तत्र को हेतुः ? । तदुक्तिमाकर्ण्य लज्जया तदग्रे चचाल, परन्तु तामेव ध्यायतः शून्यचित्तस्येव दृश्यमानस्य तस्य राज्ञो मनः क्वापि नाऽरंस्त । मन्त्रिणा पृष्टः—राजन् ! अद्येदृशी मनसि शून्यता कथमजायत, तत्कारणं ब्रूहि । भूयोभूयस्तेन बह्वाग्रहेण पृष्टः क्षोणीधवस्तत्कारणं तमवादीत् । तच्छ्रुत्वा प्रधानोऽवक्—प्रभो ! मा शोचीः, अचिरादेव तां करगतां ते विधास्यामीति सत्यं जानीहि । ततो गृहागतो मन्त्री तदैवाऽऽत्रेयिकापरिव्राजिकामाकार्य तत्कार्यमादिशत् । सापि विदग्धा तत्प्रेषिता तदन्तिकमागत्य क्षणं शयानां क्षणं निःश्वसतीं, क्षणमुत्तिष्ठन्तीं, क्षणमुपविशन्तीमित्थं चेष्टमानां विरहव्याकुलां वनमालामालोक्य समूचे—सुन्दरि ! तवेदृशी चेष्टा कथमजायत ?, मनसि ते का बाधा ? तां मे कथय । तूर्णमहं तद्वारणोपायं कुर्याम् । तच्छ्रुत्वा सा वनमाला स्वमनोगतं सर्वमवादीत् । तन्निशम्य परिव्राजिका न्यगदत्—सुभगे ! चिन्तां मागाः, अवश्यमहं त्वां राज्ञा सह श्वः सङ्गमयिष्यामि । ततः प्रभाते जातेऽवसरं लब्ध्वा सा परिव्राजिका तां वनमालां नृपान्तिकमानीतवती । तामालोक्याऽन्तःपुरेऽतिष्ठिपत्, वैषयिकं च सुखं तया साकं भोक्तुमारभत । इतश्च गृहागतो वीरशालिकः प्रेयसीमपश्यन् सर्वत्र गवेषयन् नैकटिकजनांश्च भूयोभूयः पृच्छन् प्रियाविरहत आधिमानजायत, दिवानिशं तामेव स्मरंश्चतुष्पथादौ पर्यटन् विक्षिप्तोऽभवत् । अथैकदा प्रावृषि राजभवनाऽधस्तादागत्य यावदतिष्ठत्तावद् वनमालया सह समागतो राजापि गवाक्षे तस्थिवान् । तदवसरे नीचैर्विक्षिप्तचेतसं वीरशालिकं निरीक्ष्य धिङ् मां परकान्तापहारिणं ध्रुवमेष मया तद्विरहानले निपात्य दुःखितः । एतदकृत्यकरणेन महापापीयांश्चाऽभूवम् । इत्थमात्मानं निन्दन् राजा भृशमनुतताप । वनमालाऽपि 'हंहो ! अमुष्य प्रियतमस्य वोढुस्त्यागेन का मे गतिर्भविष्यतीति' भृशमन्वशोचत् । इत्थं पश्चात्तापं विदधतावुभावाकस्मिकेन विद्युत्पातेन मृत्वा हरिवर्षक्षेत्रे युगलिकावभूताम् । तत्र च कल्पवृक्षः सर्वेभ्यो मनोवाञ्छितं वितरति, तेन सकला अपि सुखमनुभवन्ति ।

वीरशालिकोऽपि तौ मृतौ श्रुत्वा अहो ! लग्नं तयोः पापीयसोः पापमिति मनोगतं तद्दुःखं विमुच्य वैराग्यादज्ञानतपस्तप्त्वा, सौधर्मदेवलोके किल्बिषीदेवोऽभवत् । तत्रैवावतीर्णौ निरीक्ष्य दध्यौ—हंहो ! इमौ मे प्राक्तनौ विद्विषौ स्तः, यौगलिकं सुखमत्रानुभूय मृत्वा देवौ भविष्यतश्चेद्वरं न स्यात् । यथा देवौ न स्यातां तथा मया यतितव्यमित्यवधार्य तदैव तावुत्पाट्य चम्पापुर्यामिक्ष्वाकुवंशीये चण्डकीर्त्तिनृपे निरपत्ये मृत्युं नीते सर्वे पौरा राजकीयाश्च लोकाः को नो राजा भवितेति चिन्तापरा आसन्, तत्राऽऽनीय तेभ्यः समार्पयत्, अभ्यधाच्च युष्माकं महती चिन्ताऽऽसीदत एनं नृपं कुरुत, अमुष्य सुरलोके कल्पतरोः फलाशनाऽभ्यासो वर्वर्त्ति, तत्स्थाने भवन्तो मृगयाश्चामुं शिक्षयत । देवो मनसि दध्यौ—यदसौ नूनममुना कर्मणा मांसाऽऽशी भूत्वा मृत्वा च नरकं गन्ता, ततो मे वैरशुद्धिर्भवितेति । अथ तयोर्हरिहरिणीति नाम्नौ लोकाभिगद्य स देवः स्वस्थानमगमत् । इतश्च तं हरिराजं मद्यमांसव्यसनिनं लोका अचिरादेव चक्रुः । तत एव लोके हरिवंशः पप्रथे । इत्थं तौ हरिहरिणीयुगलिकौ मृत्वा मद्यमांसाद्यमेध्यव्यसनान्नरकं यातौ ।

७ न हि कदाचिदपि चमरेन्द्र ऊर्ध्वं गच्छति, किन्त्वस्यामवसर्पिण्यां दक्षिणाऽसुरनिकायस्याधिपतिश्चमरेन्द्रो हि प्रथमं स्वर्गं जगामेत्याश्चर्यम् । यथा—

अमुष्मिन्नेव भरतक्षेत्रे विभेलसन्निवेशे कश्चिदेकः पूरणमहेभ्य उवास । सचैकदा पश्चार्धयामे समुत्थाय परिवारांश्च जागरयन्मनस्येवं निम्रष्टुमलगत् । पुरा जन्मनि यदकारि सुकृतम्, तन्महिम्नैवाऽस्मिन्भवे किलेदृशी सम्पत्तिरलम्भि । अतो मयाऽत्रापि भवे किमपि सुकृतं कर्त्तव्यं येनाऽग्रे सम्पत्तिमान् भविष्यामीति विचार्य प्रभाते ज्ञातीनापृच्छ्य कुटुम्बचिन्तां पुत्रोपरि निक्षिप्य तापसीं दीक्षां लात्वा स एवमभिजग्राह—यन्मया द्वौ द्वावुपवासौ कृत्वा पारणं कर्त्तव्यं यावज्जीवम् । तत्रापि चतुरस्रपात्रमादाय भिक्षिते प्रथमे कोणे यत्पतेत्तज्जलचराय देयम्, द्वितीये निपतितमपि भिक्षाऽन्नं पक्षिभ्य एव देयम्, तृतीये पतितं त्वतिथिसादेव कर्त्तव्यम्, स्वयन्तु तुरीये यत्पतिष्यति, तदेव भिक्षान्नं विशुद्धजलेन प्रक्षाल्य भोक्तव्यम् । इत्थमर्कवर्षाणि तपः कृत्वा मृत्वा चमरचञ्चाराजधान्यां चमरेन्द्रनामा भवनपतिर्देवानामिन्द्रोऽभवत् । जातमात्र एव निजशिरसि सौधर्मेन्द्रपादमवधिना ददर्श, तेन तस्य मनसि महती क्रोधानलज्वाला समुत्तस्थौ । तदा सकलसामानिकदेवानाकार्य व्याजह्रे—भो देवाः ! कोऽसौ दुर्धीर्ध्वस्तपुण्यो मम शिरसि पादौ निधायाऽऽस्ते ?, देवा ऊचिरे—पूर्वजन्मार्जितसुकृतराशिकोऽतुलार्द्धिबल-

पौरुषः सौधर्माधिपतिरस्ति, एषाऽनादिकालिकी मर्यादा वरीवृत्यते, अत्र एतत्सोढव्यमेव भवता, मनागपि मनसि कोपो नाऽऽनेतव्यः। प्रागपि ये भवादृशा इन्द्रा अभूवँस्तेऽप्ये-तत्सेहिरे। तदाकर्ण्य क्रोधादन्धीभूतः सोऽवदत्—नाऽहमेतत्सहिष्ये, ये पुराऽसहन्त तेऽन्या आसन्, अहन्तु तादृशो नास्मि, अवश्यमेव तत्र गत्वा तत्पदं छेत्स्यामि। इत्थं प्रजल्पन् देवैर्बहुधा वार्यमाणोऽपि नैव न्यवर्त्तत । स शस्त्रशालामागत्य परशुं लात्वा चचाल। प्रयाणवेलायां सुसुमारनगरे प्रतिमास्थितं श्रीवीरं शरणीकृत्य लक्षयोजनमितं शरीरं विचकार। ततो ब्रह्माण्डस्फोटिनादं वितन्वानस्त्रासयंश्च ज्योतिश्चक्रं, बिभीषयंश्च देवान्, कम्पयंश्च क्षोणीं, पातयंश्च भूधराणां शिखराणि, भ्रामयंश्च परितः परशुम्, समुद्वमंश्च क्रोधाग्निज्वालाम्, महागर्विष्ठः सहसैव सौधर्मेन्द्रसभामाययौ । तत्रैकश्चरणं सुधर्मावतंसकविमानस्य पद्मवरवेदिकायामपरम्पादं सुधर्मासभायामतिष्ठिपत्। तदा तत्र सर्वे देवा भयभ्रान्ता इतस्ततो नेशुः। नश्यतस्तानवादीच्चमरेन्द्रः—रे रे देवाः! नष्ट्वा क्व यास्यथ, क्वास्ते वः स्वामी? तं तूर्णं मां दर्शयत, येनाऽधुनाऽमुना परशुना तच्छि-रश्छिन्द्याम्। देवान् व्याहरन्मुखादग्निज्वालामुद्वमन् लम्बोष्ठः कूपगल्लः सूर्पकर्णो गर्त्त-गल्लो नासिकाविवरः कोलदन्तः पाणौ च वृश्चिकगणं कण्ठे भोगिमालां बिभ्राणः क्वचिदाखून् क्वचिन्नकुलान् बध्नन् साक्षात्कृतान्ताकार आसीत् । ईदृशं महाभीषणं तमालोकमाना देवा देव्यश्च त्रस्ताश्च्युक्रुशुः। तच्छ्रुत्वा किमिति जल्पन्नवधिना सौध-र्मेन्द्र इत्यवेदीत्—नूनमेषोऽपूर्णत्वाद् घटवद्रोरवीति, अत एनं मर्त्तुकाममखर्वगर्वधरं शिक्षयेयमिति निश्चित्य सहस्रदेवैरपि वोढुमशक्यं प्रलयकालानलोपमं भासुरं वज्रं तदु-परि सुधर्माधिपतिर्विससर्ज। तमापतन्तं विलोक्य कान्दिशीकः ऊर्ध्वपादधोमुखो भूत्वा विकृतं शरीरं संक्षिप्य कुन्थुमित्रातिसूक्ष्मां तनुं कृत्वा शरणं शरणमिति व्याहरन् पला-यमानश्चमरेन्द्रः श्रीवीरस्वामिचरणान्तः प्राविशत् । तावच्छक्रोऽप्यवेत्—यदयं निज-शक्त्या कदाप्यत्रागन्तुं नैवाऽर्हति, अतोऽवश्यमर्हतां तत्प्रतिबिम्बस्य भावितस्य कस्य-चिदनगारस्य वा शरणं लात्वा सोऽत्रागात्। तस्याऽवज्ञा तु श्रेयसी नो भवितुमर्हति। इत्यवधार्यावधिज्ञानेनाऽवेदीत्—यदसौ श्रीवीरजिनं शरणमकरोत्। तदनु तस्य पृष्ठे शक्रेन्द्रोऽप्यागत्य भगवतश्चतुरङ्गुलदूरे स्थितं स्ववज्रमाकाक्षीत्। यतस्तस्य जिनेन्द्रशर-णागतं पराभवितुं शक्तिर्नोदेति, केवलं चतुरङ्गुलदूरे स्थित्वा परिभ्रमन्नासीत् । इत्थं चमरेन्द्रं वीरजिनशरणागतत्वादमुञ्चत्। अवोचत्प्रभुम्—मन्तुर्मे क्षम्यताम्। ततः किय-द्दूरमागत्य क्षोण्यां चरणाघातेन निपीड्य जगाद-रे चमर! सम्प्रति वीरभगवतः शरणं लात्वा मत्तो मा भैषीरित्यमभिधाय भगवन्तमभिवन्द्य शक्रेन्द्रः स्वर्लोकमागात्। चम-रेन्द्रोऽपि वीरविभुं स्तुत्वा वन्दित्वा च स्वीयां चमरचञ्चां राजधानीमागात्। स्वसिंहा-सनोपरि विच्छायवदन उपाविशत्। तदा सामानिका निलिम्पाः समागत्यैनं नेमुर्जगदुश्च—

किमभूद्यद्विच्छायो दृश्यसे ?, इन्द्रोऽवादीत्—यन्मां जीवन्तमत्रागतं पश्यथ, तत्र वीर-जिनेन्द्रस्याऽनुकम्पनमेवाऽवगच्छत, अतस्तद्वन्दनार्थं सर्वे तत्र व्रजन्त्विति निगद्य देवै-र्देवीभिश्च सत्रा तत्राऽऽगत्य भगवन्तं प्रणम्य नृत्यश्च विधाय पुनः स्वस्थानमागतवान् ।

८ अष्टापदाऽचल उत्कृष्टपञ्चशतधनुरवगाहिन ऋषभो नवनवति-भरतवर्जितास्तत्पुत्रा अष्टौ भरतजन्मान इत्थमेतेऽष्टोत्तरशतपुरुषा युग-पदेव सिद्धिमापेदिरे । तच्च मध्यमावगाहनवतामेव सम्भवति । उत्कृ-ष्टावगाहनवतां त्वेकस्मिन् समये द्वावेव सिद्धिं व्रजतः, अमुष्यामवस-र्पिण्यान्तु युगपदष्टोत्तरशतपुरुषाः सिद्धिमीयुरित्याश्चर्यमभवद् ।

९ यदा श्रीमहावीरः कौशाम्ब्यां पुर्यां समवससार, तदा सूर्यच-न्द्रमसौ यद्विमानं ज्योतिश्चक्रे शाश्वतं वर्वर्त्ति, तेनैव मूलविमानेन भगवद्वन्दनार्थं तत्राऽऽजग्मतुः । अत्र कश्चिदेवमाचष्टे—यदुत्तरं वैक्रियं विमानमारुह्यैव तावाजग्मतुस्तत्तु निर्मूलमेवाऽस्ति । मूलविमानेन तदा-गमनमभूतपूर्वत्वादाश्चर्यकरमिति ।

१० सुविधिनाथनिर्वाणतः कियत्कालानन्तरं हुण्डावसर्पिणीदोषा-त्सर्वेषां साधूनामुच्छेदो जज्ञे, तदा लोका एवमाचष्टुं लग्नाः—यदधुना साधुष्वसत्सु को धर्मं पृच्छयेत ? इति विचारयन्तः श्रीऋषभदेवस-मये ब्राह्मणा अपि सुश्रावका आसन्निति धिया ये स्थविराः श्रावका आसंस्तानेव सर्वे पृच्छन्ति स्म धर्मम् । तेऽपि यथाश्रुतं ज्ञातं वा तथा तान् पृच्छकानाचक्षते स्म । सर्वे जनास्तेभ्यो धनानि वसनानि च वितरीतुं प्रारेभिरे । ततो लोभाकृष्टास्तेऽसंयता लोकानेवमूचिरे—यद-स्मभ्यं परया श्रद्धया ये लोकाः स्वर्णं गां पृथ्वीं वस्त्रादिगजतुरगरथं शय्यासनानि च ददिष्यन्ते, तेऽत्र परत्र च सुखिनो भविष्यन्ति । यद-स्मिन् काले वयमेव सुपात्रभूताः स्मः । इत्थं मनःकल्पितनानाशा स्त्राणि श्रावयित्वा मोहिताः सर्वे लोकास्तानेव गुरून्मेनिरे । इत्थमसं-यतानां पूजा सर्वत्र प्रससार, बहवो जैनेतरे पाखण्डिनो दर्शनान्तरीया

१ कथेयं नवमे व्याख्याने मृगावत्याधिकारे द्रष्टव्या ।

अपि पूज्या अभूवन् । पुरा तु संयता एव मह्या आसन्, साधूनामभावे यदसंयतानां माहात्म्यमजायत, तीर्थस्य विच्छेदो जज्ञे । एतद्व्यतिकरः श्रीशीतलनाथजिनेशतीर्थस्थापनादर्वाक् किलाऽऽसीत्तदाश्चर्यमभवत् ।

युगपदष्टोत्तरशतपुंसां सिद्धिगमनं श्रीऋषभदेवतीर्थे, हरिवंशकुलोत्पत्तिः श्रीशीतलनाथतीर्थे, स्त्रीतीर्थङ्करी श्रीमल्लीनाथतीर्थे, अमरकङ्कागमनं श्रीनेमिनाथतीर्थे, असंयतानां द्विजादीनामर्चा श्रीसुविधिनाथतीर्थे, श्रीआदिनाथतीर्थेऽपि मरीचिकपिलादीनामसंयतानामर्चाशोऽश्रूयते । शेषाणि च तानि पञ्च श्रीवीरतीर्थे ज्ञातव्यानि ।

१८ श्रीवीरस्य गर्भपरावर्त्तनम्—

अथैवं शक्रो विचिन्तयति—नीचगोत्रानुबन्धिकर्मोदयात्तीर्थङ्कर—चक्रवर्त्ति—बलदेव—वासुदेवा अपि तुच्छादिकुलेऽवतरन्ति, परमेते योनिमार्गतो नैव निर्गच्छन्तीति शाश्वती मर्यादा जागर्त्ति । अतोऽहमपि देवानन्दाया गर्भाद्भगवन्तमाकृष्य सिद्धार्थस्य राज्ञः पत्न्याः काश्यपगोत्रायास्त्रिशलाया गर्भे स्थापयेयम् । इति निश्चित्य कटकाधिपतिं हरिणैगमेषिदेवं खल्वेवमादिदेश—यद्ब्राह्मणकुण्डग्रामे ऋषभदत्तविप्रस्य भार्याया देवानन्दाया गर्भेऽवतीर्णं भगवन्तं महावीरमाकृष्य क्षत्रियकुण्डग्रामे सिद्धार्थक्षत्रियस्य राज्ञो भार्यायास्त्रिशलायाः कुक्षौ, त्रिशलाया गर्भन्तु देवानन्दायाः कुक्षौ स्थापय ? ।

यत्तत्तु श्रेणिकादिषु बहुषु महाराजेषु सामान्यक्षत्रियराजस्य सिद्धार्थस्य पत्न्या एव गर्भे श्रीवीरजिनं स्थापयेति कथं हरिणैगमेषिदेवंप्रत्यादेशः ? । तदेवं समाधत्ते—देवोऽपि प्रारब्धमनुसृत्यैव समेषां प्राणिनां शुभाऽशुभं चिकीर्षति, जात्वपि ततो विपरीतं विधातुं नैवेष्टे ।
सा त्रिशला पूर्वजन्मनि कनीयसी याता देवानन्दा ज्यायसी, याताऽऽ-

सीत् । एकस्मिन्नेव सदने ते द्वे न्यवसताम् । परन्तु लोभादेकदा देवानन्दा त्रिशलाया रत्नकरण्डिकामहार्षीत् । ततस्तयोर्मिथः कलहोऽभवत्तथापि तदर्पणमकुर्वाणा सा देवानन्दा तत्कर्म बबन्ध । अतएव त्रिशलायामेव श्रीवीरजिनसंक्रमणस्य शक्रादेशः । अमुना च सर्वेविदाङ्कुर्वन्तु ' यदत्र यो यादृशं कर्म बध्नाति भवान्तरे स तदवश्यं भुङ्क्ते ।'

शक्रेण समादिष्टो हरिणैगमेषी कृताञ्जलिः शक्रादेशं शिरसावधार्य कौबेरीं दिशमागत्य वैक्रियशरीरकरणार्थं प्रायतत । तदनु दण्डाकारमूर्ध्वमधश्चाऽऽयतं जीवप्रदेशकर्मपुद्गलव्रजं शरीराद्बहिर्निष्काश्य हीरक १ वैदूर्य २ लोहिताक्ष ३ मसारगल्ल ४ हंसगर्भ ५ पुलक ६ सौगन्धिक ७ ज्योतिरसा ८ ऽञ्जना ९ ऽञ्जनपुलक १० जातरूप ११ सुभगा १२ ऽङ्क १३ स्फटिक १४ रिष्टक १५ कर्केतनेति जात्यानां रत्नानामसारपुद्गलाँस्त्यजन् सारान् पुद्गलानादत्ते । ततो मूलरूपं तत्रैव न्यस्योत्तरवैक्रियरूपं ध्रियते । ततो मर्त्ये चण्डा–चपला–जयन्ती–त्वरितेतराऽऽशुदेवगत्याऽसंख्यद्वीपान् सागराँश्च लङ्घयन्नस्मिँञ्जम्बूद्वीपे भरतक्षेत्रे ब्राह्मणकुण्डग्रामे ऋषभदत्तद्विजगृहे सुखसुप्ताया देवानन्दायाः समीपमागत्य भगवन्तं प्रणम्य सकलमवस्वापिन्या गाढं शाययन्, अशुभानि पुद्गलानि दूरीकृत्य शुभानि च तानि प्रक्षिप्य भगवन् ! 'आदिश' इत्याभाष्य कृताञ्जलिरबाधं यथा तथाप्रभुं लात्वा क्षत्रियकुण्डनगरे सिद्धार्थराजस्य भवने यत्र त्रिशला शयानाऽऽसीत्तत्राऽऽगत्य परिजनाँश्चाऽवस्वापिन्या गाढं स्वापयन्नशुभपुद्गलव्रजं बहिष्कृत्य शुभानि पुद्गलानि क्षिप्त्वा सुखेन भगवन्तं त्रिशलागर्भे निहितवान्।

---

१ षट्कलाधिके २८३५८० योजनमिते क्षेत्रे पदैकन्यासे चण्डा, त्रिंशत्कलाधिके ४७२६३३ योजनमिते क्षेत्रे पदैकन्यासे चपला, चतुष्पञ्चाशत्कलाधिके ६६१६८६ योजनमिते क्षेत्रे पदैकन्यासे जयन्ती, अष्टादशकलाधिके ८५०७४० योजनप्रमाणे क्षेत्रे पदैकन्यासे त्वरिता गतिर्भवति ।

याऽऽसीदमुष्या गर्भे पुत्री तां नीत्वा देवानन्दाया गर्भेऽक्षिपत् । इत्थं शक्रादेशाद् गर्भसंक्रमणादिकं विधाय हरिणैगमेषी पूर्वोक्तया देवगत्याऽसंख्येयानां द्वीपोदधीनां मध्यभागेन लक्षयोजनप्रमाणमेकपदन्यासं कुर्वाणस्तत्र सौधर्मदेवलोके सुधर्मावतंसकविमाने सुधर्मासभायां समेत्य शक्रसिंहासनाऽऽसीनं शक्रेन्द्रं निजकृतं सर्वं न्यवेदयत् ।

---

१ इत्थं तयोर्मिथो गर्भपरिवर्त्तनमकारि तत्तु न कोऽप्यपश्यत्तर्हि कथङ्कारं तत्प्रमात्वमुपगच्छेदिति केचिच्छङ्केरन् । तेभ्य एवमुत्तरं देयम्–बलदेवस्य देवकीगर्भतोऽपहृत्य रोहिणीगर्भे संक्रमणं भागवते दशमस्कन्धे द्वितीयाध्याये लिखितं यथा प्रामाण्यं वहते, तथा भगवतो महावीरस्यापि गर्भापहारः प्रमाणमिति मन्तव्यम् । किञ्चाऽन्यदप्याश्चर्यकरं वः पुराणादौ वर्त्तते यथा विशालापुर्यां वनाभिधो राजा पर्याप्तकोशो निवसति, परमेतस्याऽपुत्रत्वान्महती चिन्ताऽवर्त्तत । अतः पुत्रकामोऽसौ नरपतिः षोडशशतपत्नीरकरोत् । परन्तु भाग्यदोषादेकापि राज्ञी यदा गर्भं नो धृतवती, तदाऽपुत्रस्य मे गतिर्नो भविष्यतीति चिन्तया व्यग्रीभूतः कस्याऽप्युपदेशाद् व्यशीतिसहस्रतपस्विन आमन्त्र्य विधिवदभोजयत, त्रयस्त्रिंशत्कोटिदेवाँश्चानर्च । तदपि पुत्रमलभमानो राजा तानवादीत्–तापसाः ! यूयं मुधैव वेषमेनं बिभृथ, यतो युष्मासु समाराधितेष्वपि मे मनोरथाऽवाप्तिर्नाऽभवत् । तदाकर्ण्य कश्चिदेकोऽवदत्–राजन् ! जानाम्यहं पुत्रप्रदमुपायम् । त्वं याहि स्वर्णभाजने जलमानय, अहं तद्वारि मन्त्रयित्वा ते ददामि । या राज्ञी तज्जलं पास्यति, सा ध्रुवं पुत्रं प्रसविष्यते । तच्छ्रुत्वा प्रमुदितो राजा तदैव स्वर्णपात्रे जलं समानाय्य तस्मै तपस्विने समर्पयामास । सोऽपि च जलं सम्यगभिमंत्र्य राज्ञे दत्तवान् । स राजापि स्वर्णपात्रस्थं जलं लात्वा स्वसदनमागात् । तदा सर्वा अपि राज्यः पुत्रप्रदमेतदिति ज्ञात्वा मह्यं देहीति नृपालमूचिरे । तन्निघृत्तया कलहायमानास्ता अवलोक्य नृपोऽचिन्तयत्–हंहो ! सर्वा एता मिथः कलहायन्ते, मयेदं कस्यै देयं कस्यै न देयम्, यस्यै न दास्यामि सा दुःखिनी भविष्यतीत्यवधार्य कस्या अप्यददत् तल्लात्वा वस्त्रेण पिधाय शयनागारे स्थापितवान् । रात्रौ च पिपासाकुलो राजा दासीं जलमानेतुमादिशत्सापि मन्त्रितं वारि समानीय नृपाय दत्तवती । तन्निपीय राजा गर्भवान् बभूव । क्रमशस्तद्वृद्धौ सत्यां लज्जया सभायामागमनपि हित्वाऽन्तःपुरेव तस्थौ । ईदृशं त्रपास्पदं राज्ञः स्वरूपमवगत्य मन्त्री तानेव तपस्विन आमंत्र्य भृशमुपालब्धवान्–तपस्विनः ! यूयं किमिदमकृढ्म् ?, तूर्णमत्रोपायं कुरुत । ततस्ते तापसास्त्रयस्त्रिंशत्कोटिदेवानाराधयामासुः, तदा देवैरभ्यर्थितः सुरनायकस्तत्रागत्य तदुदरं विदार्य बालं निष्काशितवान् । लोका ऊचिरे–यदुदरादसौ निरगात्स तु पुंस्त्वाद्धापयितुं नैवार्हति । ततः स्वयमेवेन्द्रः स्त्रीरूपं विधाय स्तनं पायितवान्, तस्य च ‘ मांधाता ’ इत्यभिधामकरोत् ।



सुरसुन्दर्यास्त्रिशलायाश्चतुर्दशमहास्वप्नदर्शनम् ।

भगवतो महावीरस्य देवानन्दायाः कुक्षौ द्व्यशीत्यहानि गतानि, आश्विनकृष्णत्रयोदश्यां त्र्यशीतितमदिवसस्य रात्रौ च त्रिशलाया गर्भे संक्रमणमभवत्। तत्रेतो मामपहरिष्यतीति विद्वान्भगवान्, किन्तु संहरणकालस्यातिसूक्ष्मतया संह्रियमाणो न जानाति। ननु त्रिभिर्ज्ञानैः सहावतीर्णस्य भगवतस्तदज्ञानकथनं नो घटेत ?; अत आह—तेन देवेन भगवतस्तथा संहरणमकारि यथा भगवतो ज्ञातमप्यज्ञातमिवाऽभवत्। नो जानातीति तु संहर्त्तुः कौशल्यप्रदर्शनायैवास्तीति बोधव्यम्। संहृतोऽस्मीति तु विद्वानेव भगवान्। अपहृते भगवति तस्यामेव यामिन्यां देवानन्दा सुखशय्यायां शयानाऽपश्यत्—यदहं प्रागद्राक्षं चतुर्दशस्वप्नान्मङ्गलमयाँस्ताँस्त्रिशला हृतवतीति दृष्ट्वैव जजागार।

१९ त्रिशलायाश्चतुर्दशस्वप्नदर्शनम्—

इतश्च तस्यामेव रजन्यां भगवति गर्भे संक्रामिते यस्य स्वरूपं वर्णयितुं सहस्रजिह्वोऽपि नो शक्नुयात्तादृशे सुरेन्द्रभवनादधिकतररम्यतरे, विचित्रचित्राचित्रिते, बहिर्मृदुतरशुभ्रतरप्रस्तरविरचितकुड्ये, विविधचित्रविभूषितोर्ध्वदेशेऽतएव देदीप्यमानाऽधस्तले, मणिरत्नप्रणाशितान्धकारे, सुविभक्तबहुविधस्वस्तिकादिरचनामनोहरे, परितो विकीर्णपञ्चवर्णसुरभिकुसुममण्डिते, दह्यमानदशाङ्गादिविविधधूपसमुद्भूतप्रभूतमघमघायमानगन्धाभिरामे, शयनागारे पुण्यवतामुपभोग्ये, उभयतो न्यस्तशरीरप्रमाणदीर्घगण्डोपधानयुगले, तथा शिरःस्थाने पादयोः स्थाने च धृतोच्छीर्षके, सुरसरित्पुलिनसैकतमिव मृदुतरे, उपर्याच्छादितक्षौमपटे, रम्यतरमशकहरगृहेण शोभायमाने, नवनीतार्कतूलतुल्यमृदुले, सुरभिवासैश्च सुवासिते, शयनीये सुखसुप्ता त्रिशला गजवृषभादिचतुर्दशमहास्वप्नान् दृष्ट्वाऽजागरीत्। तथाहि—

१—चतुर्दन्तमुच्चैस्तमम्, रजतगिरिमिव गौरम्, कुम्भद्वयात्स्रवन्मदगन्धलोलुपमिलिन्दारब्धगुञ्जारवशोशुभ्यमानम्, सुरपतिगजतुल्य-

म्, शास्त्रोक्ततनुप्रमाणवन्तम्, महामेघगम्भीरनादवन्तम्, प्रशस्ताऽशेषलक्षणलक्षितम्, दन्तिनं सा प्रथममद्राक्षीत् ।

२—धवलतरकमलदलनिकराऽधिकतरशरीरशोभाधरम्, निजविग्रहत्विषा दश दिशः प्रद्योतयन्तम्, अत्युन्नतककुद्मन्तम्, सुस्निग्धरोमराजिकम्, अतिमांसलम्, सुन्दरतरमतिवर्तुलनिर्मलकमनीयगवलयुगलधरम्, सुषमाशालिसितदन्तम् प्रसन्नतरम् मङ्गलकरं वृषभमदर्शत् ।

३—शारदशर्वरीशवत्पाण्डुरम्, रजतगिरिमिव दृश्यमानम्, दृढतराऽशेषविग्रहम्, कमनीयदर्शनम्, दृढपरिपुष्टप्रकोष्ठम्, अतितीक्ष्णवलिष्ठदंष्ट्राशोभमानवदनम्, रक्तोत्पलाभकोमलोष्टतालुकम्, रक्तारविन्ददलायतविलोलजिह्वम्, पीतविद्युच्चञ्चलनेत्रम्, विशालस्कन्धम्, उपचिताऽवयवम्, अत्यायतकेसराऽऽडम्बरधरम्, कुण्डलीकृतलाङ्गुलम्, विशालपीवरवक्षःस्थलम्, सलीलं सिंहमद्राक्षीत् ।

४—शतयोजनोच्चो द्वादशकलाधिकद्विपञ्चाशद्योजनोत्तरसहस्रयोजन १०५२$\frac{12}{19}$ विस्तारवान् स्वर्णमयो हिमालयो नाम नगाधिराजो वर्वर्त्ति । तदुपरि दशयोजनाऽवगाही पञ्चशतयोजनपृथुलः, सहस्रयोजनदीर्घः, वज्रमयतलभागः 'पद्मद्रह' नामको द्रहोऽस्ति । तन्मध्ये जलाद् गव्यूतिमात्रोच्चं, योजनपृथुलमेतावन्मात्रदीर्घं, नीलरत्नमयदशयोजनमात्रनालं, वज्रमयमूलं, रिष्टरत्नमयकन्दं, कोकनदमयबाह्यपत्रं, स्वर्णमयमध्यपत्रमित्थंभूतमेकं ' कमलं ' विद्यते । तत्र क्रोशद्वयपृथुला तन्मात्रदीर्घा क्रोशमात्रोन्नता रक्तैः स्वर्णमयैश्च केसरैरतिमण्डिता स्वर्णमयी ' कर्णिका ' वर्त्तते । तन्मध्यभागे च क्रोशार्धपृथुलं क्रोशदीर्घं किञ्चिदूनक्रोशोच्चं श्रीदेव्या भवनं जागर्त्ति । सन्ति च तस्य पञ्चशतधनुरुच्चानि तदर्धपृथुलानि त्रीणि द्वाराणि प्रागुत्तरदक्षिणदिक्स्थितानि । भवनस्य मध्यप्रदेशे च सार्धशतद्वयधनुर्मिता रत्नमयी ' वेदिका '

तिष्ठति, तदुपरि श्रीदेव्याः सुरम्या शय्या विलसतितमाम् । तन्मुख्य-कमलात्परितश्च कमलादेव्या आभरणभूतानि वलयाकाराणि प्रागुक्त-मानादर्धमानोच्चदीर्घत्वपृथुत्ववन्त्यष्टोत्तरशतकमलानि विभ्राजन्ते । एवं प्रतिवलयं क्रमादर्धाऽर्धमानत्वमूह्यमिति प्रथमवलयम् । द्वितीये च वायव्येशानोत्तरदिक्षु चतुःसहस्रसामानिकदेवानां ४०००, प्राच्यां च-त्वारि महत्तरदेवकमलानि, आग्नेय्यां गुरुस्थानीयानामाभ्यन्तरपरिषद्दे-वानां ८०००, दक्षिणस्यां मित्रस्थानीयमध्यमपरिषद्देवानां १००००, किङ्करस्थानीयबाह्यपरिषद्देवानाञ्च १२००० कमलानि । प्रतीच्यां तु गज–तुरग–रथ–पदाति--महिष---गन्धर्व---नाट्यरूपसप्तकटकस्वामिना-मावासभूतानि सप्तकमलानि सन्ति । तृतीयवलये श्रीदेव्या अङ्गरक्षक-षोडशसहस्रदेवानां निवासाय १६००० कमलानि, चतुर्थवलये आभ्य-न्तराऽभियोगिकद्वात्रिंशल्लक्षदेवानां ३२०,०००० कमलानि, पञ्चमवलये मध्यमाभियोगिकदेवानां ४०,००००० कमलानि, षष्ठवलये बाह्याभियो-गिकदेवानाञ्च ४८,००००० कमलानि वर्त्तन्ते । सर्वेषामेकत्र सङ्कलने चैकाकोटिर्विंशतिर्लक्षाः पञ्चाशत्सहस्राणि शतमेकं विंशतिश्च । ईदृक्-परिवारभूते मुख्यकमले सुखाऽऽसीनाम्, विन्यस्तकनककमठाऽनुका-रिसौन्दर्यहारिनवकिसलयकल्पचरणाम्, प्रशस्ताम्, परिपुष्टतराङ्गुष्ठाम्, नैसर्गिकाऽतिरक्तत्वाल्लाक्षारञ्जितमिव सुश्रीकं चरणयुगलं बिभ्रतीम्, तनुस्निग्धताम्रनखीम्, अरुणकमलदलपेशलपाणितलाम्, तनुस्पष्टपर्वा-ङ्गुलीम्, करिवरकरजघनाम्, पीवरसुश्रोणीम्, मनोहरकटितटीम्, मुष्टि-मेयमध्याम्, प्रशस्तया त्रिवल्या विभूषिताम्, यामुदीक्ष्य कवयो वर्णयन्ति–

त्रिवल्या मिषेण त्रिरेखाविधाने, समूचे मनोभूरहं बालिजाने ।
उरोवर्द्धितं श्रीचयं वन्दमानो, न भूतो न भावी न वा वर्त्तमानः ॥

---

१ अयिबाले ! अहं जाने–मन्ये, यद् उरोवर्द्धितं–वक्षसि जातं निरुपमं श्रीचयं सुषमाऽऽ-

अतिगभीरनाभिकूपाम्, तनुतराऽतिमञ्जुलसुकोमलरोमराजिम्, अनेकजातीयशशिकान्तसूर्यकान्तादिमहार्हमणिगणभूषिताङ्गाम्, मुद्रिकादिभासुरमणिमयविभूषणमण्डितोपाङ्गाम्, नन्दनवनजसुरभिसुमविरचितमालया मौक्तिकदाम्ना च शोभितग्रीवाम्, कनककलशायिताऽतिवर्त्तुलकठिनतरपीवरस्तनमण्डलाम्, यथास्थानविरचितपत्ररचनाविच्छित्तिधराम्, दीनारमालया सुमण्डितोरःस्थलाम्, मणिगणजटिताऽतिलोलगोलकुण्डलयुगलपरिशोभितवदनाम्, अमलकमलदलविशाललोचनयुगलाम्, याभ्यामनारतं मकरन्दवारि क्षरति, ते कमले करकमलाभ्यां दधानाम्, लीलावीजिततालव्यजनशोभमानाम्, तनुलम्बमानकबरीभारामनुपमामीदृशीं श्रीदेवीं दिग्गजैरतिपीनदीर्घशुण्डाभिः परिषिक्तां सा त्रिशला दृष्टवती ।

इति श्रीवीरजिनशासनस्फारशृङ्गारहार–सुविहितसूरिपुरन्दरनन्दनवनाऽऽरामविहारि–शिथिलाऽऽचारप्रचारतमोहारि—जैनाचार्य—भट्टारक-श्रीमद्विजयराजेन्द्रसूरीश्वरसङ्कलितायां 'श्रीकल्पसूत्रार्थप्रबोधिनी' नाम्नीटीकायां द्वितीयं व्याख्यानं समाप्तम् ।

## अथ तृतीयं व्याख्यानं प्रारभ्यते ।

५ मन्दार–चम्पकाऽशोक–प्रियङ्गु–मल्लिका–कोज्ज–कोरण्ट–तिलक–बकुल–सहकार–पाटल–कुन्दाऽतिमुक्तादीनां द्रुमाणाम्, कमलकुमुदमल्लिकायूथिकाजातीकेतकीनवमालिकावासन्तीप्रमुखलताश्च, सुरभिभराणां सद्यस्कैः कुसुमैर्विरचिताम्, सौरभ्यातिशयेन घ्राणतर्पणकरीम्,

धिक्यं वन्दमानः–प्रशंसन् मनोभूः–कामस्त्रिवल्या मिषेण–व्याजेन त्रिरेखाया–रेखात्रयस्य विधाने–करणे न भूतः–ईदृशी शोभा क्वापि नाऽभूत्, पुरा न भावी, नाग्रे कस्यापि भविष्यति, नवा कस्यापि सांप्रत मीदृशी शोभा वर्त्तते इति समूचे जल्पितवान् इत्यर्थः ।

निजाऽनुपमाऽऽमोदभरैर्दशापि दिशः सुवासयन्तीम्, सकलर्त्तुसम्भूतसुरभिकुसुमभृताम्, मनोहारिरक्तपीतशुक्लादिविविधवर्णाम्, सौरभ्यातिशयादनारतमतिलीनषट्पदारब्धगुञ्जारवमुखरीकृताम्, विचित्ररचनाराचितामाकाशात्पतन्तीं मालाद्वयीमालुलोके ।

६ गोक्षीरफेनगौरम्, राजतशरावोपमं, सौम्यतरम्, सकलजनहृदयनयनानन्दकरम्, जगत्तिमिरनिकरापहारकरम्, गगनसरसीराजहंसम्, कन्दर्पदर्पप्रवृद्धिकरम्, चिरविरहिणीप्राणान्तकरम्, प्रतिपौर्णमासि सागरोल्लासकरम्, वर्षमासादिमानकारिद्विपक्षकरम्, कुमुदवनानि विबोधयन्तम्, रात्रिशोभाकरम्, दिगङ्गनाभालतिलकमिव शोभमानम्, रोहिणीवल्लभम्, सम्पूर्णकलं चन्द्रमपश्यत् । यमेवं कवय उत्प्रेक्षन्ते—

आकाशवापीसितपुण्डरीकं, शाणोपलं मन्मथसायकस्य ।
पश्योदितं शारदमम्बुजाक्षि ? सन्ध्याङ्गनाकन्दुकमिन्दुबिम्बम् ॥१॥

७ रक्ताशोक–पलाशपुष्प–शुकमुख–गुञ्जार्धमिव रक्ततरम्, कमलवनविकाशकम्, भुवनभवनदीपकम्, हिमानां गलग्रहम्, ग्रहपतिम्, निशाविनाशकरम्, उदयास्तवेलायामेव मुहुर्त्तमात्रदर्शनीयम्, दुश्चारिणीनां रजनीप्रियाणां स्तेनानाञ्चेच्छाविघातकरम्, तमःस्तोमप्रणाशकरम्, शीतबलविघातकम्, कनकगिरिं परिक्रामन्तम्, निजकरनिकरभरेण समस्तज्योतिश्चक्रस्य तिरस्कर्त्तारम्, सहस्रांशुमालिनं भानुमुदैक्षिष्ट । सूर्यस्य सहस्रकिरणाभिधानं तु लोकप्रसिद्धत्वादभाणि, ऋतुभेदे तु तदंशभेदतारतम्यादधिकं स्यात् । तथाचोक्तम्—चैत्रे १२००, वैशाखे १३००, ज्येष्ठे १४००, आषाढे १५००, श्रावणे १४००, भाद्रपदे

---

१ अयि कमलाक्षि ! पश्येदमुदितं शारदमिन्दुबिम्बम्, किमु–आकाशरूपा या वापी तस्याः सितपुण्डरीकं श्वेतकमलम् ?, अथवा मन्मथस्य मदनस्य यः सायक. शरस्तस्य घर्षणाय शाणचक्रम् ?, अथवा सन्ध्याङ्गनातद्रूपा काचित्कान्ता तयोत्क्षिप्तं कन्दुकमिति ?

१४००, आश्विने १६००, कार्त्तिके ११००, मार्गशीर्षे १०५०, पौषे १००० माघे ११००, फाल्गुने १०५० इति ।

८ देदीप्यमानसुवर्णदण्डोपरिसंस्थितम्, सितपीतलोहितादिपञ्चवर्णैः कमनीयदृश्यतमम्, उपरिधूतमयूरपिच्छेन कृतचूडमिव भासमानम्, अधिकश्रीकम्, स्फटिक–शङ्ख–तुषार–रजतकुम्भ–कुमुद–कुन्द–चन्द्रवद्धवलेन शिरश्चित्रितेनाकाशमण्डलं भेत्तुं कृतोद्यमेनेव लक्षितेन सिंहेन शोशुभ्यमानम्, धीरसमीरवच्चञ्चलम्, सौम्यं महान्तं ध्वजं विलोकयामास ।

९ जात्यकाञ्चनमिवाऽतिनिर्मलमतएव रोचिष्णुतमम्, वारिपूर्णम्, भाविमङ्गलसूचकम्, परितः कमलकलापतः शोभितम्, सकलमङ्गलागमनसदनम्, महार्हरत्नभासुरकमलोपरिमुक्तम्; दर्शकजनलोचनाऽमन्दाऽऽनन्दसन्दोहकरम्, प्रभाभिरसमानमनुपमम्, सकलार्त्तवसुरभिपुष्पविरचितदामभिः शोभितग्रीवम्, राजतं सजलं कलशमपश्यत्।

१० सूर्याऽरुणकिरणविशुद्धपद्माकरपरागसुरभिजलम्, मीनोच्छलितजलसञ्चयम्, कमल–कैरव–कोकनद–पुण्डरीकाणां विविधवर्णानां प्रसर्पन्त्या श्रिया शोभमानम्, अतिलीनप्रमत्तमधुकरनिकरनिषेवितकमलवनम्, राजहंससारस–चक्रवाकप्रमुखविहगगणैः सेव्यमानम्, सरोजिनीदलोपलग्नमुक्ताकारजलकणव्रजैः कृतप्रसाधनमिव भासमानम्, हृदयनयनयोः प्रीतिकरम् 'पद्मसर' इति सरोवरं ददर्श । यत्रैवमुत्प्रेक्षन्ते कृतिनः—

न [1]तज्जलं यत्र सुचारु पङ्कजं, न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं, न गुञ्जितं तन्न जहार यन्मनः ॥

---

१ तज्जलं नाऽऽसीत्, यत्–यत्र सुचारु–सुन्दरं पङ्कजं नास्ति स्म, तत्पङ्कजमपि नाऽऽसीत्, यत्र पङ्कजे षट्पदो भ्रमरो लीनो जुषमाणो नाऽभूत्, न सन्ति लीनाः संसक्ताः षट्प-

११ शशधरकरनिकरसोदरमध्यशोभम्, चतुर्दिक्प्रसृताऽगाधजल-प्रवाहम्, चपलतरात्मप्रमाणोत्थितकल्लोललोलजलम्, महोर्मिमालम्, अधीरसमीरसमीरणादितस्ततोनृत्यद्भिरिव व्यत्कैरुल्लोलै राजमानम्, अतिभीषणपरिभ्राम्यदावर्त्तम्, महामकर–मीन–तिमि–तिमिङ्गल–तिल तिलिकादियादसां पुच्छाच्छोटनोद्भूतप्रभूतकर्पूरोज्ज्वलफेनप्रसरम्, यत्र चतुर्दशचतुर्दशसहस्रनदीभिः सह गङ्गासिन्धुश्च भरतक्षेत्रीया महानदी सङ्गच्छते, तावता परिवारेण सहैरावतक्षेत्रीया रक्ता रक्तवती च महा-नदी महतावेगेन यं मिलति । अष्टाविंशत्यष्टाविंशतिसहस्रनदीपरिवृते हेमवत्क्षेत्रीये रोहिता रोहितासा महानद्यौ यत्र निपततः । तावद्भिरेव परिवारैः सार्धमैरण्यवत्क्षेत्रीये सुवर्णकूला रूपकूला महानद्यौ च यं सङ्ग-च्छेते । षट्पञ्चाशत्षट्पञ्चाशत्सहस्रनदीभिर्युते हरिकान्ता हरिसलिला नद्यौ हरिवर्षक्षेत्राज्जवेन यं मिलतः । एतावत्संख्याकेन परिवारेण युते रम्यक्क्षेत्रीये नरकान्ता नारिकान्ता महानद्यौ यत्राऽऽपततः । पञ्चपञ्च लक्षादुपरि द्वात्रिंशद्द्वात्रिंशत्सहस्रपरिवारयुते महाविदेहक्षेत्रवाहिन्यौ सीता सीतोदा महानद्यौ यमाश्लिष्यतः । समस्तगणनया षट्पञ्चाश-त्सहस्रोत्तरचतुर्दशलक्ष ( १४,५६००० ) नद्यो यत्र मिलन्ति तं लवणो-दधिं प्रेक्षितवती ।

यत्सूत्रे खलु क्षीरसागरदर्शनस्यैव प्रतिपादनात्ततोऽन्यत् कथम-त्राऽवर्णयत् ? तदेवं समाधेयम्–यत्तत्र क्षीरार्णवपदेन लवणोदधिरेव ग्राह्यः, नोचेद् गङ्गासिन्धुप्रमुखानां तत्र पतनं सूत्रसम्मतं विरुध्येत । अतः सूत्रे क्षीरसागरपदमुपलक्षणतया लवणसागरपरमित्यवगन्तव्यम् ।

१२ सत्सुवर्णमणिरत्नप्रकरदेदीप्यमानाऽष्टाधिकसहस्रस्तम्भकम्, निजप्रभाभासितगगनमण्डलम्, प्रतिस्थानविन्यस्तनन्दनवनोद्भूतसौर-

दा अलयो यत्रेति बहुव्रीहिः । असौ षट्पदोऽपि नो बभूव, यः कलं मधुरमव्यक्तं न जुगुञ्ज, गुञ्जितमपि तन्नाऽऽसीत्, यल्लोकानां मनो न जहार नो हृतवत ।

भ्यमयनवसुमविरचितदामवृन्देन सौवर्णपत्रलम्बितमौक्तिकदामभिश्च शोभमानम्, वृकवृषभतुरगगजमृगपतिनरमकरकिन्नरमृगसरीसृपशरभधेनुकमलाऽशोकप्रमुखविचित्रचित्रचित्रितम्, मधुरगीतमण्डितम्, मृदङ्गतन्त्रीझल्लरीप्रभृतिपञ्चवादित्रनादनादितम्, अनवरतसजलजलदनिनदातिरस्कारिदुन्दुभीध्वानपरिपूरिताऽशेषलोकम्, सर्वतः प्रसृत्वरदह्यमानदशाङ्गादिधूपमघमघायमानगन्धाभिरामम्, श्वेतकान्तिमत्, सुरगणैः संसेवितम्, शातावेदनीयकर्मजन्यफलभोग्यम्, पुण्डरीकमिवाऽतिश्रेष्ठं, पुण्डरीकवरविमानमद्राक्षीत् ।

१३ पुलक १ वज्र २ नीलरत्न ३ मसारक ४ कर्केतन ५ लोहिताक्ष ६ मरकत ७ सस्यक ८ प्रवाल ९ स्फटिक १० सौगन्धिक ११ हंसगर्भा १२ ऽञ्जनप्रभ १३ चन्द्रप्रभाणां पुञ्जीकृतानां रत्नानां राशिम्, भूतलस्थितमपि स्वप्रभानिचयेन नभो मण्डलमशेषमतिभासयन्तम्, मेरुगिरिमिवोन्नतं प्रेक्षाञ्चक्रे ।

१४ विपुलाऽमलघृतमधुसिच्यमानयाऽतएव धूमरहितया धगद्धगितिज्वलन्त्या देदीप्यमानया शिखावल्या शोभमानम्, अन्योऽन्याऽऽश्लिष्टज्वलज्ज्वालाजालम्, ऊर्ध्वगया विलोलशिखया तारापथं लेलिहानम्, शिखिनमीक्षाञ्चक्रे ।

अत्राऽयं विवेकः—स्वर्गाच्च्युत्वा तीर्थङ्करजीवो यस्यागर्भेऽवतरति, सा द्वादशे स्वप्ने देवविमानं पश्यति । यस्याश्च गर्भे नरकाच्च्युतस्तीर्थङ्करजीवोऽवतरति सा खलु देवभवनमेव तत्स्थाने प्रेक्षते । सकलास्तीर्थङ्करमातरो यस्यां रात्रौ भगवान् गर्भेऽवतरति, तस्यामेतान्महामङ्गलमयाँश्चतुर्दशस्वप्नान् पश्यन्तितमाम् । तेषां मध्ये प्रथमतीर्थकृन्माता वृषभं मध्यगानां प्रसूर्गजं चरमजिनस्य च जननी मुखमाविशन्तं सिंहमपश्यादिति । शाश्वतो नियमो जागर्त्ति ।

२० त्रिशलांप्रति राज्ञः स्वप्नफलकथनम्—

भगवति श्रीमहावीरे गर्भेऽवतीर्णे चतुर्दशैतान् महास्वप्नानुदीक्ष्य मेघावलोकनाऽतिहृष्टबालकदम्बकल्पसूल्लसिताऽशेषतनुरुहा, यथादृष्टस्वप्नान्मनासि संस्मरन्ती, हर्षाऽतिशयात्फुल्लेन्दीवरदलायताक्षी, शय्यां विसृज्य मानसिककायिकचाञ्चल्यविमुक्ता, अधिमार्गमस्खलन्ती, राजहंसीव गच्छन्ती, त्रिशला राज्ञी सिद्धार्थमुपान्तिकमागात्, तत्राऽऽगता च मधुपाकोपमया सरसया गिरा भर्त्तारं जागरयाञ्चकार । प्रतिबुद्धे च राजनि तदाऽऽज्ञया नानाजातीयसद्रत्नजटिते मृदुलाऽऽस्तरणसज्जिते पादपीठे सा त्रिशला राज्ञी सुखेन निषेदुषी मार्गश्रममपनीय हृष्टमनाः सिद्धार्थराजमिति व्याहर्त्तुं प्रारेभे—स्वामिन् ! अहमस्यां रजन्यां गजवृषभादिचतुर्दशमहास्वप्नानद्राक्षं, ते मह्यं कीदृशं फलं वितरीष्यन्तीति त्रिशलया भाषितं निशम्य सिद्धार्थो राजा मनसि प्रहर्षभरमधिगच्छन्, मेघधाराभिषिक्तकदम्बवत्प्रहृष्यद्रोमराजिस्तदर्थान् विचार्य प्रेयसीं त्रिशलाराज्ञीं मधुरया सस्नेहया वाचा तदैवमाचष्ट—देवानुप्रिये ! त्वया महाफलदातारः श्रीचिरायुरारोग्यकर्त्तारः शिवप्रदास्ते स्वप्ना ददृशिरे । तेन त्वमवश्यमर्थं भोगं सुखं राज्यञ्च लप्स्यसे । सार्धसप्तदिवसाधिकनवमासपरिपूर्णत्वे जाते सति मत्कुले ध्वजायितं, मत्कुलभवनदीपककल्पं, मत्कुलकमलदिवाकरं, वंशाधारं, कुलविस्तारकरं, त्रिभुवनख्यातयशस्करं, भूधरस्थेमभाजं, नृपतिकुलमुकुटायमानं, कल्पतरुमिव सकलजनवाञ्छितप्रदं, त्रिलोक्या तोष्टूय्यमानं, चराचरोपकारकरं, शशाङ्कमिव सौम्याकारं, मार्त्तण्डमिव तेजस्विनं, सल्लक्षणव्यञ्जनोपेतं, मानोन्मानमितशरीरं, निरवद्यरम्याऽशेषावयवं, पटिष्ठपञ्चेन्द्रियम्पुत्रं प्रसविष्यसे । स च समुल्लसितयौवनवयाः स्वत एव सर्वासु कलासु विद्यासु च परिपक्वविज्ञानप्रावीण्यं लप्स्यते, याते च यौवने वयसि वदान्यानां धुर्यः प्रतिज्ञापालकः, महाशौर्यशाली, सङ्ग्रामे दुर्जयः, परचक्रपराक्रमिष्णुः,

विपुलाऽतुलबलवाहनो बहुगजतुरगरथपत्तिप्रतिपालको राजराजेश्वरो भविता । इत्थमुदारेदृशमहाफलदायिस्वप्नान् ददृष्ट, अतस्त्वमवश्य-मीदृशफलमधिगमिष्यसीति त्रिवारं राजा तां त्रिशलां पुनः पुनः प्रशंसन्नु-वाच । तच्छ्रुत्वा भृशं प्रसीदन्ती सा पतिभाषितमशेषं प्रमिण्वती विहि-ताञ्जलिः पुनरूचे–स्वामिन् ! यथा भणसि तथैवास्त्विति जल्पन्ती मन्दं मन्दं व्रजन्ती प्रमोदमेदुरासती स्वस्थानमियाय । तत्र चैवं दध्यौ–यदहमीदृशान् सुस्वप्नानालोक्य पुनरधुना स्वप्स्यामि, तर्हि कदाचिद-शुभे स्वप्नेऽलोकिते प्रागालोकितस्य साधीयः फलं नो स्यात्, अतो मया देवगुरूनेव स्मरन्त्या जागरितव्यमिति निर्धार्य तथैवाऽकरोत् ।

२१ सिद्धार्थस्य सभामण्डापन–स्नानकरण–भूषणधारणकथनम्—

जाते च प्रभाते सिद्धार्थो राजा कौटुम्बिकपुरुषमाकार्य समादि-शत्–अद्य महोत्सवदिने बाह्यामुपस्थानशालां ( कचेरीं ) सम्मार्ज्य छगणादिना विलिप्य शीघ्रमेव तां गन्धोदकेन सिक्तां विधत्त, दशाङ्ग-धूपैर्धूपयत, अन्यैरपि सुगन्धिद्रव्यैरामोदयत, प्रतिस्थानं सुरभिकुसुम-मालाः पञ्चवर्णा बध्नीत, नानावर्णानि नानाजातीयानि च कुसुमानि परिस्फुटानि सौरभ्यभराणि स्थले स्थले क्षिपत । इत्थमादिष्टः सोऽनु-चरस्तत्कालमेव भूपादेशेन तां तथा सम्पादितवान् । तदनु मित्राऽ-भ्युदयेन कमलवने विकश्वरतामुपनीते, गतवति ग्लावि तद्वियोगात्कै-रवकुले मुखमुद्रणामुपनीते, रक्ताऽशोक–पलाश–बन्धूक–सिन्दूरपूरगु-ञ्जार्धाऽरुणविग्रहे, सहस्रांशौ समुदिते, विकसिते च ह्रदतटाकादिस्था-निककमलाकरे, प्रणष्टे च तमिस्रनिचये, कुङ्कुमेनेव बालारुणैः पिञ्जरी-कृताऽशेषलोके सिद्धार्थक्षितिपतिः शय्यां विहाय पादपीठोपरि न्यस्त-पादो नीचैरवतीर्य परिश्रमशालामागत्य नानाविधां व्यायामकलामभ्य-स्य बलवीर्यवर्धनमायुरारोग्यकरं, जाठराग्न्युत्तेजकं, कामोद्दीपकं, शतपाकसहस्रपाकादिकं, नानौषधिमिश्रितं सुगन्धिभरं यत्तैलं तेन मृदु-

तरपाणिपादैरभ्यङ्गाऽभिज्ञैरिङ्गितज्ञैश्चतुरैरतिबलिष्ठैरनेकैः कोविदसेवकैः सुचिरं सम्मर्दयामास । कृततैलाभ्यङ्गः क्षोणीपतिस्ततो निर्गत्य मुक्ताजालाकुलामभिरामां, विचित्रोज्ज्वलनानाजातीयमणिरत्नजटितभूभागां, विविधविचित्रचित्राचित्रितां, स्नानशालां प्राविशत् । तत्रातिसुन्दरे नानाविधमणिरत्नमण्डितकनकमयस्नानपीठोपरि निषण्णः, श्रीखण्डादिरससंपृक्तैः कुसुमपरागसुरभीकृतैः सुनिर्मलैरुष्णोदकैः स्नापितः, सुवासितेन मृदुवसनेन पुञ्छितगात्रः, पृथ्वीपतिरतिसूक्ष्मं दूष्यरत्नं शुभ्रतरमहतं वसनं पर्यधत्त । सौरभ्यमयगोशीर्षचन्दनेनानुलिप्तगात्रः, कुङ्कमादिशोभाकारिमण्डनं सुरभिसुमविरचितामामोदभरां मालाञ्च परिधाय मणिरत्नखचितमुक्ताहारकेयूरग्रैवेयकादिविविधमण्डनमण्डितगात्रः स कराङ्गुलीषु महार्हसद्रत्नजटिता मुद्रिताः, कटौ शृङ्खलां बिभरामास । ततो मण्डितसीमन्तो मणिरत्नसमुज्ज्वलकुण्डलयुगलबहुशोभितशारदपूर्णचन्द्रवदनः, भानुसमानभासुरमुकुटप्रदीप्तशिरोविन्यस्तभासुरविविधहारहारिवक्षाः, कृतद्रष्टृजनप्रमोदभरः, ऊर्मिकाकृतपीताङ्गुलिको महार्हमणिरत्नसमुज्ज्वलभुजबन्धस्तब्धभुजः, अत्यायतप्रलम्बमानमहापटाविहितोत्तरासङ्गो नानाजातीयमणिरत्नप्रकरविभासितचारुकारुविरचितसुश्लिष्टाविशिष्टवीरवलयं बिभ्रत् । इत्थं धृतसकलनृपार्हवराऽऽभरणवसनो नरनाथः कल्पतरुरिव शोशुभीतितमाम् । एवं परमशोभां दधानः, पुरस्कृतजयजयारावोऽनेकगणनायक–दण्डपाल–तन्त्रपाल–स्वराष्ट्रचिन्तकैर्माण्डलिकनरपालैर्युवराजैस्तलवरैर्माडम्बिकैः, कौटुम्बिकैः, सचिवैर्महामात्यैर्गणकैर्दौवारिकैः, पीठमर्दकैर्वयस्यैर्नागरैर्नैगमिकैः, सेनाधीशैः, श्रेष्ठिजनैः, सार्थवाहैर्दूतैरितरैरपि सन्धिपालादिभिः परिवृतो नरनाथो मज्जनगृहान्निरगात् ।

२२ सन्धिपालपरीक्षा—

तत्र राष्ट्रीयसीमासन्धौ यदाऽन्येन राज्ञा सह विवाद उपतिष्ठेत्तदा यः सन्धि-मुद्घाट्य विवादं निवारयेत्स सन्धिपाल उच्यते। तथाहि—कौशाम्ब्यां नगर्यां जितशत्रुराजो राज्यं कुरुते, तस्य च प्रधान-पुरोहित-सेनापति-कोष्टपाल-सन्धिपालादयः सर्वे कार्यकर्त्तारः स्वीयस्वीयाधिकारे सावधाना वर्त्तन्ते। अथैकदा कश्चिद्राजानमेवमवोचत-स्वामिन्! सर्वे राजकीयाः स्वं स्वं कार्यं विदधते, यस्ते सन्धिपालः स तु केवलं वेतनपीन एवास्ति, कार्यं किमपि नो करोति। राजा तच्छ्रुत्वा सन्धिपालमब्रवीत्—किं भोः! वेतनमेव केवलमादत्से?। सोऽवक्—नाथ! अहं तां कलां वेद्मि, यया द्वेष्टारमपि श्रेयांसं विदध्याम्, गाढस्नेहिनश्च विपक्षतां नयानि, अन्यान्यपि बुद्धिगम्यानि परैरगम्यानि कार्याणि सुखेन कर्त्तुमर्हामि। ततो राजा परीक्षार्थं कुत्रचित्पात्रे भस्म क्षिप्त्वा स्यूत्वा च वस्त्रावृतं तत्पात्रं सन्धिपालाय दत्त्वा जगाद—भोः! अरिमर्दनो राजा मम प्रतिकूलो भृशं द्वेष्टि, अतस्त्वं तत्र याहि, तस्मा इदं देहि, मैत्रीं च सम्पादय, कृते चास्मिन् सत्यं मंस्ये। सन्धिपालोऽपि भूपादेशाच्चतश्चलित्वा कियद्भिर्दिवसैस्तत्रागत्य नृपाग्रे तदुपहृत्य राजानं व्याहर्त्तुमारभत—राजन्! अस्माकं स्वामी सादरं तुभ्यमेतदुपजहार, कुशलोदन्तञ्च पप्रच्छ। तत्पात्रं लात्वा ग्रन्थिमुन्मुच्य स्वर्णपात्रे क्षिप्तं भस्माऽपश्यत्। तदालोक्य प्रधानोऽवदत्—स्वामिन्! शत्रुणा प्रेषितमेतद्विलिप्य योगी भव। राजा भृशं चुक्रोध। तत्रावसरे सन्धिपालोऽजल्पत्—राजन्! किमेवं विशङ्कसे?, अमुष्मिन्महान् गुणो वर्वर्त्ति। नृपोऽवदत्—कोऽस्ति गुणः?, सोऽवक्—श्रूयताम्, मदीयो राजा महता व्ययेन चिरेणैकं यज्ञं कृतवान्, तस्मिँश्च निर्विघ्नेन परिपूर्णतां याते सर्वेभ्यः सुहृद्भ्यो नरपतिभ्यो वितरन्नेतद्भस्म हितधिया तत्रापि तिलकार्थं प्राहिणोत्। एतस्मान्नूनं प्रजावृद्धिः श्रियोवृद्धिरायुषो वृद्धिश्च सञ्जायते। एतन्निशम्य राजा भृशं तुतोष, मनसि दध्यौ च—अहो मया पुरा यदशुभं चिन्तितं तत्तु महानर्थकारि। यन्त्वाहं द्वेष्टारमवेदिषम्, सोऽपि साम्प्रतमेतदपूर्वलाभकारिभूतिप्रदानेन हितैषी सखैव जज्ञे। इत्थं तदुक्तं तथ्यं मन्वानस्तेन सत्रा मैत्रीं भावयन् सन्धिपालं सत्कृतवान्। मासमेकं सादरमशनपानयानादिना सत्कुर्वन्, बहुगजतुरगवसनाभरणादिकं प्रदाय तं सन्धिपालं विससर्ज। अभ्यधाच्च—भोः! अद्याऽऽरभ्य यावज्जीवं तव राज्ञा सार्धं महीयसी प्रीतिर्मे जातेति स्वनृपाय त्वया वक्तव्यम्, इति सन्दिश्य स्वहस्तलिखितं पत्रं ददौ। सर्वमेतज्ज्ञात्वाऽचिरादेव कौशाम्ब्यामागत्यच भूपाग्रे तत्प्रदत्तं पारितोषिकं निधाय यथाजातं वृत्तं कथितवान्। तच्छ्रुत्वा नृपादयः सर्वे सभ्यास्तं भृशं प्रशशंसुः। पुनरेकदा क्षोणीपतिस्तत्परीक्षणकृते स्वराज्ञीमादिदेश—राज्ञि! त्वमिदानीं पित्रालयं व्रज, तत्रैव

कतिचिद्दिनानि गमय । यदा ते निजनामाङ्कितमङ्गुलीयकं प्रहिणुयाम्, तदा त्वयाऽत्राऽऽगन्तव्यम् । इतरेषां केषाञ्चिदपि वचनादिना नैवाऽऽगन्तव्यम् । सापि तादृशे नृपादेशे जाते तत्कालमेव पितुरालयं चचाल । तत्पश्चाद्राजा सन्धिपालमाकार्य समादिशत्—अद्य मे राज्ञी कुपिता पितुर्गेहमयासीदतस्तत्र याहि, तूर्णं तामत्राऽऽनय । ततः सन्धिपालस्तीर्थवासिवेषेण तत्र नगरे समागत्य क्वचिदेकत्र तस्थौ । तद् बुद्ध्वा समाहूय राज्या पृष्टः—त्वमीदृग्वेषधारी कथमभूः ?, तेनोक्तम्—स्वामिनि ! अहं खलु तीर्थवासी बभूवान् । सांसारिके कृत्ये न निपतामि, केवलं धर्मध्यानादिनैव समयं गमयामि । राज्ञी जगाद—भोः ! अमुना कृत्येन नूनं निजं जनुः सफलमकृथास्तथापि राज्ञः कुशलं नव्यवार्त्ताञ्च कथय । शिरो धुनानः सोऽवक्—स्वामिनि ! अन्या कापि नव्यवार्त्ता नास्ति, किन्तु पुनरुद्वाहचिकी राजा काञ्चिदर्हां रूपलावण्यवतीं युवतीं राजकुमारीमन्विष्य लग्नदिनं निश्चिकाय । तदाकर्ण्य समुद्विग्नमना राज्ञी तदैव पितृसदनादात्मसदनमागतवती । तामागतां विच्छायवदनामालोक्य राजाऽप्राक्षीत्—प्रिये ! अनाहूता कथमागाः ?, साऽऽख्यत्—माम्प्रतार्य काञ्चिदन्यां मत्तोऽधिकां प्रेयसीमकरोस्तस्यामनुरक्तस्त्वं मां कथमाकारयेथाः ?। एवं तयोपालब्धः क्षितीशस्तदैव तं सन्धिपालमाकार्य तन्मुखेन तदीयां भ्रान्तिं भङ्क्त्वा राज्ञीमनुनीय तं सन्धिपालं विविधवस्त्राऽऽभरणादिना सत्कृतवान् ।

२३ आसनव्यवस्था, नैमित्तिकाह्वानम्, तदागमनमनायकसुभटकथानकञ्च—

अथ धवलतरवारिवाहपटलविनिर्गतस्तारागणमध्यचारी पीयूषमयूख इव शोशुभ्यमानः, परैरजय्यत्वात्समस्ताऽरातिदलदन्तिकुम्भभेदित्वाच्च नरसिंहो नरपतिः सुसज्जितां सभामागत्य सिंहासनोपरि प्राङ्मुखः समुपाविशत् । तत्र स्वस्मादैशान्यां दिशि शुभ्राम्बराऽऽवृतानि कमनीयतमान्यष्टभद्रासनानि, शुभ्रवसनापिहितासितसर्षपान्, कुङ्कुमम्, सितदर्भांश्च मङ्गलार्थं स्थापयित्वा स्वासनान्नातिदूरे नातिसमीपे सुस्पर्शाम्, महामनोहरां, नानाविधाऽमूल्यमणिरत्नप्रचयविभूषिताम्, ईहामृगवृषभतुरगनरकुञ्जरमकरकिन्नरविहगोरगरुरुशरभाऽष्टापदमहाकायाऽनेकवन्यचमर्यादिचम्पककेतकपद्मलतादीनां चित्रैः शोभमानाम्, विविधजातीयविमलमणिगणसद्रत्नखचितामेवंभूतां जवनिकामबन्धयत् । धृतकमनीयाऽऽस्तरकमसूरकम्, तदुपर्याच्छादितश्वेतकौशेयवस्त्रम्, सु-

सज्जितमतिरम्यं भद्रासनं त्रिशलाया उपवेशनाय स्थापितम् । तदनु कौटुम्बिकपुरुषानेवमादिदेश—भोः सेवकाः ! अष्टाङ्गनिमित्तशास्त्रविदुषः स्वप्नलक्षणपाठकान् द्रागत्राऽऽनयत । तत्राऽष्टाङ्गानीमानि—अंङ्ग१ २स्वर३भौम४व्यञ्जन५लक्षणोत्पातान्तरिक्षाणीति ।

ततस्ते कौटुम्बिकपुरुषास्तत्र गत्वा तानूचिरे—भोः स्वप्नपाठकाः ! इदानीमेव राजा युष्मान् आकारयति । तच्छ्रुत्वा तेऽपि प्रसीदन्तः स्नातानुलिप्तगात्राः, कृतकौतुकमङ्गलमयदधिदूर्वाक्षतादिदुःस्वप्नप्रायश्चित्ताः, परिहितप्रावेशिकसमुज्ज्वलमङ्गलसूचकप्रवरकौशेयवस्त्राः, शिरोधृतगौरसर्षपदूर्वाक्षताः, सकलनिमित्तशास्त्रचुञ्चवः, स्वप्नपाठकाः स्वसदनान्निर्गत्य सिद्धार्थक्षितिपतेर्भवनावतंसकोपस्थानशालाद्वारोपरि समाजग्मुः। तत्र मिलितास्ते सर्वे मिथो विमृशन्ति—

" सर्वेऽपि यत्र नेतारः, सर्वे पण्डितमानिनः ।
सर्वे महत्त्वमिच्छन्ति, तेऽवसीदन्ति वृन्दवत् ॥ १ ॥ "

तथाहि—एका सुभटानां पञ्चशती, यतस्ततस्त्याऽहमहमिकां मतिं जुषमाणा, जीविकानिमित्तं बभ्राम । अनायकत्वात्क्वापि राजधान्यां जीविकां नाऽऽप । इत्थं देशादेकस्मादपरस्मिन् देशे भ्रामन्ती कस्यचिन्महाराजस्य समीपमायाता । राजापि तत्पार्श्वे शुभतुरगशस्त्रवस्त्रसुरूपत्वादिविलोक्य सत्कृत्य च पप्रच्छ—यूयं के, कुतश्चाऽऽगम्यते, कश्च वो विद्यते गुणः ?, तेऽजल्पन्—राजन् ! वयं वैदेशिकास्ते महतीं गुणज्ञतामाकर्ण्य त्वां सेवितुमिहाऽऽगमाम । तच्छ्रुत्वा नृपादयः सर्वे सभ्या भृशमतुष्यन् । राजा प्रधानमेवमुवाच—यदेते सत्कुलजा विक्रमिणश्च भासन्तेऽमी सङ्ग्रामाङ्गणात्कदाचिदपि नो पलायिष्यन्ते, अत एते योग्यवेतनप्रदानेन निजसैन्यदले स्थाप्यन्ताम् । प्रधानेनाऽभाणि—

---

१ पुरुषाणां दक्षिणाङ्गे योषितां वामाङ्गे स्पन्दनं श्रेयस्करमित्यादिफलसूचकमङ्गविद्या, उत्तममध्यमाऽधमस्वप्नविचारणा स्वप्नविद्या, दुर्गाशृगालादीनां स्वरपरिज्ञानं स्वरविद्या, भूकम्पादिना यच्छुभाऽशुभविज्ञानं तद्भौमविद्या, मषतिलकादिना शुभाऽशुभज्ञानं व्यञ्जनविद्या, करचरणरेखादिविज्ञानं लक्षणविद्या, उल्कापातादिना शुभाऽशुभफलज्ञानमुत्पातविद्या, खेटानामुदयास्तादिपरिज्ञानं चान्तरिक्षविद्या ज्ञेयादि ।

स्वामिन्! एते सुभटा यद्यपि सुभगाः सन्ति, तदपि नायकविहीनतयाऽसम्मता एव लक्ष्यन्ते। अतः परीक्ष्य सर्वान् स्थापयतु। येनाऽग्रे कापि हानिर्न प्रादुःष्यात्। मन्त्रिवाक्यं राज्ञाप्यमानि, सुखेन विधीयतामेतेषां किमपि परीक्षणमित्यभ्यधाच्च। ततस्तान् कस्मिंश्चिदेकस्मिन् योग्याऽऽवासे स प्रधान उदतीतरत्। रात्रौ च शयितुमेकं मञ्चकमेकमास्तरणमेकञ्चोपधानं सजलमेकं घटञ्च प्राहिणोत्। ततः सकलजनपर्याप्तभोज्यसामग्री च प्रहिता। ते कृताऽशनाः सर्वे सुभटाः शयनवेलायां परस्परं कलहं विदधिरे। तत्रैकोऽवदत्—यन्मे पितामहो महीयानासीत्। अहमपि मुख्यो वर्त्तेऽतोऽहमत्र मञ्चके शयिष्ये, नेतरः। द्वितीयोऽवदत्—पुरैकदा वने केसरी ननाद, तदारावश्रुत्या गृहे तिष्ठतो मत्पितुः सप्ताहं तीव्रतरज्वरदाह आविरासीत्, अतः सर्वतः श्रेष्ठतरोऽहमेव। तृतीयोऽवदत्—यन्मे बलीयानग्रजन्मा सिक्तपर्पटानां शतमेकेनैव पार्ष्णिघातेन बभञ्ज, अतोऽहं सर्वश्रेष्ठः। चतुर्थोऽवदत्—मन्मातुल एकमाखुं जिगाय, अतोऽहमर्हामि नाऽन्ये। पञ्चमो न्यगदत्—मन्मातुल एकदा सप्तसेटकामितं कृशरं (खीचडी) चखाद तेन मय्येव गौरवं वर्वर्त्ति। षष्ठोऽवक्—अहन्तु सप्तभाण्डप्रमिततक्रमेकश्वासेनैव पिबामि। सप्तमोऽवदत्—प्रत्यहमहं सप्तन्येव हदे। अष्टमोऽवदत्—अहं सप्ताहपर्यन्तं स्वपिम्येव। नवमो जजल्प—अहन्तु मार्जारतोऽपि बिभेमि, कुक्कुरारवं श्रुत्वा च हदे। इत्थं शयनाय कलहायमानानां तेषामर्धरात्रो व्यतीयाय। तेष्वेको वृद्धो जजल्प—भोः! मद्विमर्शं शृणुत, कलहं माकुरुत, एतन्मञ्चकं मध्ये क्षिपत, तत्परितश्च सर्वे शेरतामिति सर्वैरमानि। जाते च प्रभाते छन्नतया तत्र स्थिता राजपुरुषाः सर्वं नैशिकं तेषां व्यतिकरं राजानं व्यजिज्ञपन्। ततः क्षितिपतिस्तानशेषानयोग्यान् मत्वा भृशं निर्भर्त्स्य विससृजे।

अत एकं मुख्यमग्रेसरं कृत्वा बाह्योपस्थानशालां प्रविश्य फलपुष्पादिभृताञ्जलयः शुभाशीर्भिर्गीर्भी राजानं विवर्द्धयामासुः। तथाहि—

नित्यं मङ्गलमातनोतु सदने वामेयतीर्थङ्करः,
शक्रस्येव समृद्धितामिह समान् पूर्य्याच्च कामानयम्।

---

१ अयं वामेयतीर्थङ्करः श्रीपार्श्वनाथप्रभुस्ते सदने गृहे नित्यं मङ्गलमातनोतु विस्तृणोतु, इह भवे शक्रस्येव तत्तुल्यां समृद्धिताम्, ऐश्वर्यञ्च विस्तारयतु। च पुनः 'समान्'–सर्वान् कामान्मनोरथाँस्ते पूर्य्यात्–पूरयतु, सङ्ग्रामे शक्रस्येव विजयश्रियं वितनुताम्, विस्तारयतु। किङ्कुर्वन्? चिन्तामणितुल्यं सम्यक्त्वं राज्यञ्च पुनर्दीर्घमायुरारोग्यतां वर्द्धयन् सन्नित्यर्थः।

सङ्ग्रामे विजयश्रियं वितनुतां सम्यक्त्वचिन्तामणिं,
राज्यश्चापि विवर्द्धयन्नरपते ! दीर्घायुरारोग्यताम् ॥

इति श्रीवीरजिनशासनशृङ्गारहार–सुविहितसूरिपुरन्दरनन्दनवनाऽऽराध्य-विहारि–शिथिलाऽऽचारप्रचारतमोहारिजैनाचार्य–भट्टारक–श्रीमद्विजय-राजेन्द्रसूरीश्वर–सङ्कलितायां श्रीकल्पसूत्रार्थप्रबोधिनीनाम्न्यां टीकायां तृतीयं व्याख्यानं समाप्तम् ।



## अथ चतुर्थं व्याख्यानं प्रारभ्यते ।

२४ शुभाऽशुभस्वप्नफलदर्शनम्, मूलदेवाऽऽख्यानञ्च—

अथ ते स्वप्नपाठकाः सादरं नरपालेनाऽभिवन्दिताः पुष्पमाला-रत्नजटितस्वर्णमाल्यादिदानेनाभ्यर्चिताः, वचसा च सन्नुताः प्राङ्न्य-स्ताऽष्टभद्रासनेषु निषेदुः । यदसौ राजा सम्यक्त्ववानासीत्तर्हि मिथ्या-त्विनस्तान् कथमवन्दत ?, तत्समाधातुमाह—सम्यक्त्ववन्तः खलु धर्म-धिया नाऽन्यं वन्दीरन् । व्यवहारदृशा विनयदर्शनाय मिथ्यात्विनोऽपि प्रणमन्त्येव, न तत्र कापि क्षतिः ।

तदनु सा त्रिशला पूगीफलश्रीफलरजतदूर्वाक्षतादिपरिपूर्णाऽञ्जलि-र्जवनिकान्तरिता तस्थुषी । ततः सिद्धार्थो राजा फलपुष्पादिना पूर्ण-पाणिर्विनीतः सन्नैमित्तिकाँस्तानेवमपृच्छत्—अस्यां रजन्यां त्रिशलाराज्ञी स्तोकं निद्राणा सती प्रागुक्ताँश्चतुर्दश गजवृषभादिमहास्वप्नानुदैक्षिष्ट, तत्फलं कीदृशं भावितेति यूयं विचार्य ब्रूत ? । तेऽपि श्रुत्वा परस्परं सम्यग् विचार्य तन्मध्यादेकस्तत्फलानि चैवमाख्यातुमारभत—राजन् ! अस्मच्छास्त्रे—अनुभूतः १, श्रुतः २, दृष्टः ३, प्राकृतिकः ४, प्रकृतिविकारजः ५, चिन्ताप्रभवः ६, देवताप्रसादजः ७, धर्मकर्मप्रभावजः ८, पापोद्रेकसमुत्थश्च ९, इति नवधा स्वप्नो वर्त्तते । तत्राऽऽद्यः षोढा दृष्टः स्वप्नो

मुधा जायते, उत्तरार्द्धधा फलं वितरति । तत्रापि रजन्याः प्रथमे यामेऽवलोकितः स्वप्नो वर्षात्, द्वितीये यामे षण्मासैस्तृतीये यामे त्रिभिर्मासैश्चतुर्थे यामे मासेन फलति । अरुणोदयवेलायामुदीक्षितः स्वप्नो दशभिर्दिनैः फलति, सूर्योदयकालिकस्तु तत्कालमेव फलति । यस्य खलु दैनिकाऽधिव्याधिभ्यां स्वप्नः शुभोऽशुभो वा जायते, स निरर्थको भवति । सति वायुविकारेस्वप्ने तरुगिरिशिखराऽऽरोहणं, गमनागमनञ्च प्रेक्षन्ते, पित्तप्रकोपाच्च—स्वर्णरत्नसूर्याऽग्निप्रमुखानवलोकन्ते, श्लेष्माऽऽधिक्ये—तुरगतारकासितपक्षान् पश्यन्ति, नदीतटाकसरःसमुद्रादींस्तरन्तीत्यादयो वृथा जायन्ते । मलमूत्रयोर्बाधयापि यः स्वप्नः समायाति, तस्यापि फलं नैव जायते ।

योहि सदैव धर्मतत्परो भवति, समधातुकः स्थिरचित्तो वशीकृतेन्द्रियग्रामः कृपालुर्भवति, तद्दृष्ट एव स्वप्नः शुभाऽशुभफलं दिशति । अनिष्टं स्वप्नं गुर्वादिकं न श्रावयेयुः किन्त्वन्यमेव । इष्टं स्वप्नमालोक्य पुनर्नो शयीत, किन्तु जिनगुरुस्तवनादिकं विदधता जागरितव्यमेव, पुनः स्वापे स न फलति, अनिष्टदर्शने तु स्वप्यादेव । यो हि प्रागशुभं प्रेक्ष्य पुनः शुभं, शुभदर्शनानन्तरं वाऽशुभस्वप्नमुदीक्षते, तस्मै पश्चादालोकितः स्वप्न एव फलं ददते, न प्राग् दृष्टः ।

यः स्वप्ने नर—मृगपति—तुरङ्ग—मातङ्ग—वृषभ—सिंहिकायुक्तरथमारुह्य गच्छति, स राजा जायते । हय—गज—यानाऽऽसन—सदन—वसनादीनामपहारं विलोकते, तस्य राजभयं बन्धुविरोधोऽर्थहानिश्च जायते । यः सकलं सूर्याचन्द्रमसोर्बिम्बं ग्रसति, स निर्धनोऽपि ससुवर्णां ससागरां कृत्स्नां महीं भुङ्क्ते । प्रहरण—भूषण—मणि—मौक्तिक—कनक—रजत—कुप्यादीनामपहारावलोकने धनमानहानिः प्राणान्तकष्टञ्च जायते । यः श्वेतदन्तिनमारुह्य नदीतीरे शाल्योदनमश्नाति, स जात्या हीनोऽपि धनरहितोऽपि समस्तां महीं भुङ्क्ते । भार्याया हरणे

दृष्टे भूरिधननाशो भवति, क्लेशादिदर्शने तु कष्टमाप्नोति । गोत्रस्त्रीणामपहारादिविलोकने बन्धूनां वधबन्धौ भवतः । यस्य दक्षिणं भुजं सितसर्पो दशति स्वप्ने. स पञ्चरात्रेण कनकसहस्रं लभते । यः स्वप्ने निजशय्याया उपानहोर्वा हरणं पश्यति, तस्य पत्नी म्रियते शरीरे, गाढपीडा च । यः स्वप्ने मानवशिरो भुङ्क्ते, स राज्यमियर्त्ति । तच्चरणभोजनदर्शनेन दीनारसहस्रं, भुजखादनदर्शने तु दीनारसहस्रार्धमुपैति । यो गोवृषभगजप्रासादगिरिशिखरोपरि चटति, तस्य महिमा वर्द्धते । यः शरीरं विष्ठाविलिप्तं पश्यति, तस्य रोगाः क्षयन्ति । यः स्वप्ने रोदिति, स हर्षवार्त्तां शृणोति । यः स्वप्ने राजानं, कुञ्जरं, हयं, स्वर्णं, वृषभं, गां वा पश्यति, तस्य कुलवृद्धिर्भवति । दीपं, मांसं, फलं, कन्यां, पद्मं, छत्रं, ध्वजं वा स्वप्नेऽवलोकते स विजयी जायते । यः स्वेष्टदेवप्रतिमां विलोकते, तस्यायुः कीर्त्तिधनानि च वर्धन्ते । यो द्वारपरिघशयनीयपादुकानिकेतनानां भञ्जनं वीक्षते, तस्य स्त्री म्रियते । पद्माकर–रत्नाकरपरिपूर्णाऽऽपगां सुहृदां वा मृत्युं पश्यति, स विपुलं वित्तमाशु लभते । अत्युष्णं सगोमयमनच्छमौषधमिश्रं वारि स्वप्ने पीत्वा किलातिसाररोगेण मृत्युमधिगच्छति । देवप्रतिमाया अभ्यर्चनं स्नपनमुपहारं यात्रां वा स्वप्ने कुर्वाणो नरः सर्वतः समेधते । यस्य स्वप्ने हृदि सरांसि कमलानि प्रादुःषन्ति, स शीघ्रं गलितकुष्ठप्रणष्टगात्रो यमसदनातिथ्यमाप्नोति । यः स्वप्ने प्राज्यमाज्यं विन्दति, स कीर्त्तिं लभते । यः क्षीरान्नेन प्राज्यमाज्यमभ्यवहरते, तस्य शुभं विजायते । यः स्वप्ने हसति तस्य शोकः, यो नृत्यति, स वधबन्धने लभते । यः पठति तस्य कलहो जायते । गोवाजि–गज–राज–देवान् विहाय सकलं कृष्णदर्शनमप्रशस्तम्, तूल–भस्माऽस्थि–लवण–तक्रादीन् हित्वा समस्तं शुक्लदर्शनं प्रशस्तञ्च भवति । शुक्लाम्बरां शुभ्राभरणां श्रीखण्डपङ्कविलिप्तगात्रां नारीं स्वप्ने भुञ्जानः धनानि विन्दते । रक्तवसनां रक्ताऽनुलेपनविलिप्तां कृष्णाम्बरां कृष्णगन्धलिप्तां वा नारीं दृष्ट्वा भुक्त्वा वा नरः शोणितो-

जिभ्रतो भवति । स्वर्णरत्नवज्रान्यतमानां राशी यः स्वं चाटितं पश्यति स्वप्ने सोऽवश्यमधिगतसम्यक्त्वः सदासुखमयं मोक्षं याति । स्त्रियो वा पुरुषाः स्वप्ने क्षीरदधिघृतमधुकुंभान् स्पृशेयुरुत्पाटयेयुर्वा ते तत्कालमेव सम्यक्त्वमित्वा तस्मिन्नेव भवे मुच्यन्ते(मोक्षं यान्ति) । एवं लोहराशिं ताम्रराशिं त्रपुराशिं सीसकराशिं स्वेनोत्पाटितं स्पष्टं वा पश्यन्ति ते तत्कालमेव प्रतिबुद्धा मोक्षं यान्ति । ये शुभाऽशुभाऽऽत्मनः स्वप्नाः स्वास्मिन् प्रेक्ष्यन्ते तएव स्वस्मै तत्फलं वितरन्ति, परस्मिन्नालोकितास्तु मनागपि स्वस्मिन् नैव फलन्ति । अशुभं स्वप्नमवलोक्य तच्छान्तये देवगुरुवन्दनपूजनादिकं विधातव्यम् । यतः—' धर्मेण दुःस्वप्नोपि सुस्वप्नतामुपयाति ।' राजन् ! पुनरस्मच्छास्त्रे १ गन्धर्वः, २ राक्षसः, ३ भूतः, ४ पिशाचः, ५ बुक्कसः, ६ महिषः, ७ अहिः, ८ वानरः, ९ कण्टकद्रुः, १० नदी, ११ खर्जूरः, १२ श्मशानः, १३ उष्ट्रः, १४ खरः, १५ मार्जारः, १६ श्वानः, १७ दौःस्थ्यम्, १८ सङ्गीतम्, १९ धीजः, २० भस्मः, २१ अस्थि, २२ वमनम्, २३ तमः, २४ कुस्त्री, २५ चर्म, २६ रक्तः, २७ अश्म, २८ वामनः, २९ कलहः, ३० विविक्तदृष्टिः, ३१ जलशोषः, ३२ भूकम्पः ३३ ग्रहयुद्धम्, ३४ निर्घातः, ३५ भङ्गः, ३६ भूमज्जनम्, ३७ तारापतनम्, ३८ सूर्यचन्द्रस्फोटः, ३९ महावायुः, ४० महातापः, ४१ विस्फोटकः, ४२ दुर्वाक्यमिति द्विचत्वारिंशदशुभाः; १ अर्हन्, २ बौद्धः, ३ कृष्णः, ४ शम्भुः, ५ ब्रह्मा, ६ स्कन्दः, ७ विनायकः, ८ लक्ष्मीः, ९ गौरी, १० नृपः, ११ हस्ती, १२ नन्दिनी, १३ वृषभः, १४ चन्द्रः, १५ विमानम्, १६ गृहम्, १७ वह्निः, १८ स्वर्गः, १९ समुद्रः, २० सरोवरः २१ सिंहः २२ रत्नराशिः, २३ नगः, २४ ध्वजः, २५ कलशः, २६ पुरीषः, २७ मांसः, २८ मत्स्ययुग्मम्, २९ कल्पतरुः, ३० सूर्यश्चेति त्रिंशदुत्तमफलसूचकाः स्वप्नाः परिकीर्त्तिताः ।

इष्टं स्वप्नं विलोक्य मूर्खस्य नैव वक्तव्यम् । यथा—कस्यचिद्राज्ञो मूलदेवनामा सूनुरासीत् । स च दान व्यसनात्पित्रा निष्काशित इतस्ततः पर्यटन्नेकस्मिन्नगर आयातः ।

जन्मत एव जैनधर्मोपासकः सदाचाररक्त आसीत्। तथापि तदानीं दुर्देशत्वात्क्षुत्परिपीडितः किमपि याचितुं नगरान्तः प्राविशत्। तत्र केनचिद्वणिजा महिष्यर्थं राधितमाषेभ्यः किञ्चित्तस्मै दत्तम्। तन्नीत्वा जलाशयतीरमागत्य दध्यौ—यद्यधुना कमपि सत्पात्रं लभेय तर्हि वरम्। तावदेकः साधुस्तत्रागात्। प्रहृष्टमनाः परया भक्त्या तस्मै तमाहारं सर्वं प्रत्यलाभयत्। गते च तस्मिन् स्वं कृतकृत्यं मन्वानः सुष्वाप। स्वप्ने च सकलं शशिबिम्बमहमगिलामित्यरुणोदयवेलायामद्राक्षीत्। तस्यामेव वाटिकायां निवसतः कस्यचित्तापसस्यान्तेसदपि तमेव स्वप्नमवलोक्य प्रगे गुरुं पप्रच्छ—गुरुस्तत्फलमेवमचकथत्—वत्स! अद्य त्वमेतत्स्वप्नप्रभावाच्चन्मण्डलमात्रमतिवृत्तां घृतपूरितां सगुडां रोटिकामेकं लप्स्यसे। स शिष्यस्तद्दिने भिक्षायां तामेव लेभे।

मूलदेवो 'यदसौ मठपतिर्मूर्खो भाति, अतएव दृष्टं महास्वप्नं न वाच्यः, वक्ष्यामि चेत्तन्मात्रमेव फलं निगदिष्यति। इति निश्चित्य नगरान्तर्महीयस एकस्य नैमित्तिकस्याऽग्रे फलपुष्पपाणिस्तत्फलमप्राक्षीत्। नैमित्तिकोऽजल्पत्—महाभाग! यदि मत्पुत्रीं परिणयेथास्तर्हि ते स्वप्नफलं ब्रूयाम्। मूलदेवोऽवदत्—भवान्मे कुलशीलदेशादिकं न विजानाति, तर्हि पुत्रीं कथं दित्सति?। नैमित्तिकोऽवदत्—अहं ते भूतं भविष्यच्च सर्वं वेद्मि। इत्थमाभाष्य पुत्रीं विवाहविधिना प्रदाय स्वप्नफलमवादीत्—यदेतन्नगर्या राजाऽद्य दिवसात्सप्तमे दिवसे मरिष्यति, ततस्तद्राज्यमवाप्स्यसीति दृष्टस्वप्नस्य फलमवेहि। नैमित्तिकभाषितं श्रद्दधत्तत्रैव तस्थिवान्मूलदेवः। सप्तमे दिवसे तन्नगरीयः क्षितिपतिरनपत्यो व्यपद्यत। तदा प्रधानादयः सर्वे विमर्शयामासुः—' यत्सज्जिता गजतुरगादयो दिव्या यं स्थापयिष्यन्ति स एव राजा कर्त्तव्यः ' इति निश्चित्य तानि दिव्यानि विदधिरे। ततस्ते सर्वान् विहाय तत्रागत्य प्रथमं स गजः मूलदेवं कलशजलेन स्नपयाञ्चकार, विततान च बृंहितम्। परिमण्डिततुरगश्च ह्रेषां व्यतानीत्। ततः शुण्डादण्डेन गृहीत्वा गजः स्वपृष्ठे समारोप्य तं नगरान्तरानीतवान्। सर्वे लोका महामहेन नृपासने समतिष्ठिपन्।

अथवा काचिद्वणिक्स्त्री स्वप्ने समुद्रं पपौ। प्रभाते च तत्फलं प्रष्टुं फलाक्षतादिपूर्णकरा गृहाच्चचाल। मार्गे च सख्या प्रत्याग्रहात्तत्स्वप्नं तामुवाच। तच्छ्रुत्वा सख्यवदत्—अयि! इयन्तं सागरं पीत्वा तवोदरं नाऽस्फुटदिति महदाश्चर्यमजायत। इत्युपहसन्ती साऽन्यत्राऽऽगच्छत्। ततः सापि नैमित्तिकागारमागत्य स्वप्नफलमपृच्छत्। नैमित्तिकोऽवक्—त्वमेतदुत्तमं स्वप्नमन्यां कामप्यवादीः। अतः सत्पुत्रप्राप्तिसूचकोऽयं स्वप्नस्ते न फलिष्यति। मूर्खस्य यदुवदिथ ततएवाद्यतनदिनात्सप्तमे दिवसे महदनिष्टं ते समुदेष्यति। अतस्त्वं याहि, गुरून् देवांश्च स्मर। इति श्रुत्वा स्वसदनमागत्य साऽऽत्म-

हितं कुर्वाणा सप्तमे दिवसे मृत्वा देवलोकमाप्तवती । अतएव शुभस्वप्नं दृष्ट्वा गुरूणां विज्ञानामेव वाच्यम्, मूर्खस्तु जात्वपि नैव कथनीयः ।

२५ चतुर्दशस्वप्नफलकथनम्—

राजन्! अर्हति चक्रवर्त्तिनि वा गर्भेऽवतीर्णे सति तन्माता गजवृषभादिचतुर्दशमहास्वप्नान् प्रेक्षते । यस्याश्च गर्भे वासुदेवोऽवतरति, सा सप्तोत्तमस्वप्नानुदीक्षते । बलदेवे समवतीर्णे तन्माता तु तन्मध्ये चतुरः कानपि तान् पश्यति । माण्डलिकराजमाता तु तन्मध्ये कमप्येकमेव स्वप्नमालोकते । त्रिशला महाराज्ञी प्रथमं चतुर्दन्तदन्तावलेपमपश्यत्. तेन सार्धसप्तदिनाधिकनवमास्यामतीतायां युष्मत्कुलोद्दीपकत्वाद्दीपकमिव, त्रिलोक्यामूर्धन्यत्वान्मुकुटमिव, धर्मे निश्चलत्वादचलमिव, लोकातीतसुषमाशालित्वात्तिलकमिव, कुलाधारं वंशविस्तारकरं पटुतरहृषीकानिचयमविकलाङ्गपीयूषमयूखमिव कान्तं पुत्रं प्रसविष्यते । स च लक्षणव्यञ्जनगुणोपपन्नो भविष्यति सेविष्यन्ते, चामुष्य चरणतामरसं चतुष्षष्टीन्द्रा राजानश्च । स्थापयिष्यति जगति दानशीलतपोभावलक्षणं चतुर्धाधर्मम् १, वृषभदर्शनात्स धान्यबीजमिवाऽमुष्मिन् भरतक्षेत्रे बोधिबीजं वप्स्यति २, सिंहदर्शनात्कामक्रोधादिमदमत्तमातङ्गविभज्यमानमिदं मिथ्यात्विजनश्वापदादिदुर्जीवान् विनिघ्नन् भव्यजनवनमविष्यति, अष्टमदाऽष्टकर्माणि च दलिष्यति, त्रिभुवनजनमानिताऽशेषाऽऽदेशश्च भविता ३, लक्ष्मीवीक्षणात्तैर्थङ्करीं श्रियमर्थात्साम्वत्सरिकं दानं ददन्निरतिचारां दीक्षाभवन् कैवल्यकमलां भोक्ष्यते ४ मालायुग्मदर्शनादयं त्रिभुवनजनशिरोधार्यो भविता । साधुश्रावकयोर्द्वैविध्यं धर्मं प्ररूपयिष्यति, मंस्यते चाऽमुष्य महीयसः शिशोराज्ञां सर्वे सुरासुरनरवराः ५, चन्द्रमसः प्रेक्षणात् त्रिलोक्या आह्लादकरः, सुजनकुवलयवनविबोधकरश्च भविता ६, सूर्याऽवलोकनात्सकलमहीतलमिदं निजाऽसीममहसा विद्योतयिता ७, ध्वजदर्शनात् त्रिलोक्यामेतस्यां सर्वतः समुन्नतो धर्मध्वजेन विभ्रा-

जमाणश्च जनिष्यते ८, कुम्भनिरीक्षणात्समस्तसद्गुणगणारामविभूषितः सद्धर्मसौधोपरि कलशारोपणतुल्यो भविता ९, पद्मसरोदर्शनात् त्रिजगत्तापहारी, नरनारीजननयनसरोजवनविहारी, विधास्यन्ति चास्य क्रमयुगलविकचपद्मयोरधस्तात्कनककमलं त्रिदशाधीशाः १०, क्षीरसागरावलोकनादगाधहृदाऽऽसादितकैवल्यसमुज्ज्वलरत्नश्चतुर्दशराजलोकेषु प्रख्यातिमेष्यति ११, विमानदर्शनाद्वैमानिकानामपि देवानामर्चनीयो भविष्यति १२, रत्नराशिदर्शनाद्देवविरचितरत्नप्राकारमण्डितसमवसरणे समासीनो धर्मानुपदेक्ष्यति १३, निर्धूमाग्निविलोकनान्निर्मलकान्तिकः कनकमिवाऽग्निरात्मानममलं करिष्यति । विशोधयिष्यति भव्यजनमनांसि, धक्ष्यति च कर्मेन्धनानि १४, चतुर्दशस्वप्नविलोकनात्समुदितफलन्तु चतुर्दशरज्वात्मकलोकाऽग्रस्थायी भविष्यतीति विदाङ्करोतु ।

२६ गांगातैलीकथानकं, नैमित्तिकविसर्जनञ्च —

इत्थं स्वप्नपाठकमुखारविन्दात्स्वप्नफलानि श्रुत्वा सिद्धार्थो राजा सन्तुष्यँस्तानेवमुवाच—भोः स्वप्नपाठकाः ! भवदभिहितान्येतानि फलानि सकलानि मे गांगातैलिकवत्सत्यानि भविष्यन्त्येव । यथा—

कश्चिदेको विद्वत्तमो महाराष्ट्रदेशीयः, प्रतिष्ठानपुरे सकलशास्त्र पारदृश्वनः समस्तभूमण्डलप्रसिद्धस्य कस्यचित्कोविदस्य पार्श्वे त्रिंशत्समाभिः सर्वशास्त्राणि सम्यगधीत्य तेषु चाऽजय्यां वादशक्तिमेत्याऽखर्वगर्वावलीढः कदाचिदियतीभिर्गुर्वीभिर्विद्याभिरुदरं मा शीयतामिति शङ्कया निजोदरं पटेन दृढं बबन्ध । उष्णीषोपरिष्टादङ्कुशमाबिभः । सदसि प्रवर्त्तमाने विचारवादे नष्ट्वा व्योम्नि गच्छतां विदुषामधः पातनाय निःश्रेणिकामेकां पार्श्वे स्थापितवान् । ये च विवदमाना मद्भीत्या पातालं प्रविशेयुस्तानपि गर्त्तं खनित्वा निगृह्णामिति धिया कोद्दालमप्येकं पार्श्वे ररक्ष । विजितानां मुखे तृणन्यासाय तृणपुलकमपि शश्वदुवाह । एतानि भृत्यैर्वाहयन् महताऽऽडम्बरेण जगद्विद्वज्जयचिकीर्षया प्रस्थितः क्रमशो दाक्षिणात्यान् गुर्जरीयान् मरुधरीयान् विद्वत्तमान् विजित्य समेषां तेषां मुखे तृणं निधायाऽखर्वगर्वं विदधत्संलब्धसरस्वतीकण्ठाभरणाद्यनेकपदवीको मालवे राजधान्यामुज्जयिन्यां पुरा श्रुतपञ्चशतधीधनजनमण्डल्या सत्रा विवदिषां बिभ्रदाययौ । ततः सकलविद्वज्जनविभूषितायां भोजराजसभायां प्रचलितायाञ्च नानाशास्त्रीयविचा-

रक्षायां तां पञ्चशतीं विदुषामाशु व्यजयत । सकलनिजविद्वन्मण्डले पराजिते महतीं चिन्तामापन्नो भोजराजः सभां विसृज्य बहिरुपवनक्रीडनाय चलन्मार्गे गांगातैलिको घाण्योपरि समासीनो वृषभं चालयन् यन्त्रान्निर्गच्छत्तैलं पाणिभ्यामेव दूरवर्त्तिनि घटे निक्षिपन्नेकबिन्दुमपि तदपातयन्नासीत्। इत्यद्भुतं विलोक्य राजा 'अहो ! कियती चास्यैकाचस्य शेमुषी वर्त्तते, कियती वा चातुरी वर्वर्त्ति ?, याभ्यामेकोऽपि बिन्दुर्भूमौ न निपतति, बुद्धिरप्येतस्याऽपारैव भविष्यति न तत्र सन्देहः।' इति निर्धार्य तदैव तमाहूय आचचक्षे—'अरे ! समागतेन भट्टाचार्येण साकं संवादं चिकीर्षसि ?।' सोऽवक्—'स्वामिन् ! तेन सार्धं संवादकरणमाश्चर्यकरं न मन्ये। यदि कुत्राप्यंशे तदीयां शक्तिमधिकां द्रक्ष्यामि, तदा लौकिक्या कलया तं जगज्जित्वरमपि जेष्याम्येव तत्र मा संशयीथाः।' इत्थमेतद्वचसा प्रमोदभाग् राजा तं भट्टाचार्यमाकार्य न्यगादीत्—भट्टाचार्य ! भवता पराजितानामेतेषामध्यापकः सकलशास्त्रपारदृश्वा पण्डितराजो वर्त्तते, तेन सत्रा वादं विधेहि ?, तस्मिञ्जिते वो विजयो भविष्यति। भट्टोऽजल्पत्—करिष्यामि तेनापि सत्रा विवादम्, समाह्वयतु शीघ्रं। तदा राजा स्व पण्डितानाहूय न्यगदत्—यूयं तत्र यात, शीघ्रं पण्डितशिरोमणिं गुरुमत्राऽऽनयत । तेऽपि तत्र गत्वा वस्त्राभरणादिभिश्च पण्डितराजवेषं कृत्वा सुखासनोपरि निवेश्य मदोद्धुरं बलीयांसं तं राजसभामानिन्यिरे। तमागतमालोक्य राजादयः सकला अपि सदस्या अभ्युत्थानदानेन तं सत्कृतवन्तः। तस्य गुर्वादरं विलोकमानो दक्षिणभट्टाचार्यो मनसि दध्यौ—यदसौ मदोद्धुरः पुष्टाङ्गो बलीयाँश्चाऽस्ति। अहन्तु कृशोऽस्मि, विवादे पारं नाधिगमिष्यामि, अतोऽसौ तत्त्वमेव प्रष्टव्यः। इत्यवधार्य दक्षिणभट्ट एकामङ्गुलीमुदस्थापयत। तदा तैलिको भट्टः क्रोधमुद्रां दर्शयन्नङ्गुलिद्वयमुत्थापितवान्। तद्विलोक्य मनसि चमत्कृतिं विदधद्दक्षिणभट्टः पञ्चाङ्गुलीरुन्निन्ये। ततस्तैलिको बद्धमुष्टिमदर्शयत्। दक्षिणभट्टः सभायामेव निजशिरःसृणिं चिरधृतामपि मुक्तगर्वस्तत्कालमेवाऽधश्चक्रे, निजोदरे बहुकालिकप्रतिबद्धं पटमुदमोचयत, एवं निःश्रेणीकोद्दालकतृणपुलकप्रमुखैः सहाऽखर्वगर्वमुज्जहौ। सकलजनसमक्षं तं प्रणनाम, व्याजहार च—राजन् ! अत्याश्चर्यमभूत्, यन्मामद्यावधि कोऽपि नाऽजयत्, तमपि मामयं ते महाविद्वाञ्जगदेकपण्डितो व्यजेष्ट। राजाऽप्राक्षीत्—भवतस्तेन सह संवादो मनागपि नो जज्ञे, तर्हि कथङ्कारमसौ त्वामजैषीत् ?, भट्टो न्यगदीत्—ते भट्टः सकलशास्त्रकृतभूरिश्रमोऽद्वितीयस्तत्त्ववेत्ता प्रतिभाति। मया जगत्यामेकः शिव एवोपास्यो वरीवृत्यते सुधियामित्यातिगूढतत्त्वपृच्छयाऽङ्गुलिरेकोत्थिता। ततस्त्वदीयो भट्टाचार्योऽङ्गुल्यौ मामदर्शयत्तेन मयाऽवेदि—यदेकः शिव एव नास्ति, किन्तु शक्तिरपि प्रकृतिपदवाच्या द्वितीयाऽस्ति। ततोऽहं पञ्चाङ्गुलीदर्शनेन पञ्चे-

न्द्रियाण्यपि सन्तीति तमग्राक्षम् । स च मां मुष्टिमदर्शमत्तया चाऽवगतं मया यत्सरस्त्व-पि तेषु निगृहीतानि तानि जात्वपि नैव प्रभवन्ति । इत्थं तत्त्वविचारे जाते स मामज-यत्तमाम् । ततः पराजितो दक्षिण भट्टाचार्यः स्वदेशमयासीत् । ततो राजा गांगा तैलिकमपृच्छत्—सोः ! कीदृशं वादश्चकर्थ, केन वा प्रश्नेन तमजैषीः ? । सोऽजल्पत्—स्वामिन् ! तस्मिँस्तु दौर्जन्यमेव किलाऽऽसीत्, अल्पीयस्यपि विद्वत्ता नाऽऽसीत् । यतो मां आगेकाङ्गुलिमदर्शयत्तेनाऽहमित्यवेदिषं तवैकमक्षि भङ्क्ष्यामि । ततोऽहं यदि त्वमे-कां मे दृशं भङ्क्ष्यसि, परं तव तु द्वयमपि तत्स्फोटयिष्यामीति समाधित्सुरङ्गुल्यौ तमदर्श-यम् । ततो मां चपेटया सोऽसूचयत्—मुखे ते चपेटां दास्यामि । दुर्मते ! चपेटां दास्यसि चेदमुना वज्रमुष्टिना त्वां तथा हनिष्यामि यथा पातालविवरं प्रवेक्ष्यसीति सूचनाय मया मुष्टिरदर्शि । तैलिकोक्तं शृण्वन्तः सर्वे सभ्या जहसुः । राजा तस्मै विविधवस्त्राभरणं प्रदाय विससर्ज ।

अथैतान् स्वप्नपाठकान् विविधसरससुस्वादुखाद्यपेयादिना सन्त-र्प्य, वस्त्राभरणादिना सत्कृत्य, पुष्पमाल्यादिना च समभ्यर्च्य महाजी-विकां प्रदाय व्यसृष्ट । ततो राजा सभां विसृज्य त्रिशलाराज्ञीमवादीत्—प्रेयसि ! अमुना महास्वप्नावलोकनेन नूनं चक्रवर्त्तिनं तीर्थकर्त्तारं वा पुत्रं प्रसविष्यसे । स्वप्नफलानीत्थं श्रुत्वा प्रमोदभरमानसा सिद्धार्थभू-पत्यनुमता त्रिशला तस्मान्मणिरत्नमयाद् भद्रासनादुत्थाय मरालगत्या व्रजन्ती सती स्वप्रासादमागात् ।

२७ गर्भमाहात्म्यवर्णनमन्वर्थनामाभिलाषश्च—

अथ यस्मिन् घस्त्रे हरिणैगमैषिणा देवेन त्रिशलाया राज्या गर्भे संक्रामितो भगवान्महावीरस्तद्दिनादेव ग्रामाः—करदाः, आकराः—लोह-ताम्राद्युत्पत्तिस्थानानि, नगराणि—मुक्तकराणि, खेटानि—मृण्मयवप्रोपे-तानि, कर्बटानि—गर्हितनगराणि, मडम्बानि—परितो योजनार्धाऽधिकाऽ-वस्थितग्रामाः, द्रोणमुखानि—जलस्थलमार्गद्वयोपेतानि, पत्तनानि—जल-स्थलाऽऽभ्यन्तरमार्गाणि, आश्रमाः—तीर्थस्थानानि तापसस्थानानि वा, संवाहाः—यत्र कर्षका धान्यानि क्षेत्रेभ्य आनीयाऽऽनीय स्थापयन्ति,

सन्निवेशाः–स्कन्धावारसङ्घ–सार्थवाहादीनामुत्तरणस्थानानि, शृङ्गाटकः–त्रिकोणाकारं स्थानम्, त्रिकम्–मार्गत्रयमेलनस्थानम्, चतुष्कानि–चतुर्मार्गसंमेलनस्थानानि, चत्वराणि–बहुमार्गमेलनस्थानानि, चतुर्मुखानि–देवकुलच्छत्रिकादिस्थानानि, महापथा–राजमार्गाः, ग्रामस्थानानि–जनोज्झितग्रामाः, नगरस्थानानि–शून्यनगराणि ग्राम्यजलनिर्गम(खाल)स्थानानि नगरजलनिर्गमनस्थानानि वा, आपणस्थानानि, यक्षाद्यायतनानि, सभास्थानानि, प्रपास्थानानि, कदल्याद्यावृतदम्पतीक्रीडास्थानानि, फलपुष्पाढ्यमहीरुहशोभितबहुजनभोग्योद्यानानि, एकजातीयतरुमालाशालिवनानि नानाजातीयसद्वृक्षमालोल्लासितानि वनखण्डानि, श्मशान–शून्यागार–गिरिगह्वरस्थानानि, शान्तिकर्मस्थानानि, पर्वतगृहाः, भवनगृहाः–कुटुम्बिजनवसतिस्थानानि । एषु स्थानेषु प्राक्कृपणादिनिहितानि निःस्वामिकानि यानि मणिमणिक्यादिमहानिधानानि, तानि सकलानि तिर्यग्जृम्भकदेवाः सिद्धार्थराज्ञः सदने स्थापयाञ्चक्रुः । तदीयं कोशमपि रजतैः स्वर्णैरत्नैराभरणैश्च प्रैदिधत् । एवं गण्यानि–फलादीनि, धार्याणि–कुङ्कमगुडशर्करादीनि, मेयानि–तैलघृतलवणादीनि, परिच्छेद्यानि–रत्नवसनादीनि चतुर्विधानि धनान्यपि तद्दिनादेव तद्गृहे किलैधन्त । यवाः १, गोधूमाः २, शालिः ३, व्रीहिः ४, षष्टिका ५, कोद्रवः ६, अणुका ( युगन्धरी ) ७, कङ्गुः ८, रालकः ९, तिलम् १०, मुद्गः ११, माषः १२, अतसी ( अलसी ) १३, हरिमन्थकः ( चणकः ) १४, त्रिपुटः ( लांगः ) १५, निष्पावः ( वालः ) १६, शिलिन्दः १७, राजमाषः ( चवला ) १८, उच्छूः ( वरटी ) १९, मसूरः २०, तुवरी २१, कुलत्थः २२, धान्याकम् २३, कलापः ( वटाणा ) २४ इति चतुर्विंशतिजातीयानि धान्यानि च ववृधिरे । एवं सप्ताङ्गं राज्यम्, जनपदाः, चतुरङ्गसैन्यम्, गजवाजिकरभादिवाहनानि, भाण्डागाराः, कोष्ठागाराः, नगराणि, अन्तःपुरं, प्रजाः, कीर्त्तयश्च, गवा-

दयः, घटिताऽघटितप्रकारद्वयानि कनकानि, कर्केतनादिरत्नानि, चन्द्रकान्तोपलादिमणयः, मौक्तिकानि, दक्षिणावर्त्तशङ्खाः, राजपट्टादिरत्नविशेषाः, प्रवालानि, पद्मरागादिका मणयः, कौशेयादिमहार्हवस्त्राणि, कम्बलादीनि, सर्वाण्येतानि वास्तविकानि नत्विन्द्रजालोपमानि सारतराणि स्वापतेयानि किलैधाञ्चक्रिरे । एवं सिद्धार्थराजस्य मानसीप्रीतिः स्वजनप्रजाजनादिविहितोपहारादिभक्तिश्च वरीवृध्यते स्म । अतएव मातापितरौ प्रागेव मानसे निश्चिक्याते–यदमुष्य शिशोः सर्वर्द्धिविवर्द्धनादन्वर्थं ' वर्द्धमान ' इति शुभाभिधानं जनानन्दकरं धरिष्यावः ।

२८ मातुरनुकम्पया वीरस्य गर्भेऽस्पन्दनं तदुत्प्रेक्षा च—

अत्रावसरे भगवान्महावीरो मयि स्पन्दमाने जनन्याः खेदो मा जायतामिति मातर्यनुकम्पनं विदधानः कुक्षौ मनागपि नो पस्पन्दे । सर्वाङ्गोपाङ्गं गोपयन्नेव तत्र गर्भे विलीनोऽभवत् । अतएवमुत्प्रेक्षितवन्तः कविवराः–किमेष भगवान् गर्भस्थितिव्याजादतिदृप्तमोहमहीभुजं विजिगीषुरेकान्ते कामपि मन्त्रणां व्यधत्त ?, किमुत वाङ्मनसोरगोचरं परब्रह्मरूपं विचिचिन्त ?, किम्वा कल्याणरसमत्युत्कटं प्रससाध ?, अथवा त्रिभुवनजनाऽजय्यमदनविजयासिषाधयिषया किमात्मरूपं विलुलोप ? ।

२९ त्रिशलाया गर्भापहारशङ्कया शोकः—

इत्थं नैश्चल्येन तत्र गर्भे भगवति संस्थितेऽपि तदसञ्चारमपश्यन्ती त्रिशला शङ्किता जाता–हं हो ! किं मे गर्भश्चुश्च्योत, गलितो वा, केनचिद्देवादिना हृतः किम् ?, यदधुना पुरेव जात्वपि मनागपि नैजते । इत्थं गर्भाऽपहारं विजानाना शोशुच्यमाना, त्रिशलादेवी चिन्तोदधौ निर्ममज्ज । अतएव वज्राहता लतेव विचेतना सती शीतोपचारादिना लब्धचेतना सा विलपितुं लग्ना–नूनमहं हतभाग्या जाताऽस्मि । भाग्यहीनसद्मनि चिन्तामणिरिव, निर्धनालये कल्पतरुरिव, पा-

पीयसां पिपासूनां पीयूषपानमिव, हतभाग्याया मम कुक्षौ तादृशो महीयान् गर्भः कथं तिष्ठेत् ? । हा ! ! धिग् दुर्विधे ! त्वया किमकारि, यदयं मनोरथतरुस्त्वया मे समुन्मूलितः । नूनममुना दुर्घटितेन त्वां निर्घृणमकारणं कुटिलं जानामि, यदनपराधिनीं मामेवमद्रेट् । निर्विचारेण त्वया मे दत्त्वापि लोचनयुगलमकाण्ड एवाऽपाहारि ?, कलङ्कविकलं निधिरत्नं प्रदायापि पुनरधमेन भवता कथमुद्दालितम् ?, नूनं भवान् पापीयान्मां मेरुशिखरं चटायित्वा पुनरपीपतत् ?, परिवेष्यापि वा भोजनं पुनस्तदाक्राक्षीः ?, किमपराद्धं भवान्तरेऽमुत्र वा येनेदृशमनर्थमकार्षीः ? । हा ! ! किमहं कुर्याम्, कस्याऽग्रे वा वदेयम्, क्व वा गच्छेयम् ?, यदहमनवसर एवाऽमुना मुग्धा दग्धा, जग्धा च । किं मे राज्येन धनेन वा ?, भोगसुखैर्वा विषयजैरलम्, किमेतेन वा दुकूलशय्याऽऽसनादिपरिपूर्णशर्महर्म्येण ? । गजवृषभादिमहास्वप्नसंसूचितं समुचितं त्रिजगज्जनपूज्यं चराऽचराऽऽनन्दिसुतरत्नं विना सर्वमेतद्विफलमेव जज्ञे ।

मया जन्मान्तरे तथाविधो दुष्कृतराशिरकारि, तत्परिपाकमेव भुञ्जे । यदाहुर्महर्षयः—यः खलु पशुपक्षिमानवशिशून् वियोजयते, सोऽवश्यं भवान्तरे निरपत्यतां याति, जातं वा तदपत्यं विनश्यति । अथवा कस्याश्चिच्छिशुरपहृतः, बालहत्याभ्रूणहत्यादिमहापापानि वा विहितानि, गर्भं वा कासाञ्चिदपातयम्, नीडानि वा साण्डानि पातितानि, शप्तो वा सपत्नीप्रमुखकामिनीजनः, वियोजितो वा मात्रा डिम्भः, विनाशितं वा शीलमन्यस्याः, गृहीतं व्रतं वाऽभनजम्, अदहं वा परेषां सदनानि, अचूचुरं वा परकीयं रत्नम्, अमीमरं वा सपत्नीनामपत्यम्, अच्छिदं वा महान्तं समूलमपि वृक्षम्, अशूशुषं वा वापीकूपतडागादि, अनीनशं वा परेषां कीर्त्तिसन्ततिं गुर्वीम्, अद्विषं गुरून् वा देवान्,

अचीकरं वा जिनचैत्यनिपातनानि। इत्थमाक्रोशन्ती, सोद्वेगं सख्यादिना पृष्टा नास्ति मे गर्भक्षेममित्यालपन्ती, त्रिशला क्षितिनिपतिता मूर्च्छामाप। शोकाक्रान्ते दास्यादिसकलपरिवारे तत्स्वरूपं जानानः सिद्धार्थराजोऽपि महाशोकसागरे निपपात, न्यवृतच्च नृत्यगीतादिमहोत्सवः। किमधिकं सर्वथा शोकराजधान्येव संजाता सा नगरी।

३० भगवति पुनः स्पन्दमाने मातापित्रोर्हर्षवर्णनम्—

अत्रावसरे भगवान्महावीरोऽवधिना मातापित्रोर्मोहमवलोकमानो दध्यौ—अहो! कीदृशं मोहमाहात्म्यम्, येनेदृशं व्यतिकरमभवत्। नूनं यदकारि मातुः प्रमोदाय तदपि खेदकारि जातम्, व्यनक्ति चैतत्कलिकालस्य भविष्यतो लक्षणम्। यथा नालिकेरोदके क्षिप्तः कर्पूरो मृत्यवे भवति, तथा पञ्चमारके गुणोऽपि दोषकृदेव भविष्यति लोकानाम्। तथाहि—कश्चित्पथिकः परदेशतः कृतविपुलधनोपार्जनः स्वसदनमागच्छन्मार्गे कस्याश्चिदटव्यां सर्वतः प्रसृत्वरे दावानले दन्दह्यमानेन महाकायेन भोगिनाऽभ्यर्थितः—भोः पान्थ! मामसुष्मात्सङ्कटादव। ततः स पान्थस्तं महाहिं दवमध्याद् बहिरकरोत्। सर्पोऽवदत्—पान्थ! तिष्ठ, अहं त्वां दङ्क्ष्यामि। पान्थोऽजल्पत्—भोगिन्! अधुनैव दवादस्मात् त्रातवाँस्त्वामहं तत्कथं विसस्मर्थ, यदुपकर्त्तारमेव मां दिदङ्क्षसि?, नाऽयं धर्मः। भोगी जगाद—सत्यमुक्तं त्वया, परमयन्तु कलिकालो वर्वर्त्ति। अस्मिन् कलौ य उपकरोति, स एव हन्यते। पान्थोऽवदत्—भोगीन्द्र! बहुवर्षादहं गृहं गच्छामि, सार्थे च धनानि विद्यन्ते, अतोऽधुना गृहं गन्तुमनुजानीहि, तत्र गत्वा धनानि स्त्रियै दत्त्वा पुनरिहाऽऽयातं मां सुखेन भुञ्जीथाः। नाऽऽगच्छामि चेद्विश्वासघातिनामलीकभाषिणश्चपातकानि मे स्युरिति शपथं कृत्वा निजसदनमागत्य भार्यायै धनानि दत्त्वा सर्वमेतदाभाष्य पुन स्तत्रैवाऽऽगात्। तत्पश्चात्तत्पत्न्यपि तत्राऽऽययौ। सा च करुणं रुदती सर्पं जगाद—त्वया मे पत्यौ भक्षितेऽ-

नाथां मां कस्त्रास्यते ?, यन्मे शत्रवो बहवः सन्ति । सर्पो जगाद– 'शत्रुभीतिं मा कृथाः । यथा त्वां न बाधिष्यन्ते, तथा दिव्यमौषधं ददामि, तन्मूलं पाषाणोपरिजलेन घृष्ट्वा तेन जलं यं यं सेक्ष्यसि, स स भस्मसाद् भविष्यत्येव ' इत्याभाष्य तस्यै तदौषधमदात् । तल्लात्वा सा तत्रैव प्रस्तरे जलेन घृष्ट्वा तज्जलं सर्पोपरि क्षेप्तुं लग्ना । अहिरवोचत–अरे ! मयैव ते दत्तं मामेव हंसि ? । तदा ' पुरा त्वमेव न्यगादी र्यद्गुणस्य भ्राता दोषो जागर्तीति सर्वं सहस्व, किमपि माऽवादीः ' इति निगदन्ती सा भोगिनं भस्मसादकरोत् । ईदृशमेव जनन्या मनोरथं विदित्वा भगवानङ्गुल्याद्येकदेशमकम्पयत ।

ततोऽस्त्येव मे गर्भ इति हृष्टा सा त्रिशला हर्षोत्फुल्लनयना, निःसीमहर्षपूर्णहृदया, विज्ञातगर्भकुशला, शारदपूर्णचन्द्रमुखी, पुलकिताङ्गा सती मधुरया गिरा सख्यादीनवोचत–सख्यः ! सन्ति मे भाग्यानि, भविष्यामि च त्रिभुवनकामिनीजनमान्यतमा, जीवनमपि कृतकृत्यतामापत्, जनिरपि मामकी साफल्यमभविष्ट, प्रसेदुश्च जिनेन्द्रचरणाः, कृताश्च गोत्रदेवताभिः प्रसादाः, फलितश्च मे यावज्जीवमाराधितः शाश्वताऽऽर्हतधर्मकल्पवृक्षः । इत्थं गर्भकौशल्येनाऽतिप्रसन्नां त्रिशलामवलोक्य सर्वे लोका अमन्दानन्दसन्दोहा अजायन्त । प्रावृतंश्च कौलिकाङ्गनानां धवलानि, प्रतिस्थानमुत्तम्भितानि निकेतनानि शुशुभिरे, विरेजिरे च विन्यस्तमौक्तिकस्वस्तिकाः, इत्थमानन्दाऽद्वैतमयं तद्राजकुलं साकल्येन जज्ञे, नृत्यगीताऽऽतोद्यादिभिश्च सुरलोक इव सुषमा तत्र सर्वत्र विततान । अग्रहीद्राजा जनोपदीकृतां धनकोटिम्, व्यस्राक्षीच्च कल्पशाखीव दीनाऽनाथयाचकेभ्यः कोटिधनानां प्रमोदभरः ।

३१ गर्भगतस्य भगवतोऽभिग्रहधारणम्–

अथैवं मातुर्मोहमीदृशमवलोकमानः पक्षाधिके षण्मासे व्यतीते

भगवान् गर्भस्थ एव खल्वीदृशमभिग्रहमकरोत्—यदधुना गर्भगतेऽपि मयीदृशो दरीदृश्यते जनन्या मोहस्तर्हि जननानन्तरं कियान् भविष्यति ?, नूनमहं मातापित्रोर्जीवतोर्दीक्षां नैव लास्यामि । यतः पशूनामास्तन्यपानाज्जननी मान्या भवति, अधमानां स्त्रीलाभावधिरेव, मध्यमानान्तु गृहकृत्यसम्पादनावधिरेव जननी पूज्या तिष्ठति । ये खलूत्तमास्ते तु यावज्जीवमेव प्रसूं तीर्थमिव खल्वर्चन्ति ।

३२ त्रिशलाया गर्भपालनं दोहदपूर्त्तिश्च—

अथ त्रिशला सुस्नाताऽनुलिप्ता कृतभगवदार्हतविम्बार्चना, विधिवदनुष्ठितकौतुकमङ्गला, सर्वाभरणविभूषिता, गर्भरक्षणाय यान्यतिशीतानि, अत्युष्णानि, अतितिक्तानि, अतिकटूनि, अतिकषायाणि, अत्यम्लानि, अतिमधुराणि, अतिस्निग्धानि. अतिरुक्षाणि, अत्यार्द्राणि, अतिशुष्काणि, खाद्यपेयादीनि तानि न सिषेवे, किन्तु सर्वर्त्तुकालहितकारीण्येव । यतः—प्रावृषि लवणः, शरदि वारि, हेमन्ते गोक्षीरम्, शिशिरे चाऽऽम्लरसः, वसन्ते घृतं, प्रान्ते च गुडोऽमृतं भवति । ये खलु वातिकाः पैत्तिकाः श्लेष्मकराः सन्ति, ते गर्भहितानि नो भवन्ति । यदाह—वातिकाऽशनाद् गर्भः कुब्जोऽन्धो जडो वामनो वा जायते । पैत्तिकभक्षणात्स्रपातो भवति, शरीरे च पीतिमा जायते । श्लेष्मणः खादनात् पाण्डुरोगी श्वेतकुष्ठी वा कर्बुराऽऽभो जायते गर्भः । अधिकलवणाऽशनादन्धः, अधिकशीतलाऽन्नभक्षणाद्वातुलः, अत्युष्णाऽऽहाराद्बलहीनो जायते, यभनाधिक्याँश्च म्रियते गर्भः । अतएव सा त्रिशला विदुषी मैथुनम् १, शकटाद्यारोहणम् २, मार्गे चलनम् ३, विषमोन्नतस्थानात्पतनम् ४, कूर्दनम् ५, अङ्गमर्दनम् ६, प्रधावनम् ७, पशुदास्यादिताडनम् ८, विषमशयनाऽऽसनम् ९–१०, मलमूत्रादिवेगरोधनम्, ११, घृतादिशून्यमतिरूक्षभोजनम् १२, अतितिक्तसुंठीपिप्पल्यादि १३, अतिकटुनिम्बादि १४, अधिकभोजनम् १५, अतिशोकम् १६, अतिक्षा-

रवस्तुसेवनम् १७, अतिपरिश्रमम् १८, वमनम् १९, विरेचनम् २०, झूलनम् २१, अट्टाट्टहासादि २२, विजहाति स्म । कुलवृद्धातिदक्षाः सीमन्तिन्यस्तामेवं शिक्षयन्ति स्म—दिवा स्वापाद् गर्भः शयालुरत्यञ्जनादन्धः, रोदनाच्च जातस्य नयनयोर्वैकल्यम्, स्नानानुलेपनाद्दुःशीलः, तैलाभ्यङ्गात्कुष्ठी नखच्छेदात्कुनखी, प्रधावनाच्चञ्चलः, अतिहासाच्छ्यामदन्तौष्ठतालुजिह्वः, अतिभाषणात्प्रलापी, अतिघोरशब्दश्रवणाद् बधिरः, अवलेखनात्स्खलनं भवति । अतो मन्दं मन्दं व्रज, उच्चैर्मा वद, कोपं विजहाहि, पथ्यमशान, नीवीं दृढं मा बधान, उच्चैरधिकं वा मा हासीः, बहिः सौधशिखरादौ मास्वाप्सीः, अतिनीचैर्मागाः, अत्युच्चै र्वा मारोहीः, एवं सुशिक्षिता त्रिशलादेवी हितं मितं भुञ्जाना निर्दोषमृदुशयनाऽऽसनादौ शयनोपवेशने विदधाना मनसि प्रमोदभरं दधाना दोहदं व्यनक्ति स्म । यथा—सर्वत्राऽमारि पटहं व्यातनवानि, दानं घनं दद्याम्, सद्गुरूनभ्यर्चयेयम्, भगवदर्चां विदध्याम्, सङ्घे च वात्सल्यं करवाणि, सिंहासने खलु समासीना, शिरसि धृतसितातपत्रोभयतः सितचामराभ्यां वीज्यमाना, नरपालमौलिमणिलालितपादपीठा, सागरान्तामेतां वसुन्धरां शासानि, पुरःस्फुरत्पताका, वादित्रनिनादमुखरीकृतदिगङ्गना, लोकारब्धजयध्वनिना संस्तूयमाना, कुञ्जराऽऽसीना, प्रमोदभरोद्याने खलु क्रीडानि । इत्यादयो ये ये दोहदा उत्पेदिरे, तानशेषान् सिद्धार्थो राजा परिपूरयामास । अथैकदा त्रिशलाया ईदृशो दोहदोऽभ्यजायत—यदहमिन्द्राणीश्रुतिकुण्डले परिदध्याम् । परमेतं परिपूर्णं कर्त्तुं राजा नाऽशकत्, अतएव खिद्यमानाऽभवत्सा । तदा शक्रासनं चचाल, अवधिना च तत्कारणं विज्ञाय देवाङ्गनाभिर्भूयसीभिः परिवृत इन्द्राणीं लात्वा भगवतो महावीरस्य जनन्या दोहदपूरणाय क्षत्रियकुण्डनगरासन्नवर्त्तिन एकस्याऽतिदुर्गमनगस्योपत्यकायामिन्द्रपुरनामकं नगरमधिवास्य सपरिवारः सुखेन न्यवसत् । तदा सिद्धार्थो राजा निजप्रेयस्या दोहदपूर्त्त्यै

केनचिद्दूतमुखेन तमिन्द्रमिन्द्राणीकर्णकुण्डले खल्वयाचत, परमिन्द्रस्तस्मै ते नाऽदात् । तेन प्रकुपितः सिद्धार्थो राजा युयुत्सया सह सैन्यैस्तत्राऽऽगात् । तदा बलीयानपि शक्रेन्द्रः पराजित इव समरभूमिं विहाय क्वचिदनश्यत् । ततोऽप्सरसां मध्ये स्थिताया इन्द्राण्याः क्रन्दन्त्याः श्रुतिकुण्डले बलादपहृत्य त्रिशलायै समार्पयत् । इत्थमितरदुरापमपि दोहदमपारीत् ।

३३ तीर्थकृतां गर्भस्थितिमानम्—

अथैवं मातुर्गर्भे नवमासादधिकसार्धसप्ताहानतिष्ठत्, तत्र देवानन्दाया ब्राह्मण्याः कुक्षौ ऽशीत्यहोरात्राँस्तस्थिवान् भगवान् । तत एव च गर्भस्थितेर्मानमवसेयम्, एतच्चैतदवसर्पिणीकालिकचरमतीर्थकृतामेव बोद्धव्यम् । इतरेषां जिनानां गर्भस्थितिमानन्तु यथासम्भवं शास्त्रोक्तमधस्तनकोष्टकादवगन्तव्यम्—

| जिन | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मास | ९ | ८ | ९ | ८ | ९ | ९ | ९ | ९ | ८ | ६ | ९ | ८ | ८ | ९ | ८ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ |
| दिन | ४ | २५ | ६ | २८ | ६ | ६ | १९ | ७ | २६ | ६ | ६ | २० | २१ | ६ | २६ | ६ | ५ | ८ | ७ | ८ | ८ | ८ | ६ |

३४ भगवतो वीरस्य जन्माङ्गजन्मवर्णने—




अथैवं नवमासोपरि सार्धसप्ताहे व्यतीते मधौ मासे शुक्लपक्षे त्रयोदश्यां मध्यरात्रे सूर्यादिसप्तग्रहेषु निजनिजपरमो[1]च्चांशमुपगतेषु,

१ त्रिभिरुच्चै राजा, पञ्चभिरुच्चैर्वासुदेवः, षड्भिरुच्चैश्चक्रवर्त्ती, सप्तानामुच्चत्वे तीर्थङ्करो

| राशयः | ग्रहाः | अंशाः |
|---|---|---|
| मेषे | सूर्यः | १० |
| वृषे | सोमः | ३ |
| मकरे | मङ्गलः | २८ |
| कन्यायाम् | बुधः | १५ |
| कर्के | गुरुः | ५ |
| मीने | शुक्रः | २७ |
| तुलायाम् | शनिः | २० |

रजोवृष्ट्याद्युत्पातादिराहित्यान्निर्मलासु, प्रभोराविर्भावकालत्वाद्वितिमिरासु, दिग्दाहाद्युपसर्गरहितत्वाद्विशुद्धासु दशादिशासु, काकोलूकदुर्गादिसमस्तविजयावहेषु शकुनेषु, प्रदक्षिणावर्त्तत्वादनुकूले सौरभ्यमयत्वाच्छैत्याच्च सुखावहे मान्द्याद्भूमिस्पृशि वायौ वहति सति, मेदिन्यां सर्वशस्याऽऽढ्यतां गतायां सौभिक्ष्यात्प्रसन्नेष्वशेषलोकेषु, प्रवर्त्तितवासन्ताऽऽनन्दानन्देषु समुज्झिताऽशेषदोषे समीक्षिते च बलशालिगुर्वादिसत्खेटैर्मकरलग्ने ध्रुवयोगे, तैतिलकरणे, उत्तराफाल्गुनीनक्षत्रीयतृतीयचरणे, चन्द्रयोगे, इत्थं शुभोत्तमवेलायां परिपूरिताऽशेषविशेषदोहदा बाधारहिता[2] त्रिशलादेवी त्रिभुवनजनवन्द्यं भगवन्तं महावीरं सुखेन प्रासूत ।

इति श्रीवीरजिनशासनस्फारशृङ्गारहार-सुविहितसूरिपुरन्दरनन्दनाऽऽरामविहारि-शिथिलाऽऽचारप्रचारतमोहारि-जैनाचार्य-भट्टारक-श्रीमद्विजयराजेन्द्रसूरीश्वर-सङ्कलितायां श्रीकल्पसूत्रार्थप्रबोधिनीनाम्न्यां टीकायां चतुर्थं व्याख्यानं समाप्तम् ।



---

जायते । परमोच्चत्वे च क्रमशः सुखी, भोगी, धनी, नेता, माण्डलिकः, क्षितिपतिश्चक्रवर्त्तीति फलानि जायन्ते ।

२ सर्वेषां तीर्थकृतां जनन्यो गूढगर्भा एव भवन्ति, जननवेलायामशुचिमलरुधिररहिताश्च जायन्ते ।

# अथ पञ्चमं व्याख्यानं प्रारभ्यते ।

३५ दिक्कुमारीकृतवीरजन्मोत्सवः—

भगवत्यवतीर्णे सकला अचेतना अपि दिशः प्रमोदमेदुरा इव प्रसेदुः । वाता अपि सर्वेषां सुखदा मन्दम्मन्दं वान्ति स्म । त्रिजगती खलूद्योतमयी जाता । दिवि दध्वान च दुन्दुभिः । नारका अपि जीवाः प्रामोदन्त । सागराम्बरापि समुल्ललास । षट्पञ्चाशद्दिक्कुमारीणामासनान्येजाञ्चक्रिरे, तेन च ता अवधिप्रयोगाद् भगवतो जननमवगत्य तस्यामेव रजन्यां शाश्वतिकं स्वाचारं प्रकुर्वते । प्रथममधोलोकवासिन्यो भोगङ्करा १, भोगवती २, सुभगा ३, भोगशालिनी ४. सुवत्सा ५, वत्समित्रा ६, पुष्पमाला ७, अनिन्दिता ८, नाम्न्योऽष्टौ दिक्कुमार्यस्तत्र सूतिकावेश्मनि समागत्य प्रभुं मात्रा सत्राऽभिवन्द्येशानकोणे सूतिगृहं विदधिरे, अशोधयंश्च योजनप्रमितां भूमिम् । पश्चान्मेघङ्करा १, मेघवती २, सुमेघा ३, मेघमालिनी ४, तोयधारा ५, विचित्रा ६, वारिषेणा ७, वलाहका ८, इत्यष्टावूर्ध्वलोकात्तत्राऽऽगताः कुमार्यः समातृकं भगवन्तं प्रणम्य सुरभिजलकुसुमौघवृष्टिं व्यतन्वत । ततो नन्दा १, नन्दोत्तरा २, आनन्दा ३, नन्दिवर्द्धना ४, विजया ५, वैजयन्ती ६, जयन्ती ७, अपराजिता ८, एता अष्टौ पूर्वरुचकादागत्याऽग्रे विलोकनार्थमादर्शं ध्रियन्ते। समाहारा १, सुप्रदत्ता २, सुप्रबुद्धा ३, यशोधरा ४, लक्ष्मीवती ५, शेषवती ६, चित्रगुप्ता ७, वसुन्धरा ८, इमा अष्ट दिक्कुमार्यो दक्षिणरुचकादुपेताः स्नानाय पूर्णकुम्भान् करे दधाना गीतं गायन्ति । इलादेवी १, सुरादेवी २, पृथिवी ३, पद्मावती ४, एकनासा ५, नवामिका ६, भद्रा ७, शीता ८, इत्यअष्टादिक्कुमारिकाः पश्चिमरुचकादागत्य संवीजनाय व्यजनपाणयोऽग्रे तिष्ठन्ति । अलम्बुसा १, मितकेशी २, पुण्डरीका ३, वारुणी ४, हासा ५, सर्वप्रभा ६, श्रीः ७,

द्वीः ८, एता अष्टकुमार्य उत्तररुचकादायाताश्चामराणि वीजयन्ति । चित्रा १, चित्रकनका २, शतेरा ३, वसुदामिनी ४, एताश्चतस्रो दिक्कुमारिका विदिशः समागता दीपकहस्तास्तत्र तिष्ठन्ति । रुचकद्वीपादभ्यागता रूपा १, रूपासिका २, सुरूपा ३, रूपकावती ४, नाम्न्यश्चतस्रो दिक्कुमार्यः प्रभोश्चतुरङ्गुलं हित्वा नालं छिन्दन्ति । तच्च दूरे गर्त्तं खनित्वा, तत्र निक्षिप्य पुनरापूर्य, तदुपरि वैदूर्यमयं पीठं चतुरस्रं विरचयन्ति । अथ सूतिकागारात्प्राच्यां दक्षिणस्यामुत्तरस्याञ्च दिशि रम्भास्तम्भमयानि त्रीणि गृहाणि निर्ममिरे । तत्र याम्यकदलीगृहे नीत्वा, विरचितसिंहासनोपरि भगवन्तं तन्मातरञ्चोपावेश्य, तयोरङ्गे सुरभितैलं मर्दयामासुस्ताः । ततः प्राच्यरम्भागृहे समानीय सिंहासनाऽऽसीनौ तौ विधाय विधिवत्सुस्नप्य चीनांशुकाभरणसुरभिविलेपनादिना विभूषयामासुः । ततस्ताः समातृकं प्रभुमौदीच्ये कदलीगृहे समानीय, सिंहासनोपरि निधायाऽरणिकाष्ठोत्पादितेऽग्नौ सुचन्दनेन्धनानि हुत्वा द्वयोः करे रक्षापोट्टलिकामबध्नन् ' भगवन् ! पर्वताऽऽयुर्भव ' इत्याशिषं दत्त्वा मणिमये द्वे गोलके चोच्छाल्य प्रभो रमणाय दिव्यमेकमान्दोलनपल्यङ्कं बध्वा, जन्मस्थानं नीत्वा, ताः सकला दिक्कुमार्यो दिक्षुस्थिता अतिमधुरं गायन्ति स्म । एतासामेकैकस्याश्चतस्रो महत्तरदेव्यः सन्ति । चतुःसहस्रं सामानिका देवा भवन्ति, अङ्गरक्षकाश्च षोडशसहस्रं विद्यन्ते । वर्त्तन्ते च सप्तचमूपतयः, अन्येऽपि महर्द्धिकाः सुरा लसन्ति । एतासामायुश्चैकं पल्योपमं भवति । इत्थं परिवारयुतास्ता योजनप्रमाणविमाने समुपविश्य, श्रीमद्भगवज्जन्ममहोत्सवविधित्सया यथाऽऽगुस्तथा तन्महं विधाय स्वस्वस्थानं प्रययुः ।

३६ इन्द्रकृतजन्मोत्सवस्तन्मनःशङ्कापनोदश्च—

अथ शक्रसिंहासनेऽचलेऽपि कम्पायमानेऽवधिप्रयोगेण चरमती-

र्थपतेर्जन्म विदित्वा, सौधर्मेन्द्रः द्वादशयोजनपरिमण्डलां, षड्योजनोच्चां, चतुर्योजनप्रमाणकेन, योजनमात्रेण वा नालकेन सुमण्डितां, सुघोषाभिधां घण्टां सपञ्चशताऽमरेण हरिणैगमेषिणा देवेन वादयामास। एवमितरेऽपीन्द्राः स्वस्वदेवलोके निजसैन्यान्या घण्टामवीवदन्। तन्नादश्रुत्या शेषा अपि वैमानिका घण्टा नेदुरुच्चैस्तराम्। ततो हरिणैगमेषी देवः शक्रमादेशं सर्वान्निलिम्पानवेदयत्, तेन प्रमोदमेदुराः सुराश्चलनायौत्सुक्यं बिभरामासुः। यथा–त्रिदशाऽधिपतिः पालकाऽमरकृतं लक्षयोजनप्रमाणं पालकनामकं विमानमारुरोह। तत्रेन्द्रसिंहासनाऽग्रे तस्याष्टाऽग्रमहिष्यस्तावन्ति भद्रासनानि समलञ्चक्रुः। तद्वामभागे चतुरशीतिसहस्रसामानिका देवाः स्वोचितभद्रासनेषूपाविशन्। इन्द्रासनाद्दक्षिणे तिस्रः परिषदो न्यषीदन्; तत्राऽऽभ्यन्तरपरिषद् द्वादशसहस्रप्रमाणा, चतुर्दशसहस्रप्रमाणा मध्यमा समज्या, षोडशसहस्रप्रमाणा बाह्यपरिषत्, तिसृणामैक्ये द्विचत्वारिंशत्सहस्रदेवा भद्रासनाऽऽसीना आसन्। तत्पृष्ठे सप्तानीकपतयः, चतुर्दिक्षु चैकैकस्यां चतुरशीतिसहस्राऽऽत्मरक्षका देवाश्च भद्रासनान्यारुरुहुः। इत्थमितरैरपि भूयिष्ठैरमरैः परिवृतो जेगीयमानगुणगणः स सौधर्मेन्द्रश्चचाल। तदनु कियन्तो निर्जरा इन्द्रशासनात्, परे मित्राग्रहात्, केचन निजप्रेयसीनां नोदनात्केचिन्निजसमुत्साहवशात्, केचनकौतुकादितरे विस्मयात्, केऽपि परया भक्त्या विविधवाहना भूयांसो विबुधाश्चेलुः। तत्राऽवसरे विविधवाद्यानिनदैर्घण्टारवैः सुराणां कोलाहलेन च शब्दाऽद्वैतमयमभूदिदं जगत्।

तदा सिंहारूढा गजारोहिण ऊचिरे–यदात्मीयं गजं दूरं नयत, नोचे-

---

१ भवनपतीन्द्राणामोघस्वरा–महौघस्वरा–मेघस्वरा–हंसस्वरा–क्रौञ्चस्वरा–मञ्जुस्वरा–मञ्जुघोषा–सुस्वरा–मधुस्वरा–नन्दिस्वरा–नन्दिघोषाद्या घण्टा ज्ञेयाः ।, याम्यव्यन्तरेन्द्राणां मञ्जुस्वरा, औदीच्यानान्तु मञ्जुघोषा, ज्योतिष्केषु चन्द्रस्य सुस्वरा, सूर्यस्य सुस्वरनिघोषा घंटा ज्ञेयाः ।

न्नामकः केसरी किलौद्धत्याद्धनिष्यति । महिषारोहिणस्तुरगारोहिणम्, तार्क्ष्यगादेवा अहिगामिनम्, छागासीनं चित्रकारूढो मिथो जजल्पुः । केचिदूचिरे–'भ्रातः ! मां विहाय जवेन मागाः, क्षणं मामपि प्रतीक्षस्व ।' ये दक्षा बलीयांसश्चाऽऽसँस्तेऽतिशीघ्रमग्रतश्चेलुः, सखीनपि तत्यजुः । कियन्तश्चैवमवोचन्त–यद्, भो देवाः ! मौनमाधाय व्रजत, यतः पर्वदिने विपुलोऽपि पन्थाः सङ्कीर्णो भवत्येव । एवं खेऽटतां लेखानां शिरःसु पतितैश्चन्द्रमसः करप्रकरैः सकला निर्जराः सजरा इवाऽलक्ष्यन्त । इत्थमूर्ध्वलोकादधोऽवतरतां तारका मार्गमागतानां तेषां मूर्धसु संलग्ना राजताः कलशा इवाऽधिग्रीवं ग्रैवेयका इव, गात्रेषु संसृष्टास्तारकाः स्वेदबिन्दव इव बभुस्तमाम् । अथ शक्रेन्द्रः सपरिवारस्तत्राऽष्टमे नन्दीश्वरद्वीपे रतिकरगिरौ समागत्य, संक्षिप्तविमानः श्रीमत्प्रभुजन्मसदनमागत्य जिनेन्द्रं जिनजननीञ्च त्रिःपरिक्रम्य प्रणम्य चाऽब्रवीत्––विश्ववन्द्ये ! रत्नकुक्षिधरे ! आद्यकल्पादिहागतः शक्रेन्द्रोऽहं त्वां प्रणमामि । अमुष्य चरमजिनजातस्य जननमहामहं विधास्ये । अतो मनागपि मनसि भीतिं मागाः, इति व्याहृत्यावस्वापिनीं निद्रां वितत्य, तत्पार्श्वे भगवत्प्रतिबिम्बं निधाय, पञ्चधा भूत्वा चैकः प्रभुं जग्राह, द्वौ चामरे जगृहाते, तुरीय आतपत्रमादध्रे, पञ्चमो वज्रं बिभराञ्चकार । तत्राग्रगन्ता पृष्ठयायिनं, पृष्ठगन्ता चाऽग्रयायिनं भृशं प्रशंसन् सुमेरुगिरिशिखरोपरि समागत्य, मेरुचूलातो दक्षिणेनाऽतिपाण्डुकम्बलशिलातलीयशाश्वतसिंहासनोपरि भगवन्तमुत्सङ्गे निधाय प्राङ्मुखो निषसाद । एवमीशानेन्द्राद्योऽपि[1] स्वस्वदेवरचितविमानमधिरुह्य सपरिवारास्तत्राऽऽगताः स्वस्वोचितस्थाने समासत । ततो जाम्बूनदमयाः, रूप्यमयाः, रत्नमयाः, स्वर्णरूप्यमयाः, स्वर्णरत्नमयाः, रूप्यरत्नमयाः, स्वर्णरूप्यरत्नमयाः, मृण्मया इत्यष्टजातीयाः कलशाः प्रत्येकमष्ट[2]सहस्रसंख्यावन्तो

---

(१) वैमानिकेन्द्राः १०, भवनपतीन्द्राः २०, व्यन्तरेन्द्राः ३२, द्वौ ज्योतिष्केन्द्राविति चतुष्षष्टीन्द्राः । (२) उपदेशप्रासादीये १४ स्तम्भे अष्टोत्तरसहस्रकलशाऽऽख्यानमप्यकारि ।

योजनमानाऽऽननाः, पञ्चविंशतियोजनोन्नता द्वादशयोजनविस्तीर्णा योजनैकमितनालका एते च प्रत्येकमष्टगुणितोश्चतुष्षष्टिसहस्त्रसंख्यावन्तो जातास्तैः सर्वैः सार्धशतद्वयवाराऽभिषेककरणेन षष्ठिलक्षाधिकैकाकोटिरभिषेका बभूवुः । एवं भृङ्गाराऽऽदर्शरत्नकरण्डक–सुप्रतिष्ठक–स्थाल–पात्र–पुष्पचङ्गेरिकाप्रभृतिपूजोपकरणानि प्रत्येकमष्टोत्तरसहस्त्राणि, मागधादितीर्थमृदो गङ्गादीनां जलानि, पद्मह्रदादीनां पद्मानि, क्षुल्लहिमवद्वर्षधरादिपर्वतेभ्यः सर्वौषधीश्चाऽच्युतेन्द्र आभियोगिकदेवैरनीनयत् । तदवसरे जातमात्रोऽसौ भगवानेतावत्कलशस्नपनं कदाचिन्नसहेत ?, मदुत्सङ्गान्निवहेद्वेति मनसि शङ्कमानः शक्र आशु भवाम्बुधितितीर्षया करधृतकुम्भान्, सिञ्चतो वा भावविटपिनम्, जहतो वा निजदुरितचयम्, धर्मचैत्ये स्थापयतो वा कलशानिव प्रभुमभिषेक्तुं त्वरमाणानपि तान् देवान् देवीश्च नाऽऽदिदेश । तदाऽवधिना शक्रशङ्कां जानानोऽर्हतोऽतुलां शक्तिं दर्शयितुं भगवान्निजवामचरणाङ्गुष्ठसंपर्कादमरगिरिं सकलमचीचलत्तमाम् । तस्मिन् कम्पमाने सकलोर्वी कम्पमवाप । तस्य नगराजस्य शिखराणि सहसैव निपेतुः, सागराश्च चुक्षुभिरे, ब्रह्माण्डस्फोटशब्दाऽद्वैतमयञ्जगदजायत । ततोऽतिरुष्टः शक्रेन्द्रोऽवधिना भागवतीमेव लीलामवगत्य प्रभुं नामं नामं निजमज्ञानजं मन्तुं क्षमयन्नेवमस्तावीत्—

सुनो वीर्यबोलुं विशालो विबूधो !, नरा वार योधे मली एक गोधो ।
दशे गोधले लेखवो एक घोडो, तुरंगेण वारे मली एक पाडो ॥१॥
दसे–पंच भैंसे मदोन्मत्त नागो, गजे पांचसो केसरी वीर्य तागो ।
हरी वीससो वीर्य अष्टापदेको, दसे लक्ष अष्टापदे राम एको ॥२॥
भला रामयुग्मे समो वासुदेवो, उभे वासुदेवे गणी चक्री लेवो ।
भला लक्षचक्री समो नाग सूरो, वली कोटी नागाधिपे इन्द्र पूरो ॥३॥
अनन्ते सुइन्द्रे मली वीर्य जेतूं, टची अङ्गुलीमां प्रभु वीर्य तेतूं ।
नमो वीर अर्हन् ! सदा भूत भव्य, भविष्यत्सुरेन्द्रातिवीर्यातिसव्य ॥४॥

अथैवं संभृतोपकरणा अच्युतेन्द्रादयो द्वाषष्ट्या ( ६२ ), चन्द्रसूर्यौ द्वात्रिंशदधिकशतेन ( १३२ ), सामानिक एकेन ( १ ), त्रायस्त्रिंशास्त्रयस्त्रिंशद्भिः ( ३३ ), पार्षद्यास्त्रिभिः ( ३ ), आत्मरक्षका एकेन ( १ ), लोकपालाश्चतुर्भिः ( ४ ), अनीकाधिपाः सप्तभिः ( ७ ), प्रकीर्णक एकेन ( १ ), इन्द्राण्यः पञ्चभिः ( ५ ), आभियोगिक एकेन ( १ ); इत्थं सार्धशतद्वयाभिषेकैः ( २५० ) प्राग् भगवन्तं यथाक्रमं स्नपयाञ्चक्रुः । तत्र श्रीमज्जिनाभिषेचने प्रमोदमानाऽशेषसुरवृन्दोत्क्षिप्तप्रागुक्तकुम्भौघगर्भादधःपतन्ती क्षीरसागरनीरधारा जिनपतेर्मूर्धनि श्वेतातपत्रायमाणा, वदनाब्जे शशधरकरनिकरायमाणा, अधिग्रीवं स्फारसारहारायमाणा, वपुषि चेतरस्मिँश्चीनचोलायमाना भृशमशोभत । तदनु पञ्चधाभूयैको भगवन्तमुत्सङ्गे, द्वौ चामरे तुर्यश्छत्रम्पञ्चमो दम्भोलिं बिभ्राण ईशानेन्द्रः शक्रस्थाने निषसाद । ततो धृतचतुर्वृषभरूपः सौधर्मेन्द्र ईशानेन्द्रक्रोडस्थितं चरमविभुं वसुशृङ्गविनिर्गच्छदच्छक्षीरनीरैः स्वयमभ्यषिञ्चत् । इत्थं ये देवाश्चरमजिनपतिं स्नपयन्तो नैर्मल्यमापेदिरे, तएव देवा ध्रुवं वैबुध्यमापुः । ततो मङ्गलदीपं नीराजनञ्च विधाय नृत्यगीतवाद्यादिविधमुत्सवं ते व्यतन्वन् । पश्चाद्धरिः काषाय्या प्रभोरङ्गानि समुन्मृज्य, गोशीर्षचन्दनाद्यैर्विलिप्य, दिव्यकुसुमाद्यैरभ्यर्च्य, विभोरग्रे १ दर्पण–२ वर्धमान–३ कलश–४ मीनयुग्म–५ श्रीवत्स–६ स्वास्तिक–७ नन्द्यावर्त्त–८ भद्रासनानि, इत्यष्टमङ्गलानि रत्नपट्टके रूप्यतन्दुलैरालिख्य परया भक्त्या ‘ नमोऽत्थु ते सिद्ध बुद्ध णीरय समण णीरागदोस निम्मम धम्मवरचाउरंतचक्कवट्टि नमोऽत्थु ते ’ इति संस्तुत्य । जिनेश्वरमानीय मातुरन्तिके विमुच्य, भगवतः प्रतिकृतिमवस्वापिनीञ्चापहृत्य, कुण्डलयुगले क्षौमयुगले चोपधानद्वयीञ्च तत्र निधाय, श्रीदामरत्नदाम्नी, उल्लोचे कनकमयकन्दुकमित्यादि भगवद्रमणयोग्यविविधोपकरणानि स्थापयित्वा, रत्नस्वर्णरूप्याणां द्वात्रिंशत्कोटिमभिवृष्य तत्र वाढमेवमाघोषयामास—

'सर्वे देवी देवा ! मद्वाक्यं शृणुत, यः कोऽपि देवो वा दानवो वा प्रभोस्तन्मातुर्वाऽशुभं चिन्तयिष्यति, तच्छिरोऽमुनैव वज्रेण सप्तधाऽर्जुनतरुमञ्जरीमिव स्फोटयिष्यामि ।' ततः प्रभोरङ्गुष्ठे पीयूषं सञ्चार्य नन्दीश्वरद्वीपे समागत्याऽष्टाह्निकं महामहं विधाय, सर्वे देवा निजनिजस्थानमगच्छन् । तस्यामेव रजन्यां सिद्धार्थभूपस्य सद्मनि कुबेरानुचरास्तिर्यग्जृम्भका देवा हिरण्यानाम्, रजतानाम्, सद्रत्नानाम्, वस्त्राणाम्, भूषणानाम्, नागवल्लीप्रमुखपत्राणाम्, कुसुमानाम्, श्रीफलादिविविधफलानाम्, शालिगोधूमाद्यन्नानाम्, स्रजाम्, कोष्ठपुटादिगन्धानाम्, वासयोग्यचूर्णानाम्, हिङ्गुलादिवर्णानाम्, वसुधाराणाञ्च वृष्टिं विदधिरे ।

२७ सिद्धार्थस्य राज्ञः पुत्रजन्मोत्सवकरणम्—

अथ प्रियम्वदा नाम्नी दासी राजानं सिद्धार्थं पुत्रजननमुदन्तं तूर्णं निवेदयाञ्चक्रे । तदाकर्ण्य प्रमोदभरमेदुरो भूपतिः पुलकाञ्चितगात्रो भवँस्तस्यै किरीटं छत्रञ्च मुक्त्वा सर्वालङ्कृतिं समर्प्य, पुत्रपौत्राद्यनेककुलभोग्यां वृत्तिञ्च प्रदाय, तदीयं दास्यत्वमपागमयत् । ततः प्रभाते राजा नगरगोप्तृन् आकार्याऽऽदिशत्—भोः ! कारागारात्तूर्णं बन्दिगणं मुञ्चत, मानोन्माने च वर्धयत । किञ्चाऽमुष्मिन्नगरे सर्वत्रान्तर्बहिश्च राजपथादौ नीरजीकृत्य सुगन्धोदकान्यभिषिञ्चत । ये च पन्थान उच्चावचास्तानपि समीकृत्य सुमण्डयत । महोत्सवाऽवलोकनायागताया जनताया उपवेशनाय मञ्चकातिमञ्चकान् प्रतिमार्गमुभयतः स्थापयत । सिंहव्याघ्रादिविचित्राचित्रचित्रितान्महाध्वजान् विदधीध्वम् । प्रतिपथं भूमीर्विलिम्पत । सेढिकादिभिः कुड्यादि विलेपयत । गोशीर्षसरसरक्तचन्दनदर्दरगिरिसमुद्भूतचन्दनैः पञ्चाङ्गुलितलाङ्कनं कुड्यादौ दापयत । प्रतिसदनं चन्दनकलशान् संस्थापयत । प्रतिद्वारं कमनीयतमानि तोर-

---

१–पञ्चदशमासपर्यन्तं रत्नकोटित्रयीं ववर्षेत्यपि लेखो क्वचिद् दृश्यते ।

णानि बन्धयत। उपर्यधो लग्नाविस्तीर्णातिवर्त्तुलप्रलम्बमानकुसुमदाम-कलापविभूषितं प्रतिवेश्मद्वारं प्रतिराजपथञ्च कारयत। पञ्चवर्णान् सौरभ्यभरान् कुसुमपुञ्जान् सर्वत्र विकिरत। दन्दह्यमानदशाङ्गादिधूपैः सर्वत्र मघमघयत। अन्यैरपि सुगन्धिद्रव्यैः प्रतिमार्गचतुष्पथादि व्यामोदयत। नर्त्तकान्नर्त्तयत, वरत्राखेलकान् खेलयत, मल्लैर्मल्लान्मिथो योधयत, मौष्टिकैर्मुष्टियुद्धं कारयध्वम्, सत्कथकान् कथाः कथयत, सूक्तिपाठकान् पाठयत, लासकैरासलीलां प्रवर्त्तयत, आरक्षकभटैरासिलीलां वितानयत, लंखैर्वंशाग्रखेलनं विस्तारयत, गौरीपुत्रभिक्षुभिश्चित्रपटान् सर्वत्र दर्शयत, मार्दङ्गिक—पाणविक—वैणविक—दौन्दुभिक-प्रमुखैरशेषैरभिज्ञैर्वादकैस्ततादिचतुर्विधानि च वाद्यानि वादयध्वम्। ततस्तेऽपि प्रमुदिताः सन्तः कृताञ्जलयः क्षितिपतेरादेशं शिरसा धृत्वा, शीघ्रमेव नृपोदितं कृत्वा सर्वमकार्ष्मेति नरनाथं व्यजिज्ञपत्।

ततः सिद्धार्थभूपतिः कृतभूरिश्रमश्चिरपरिमर्दितसर्वाङ्गलक्षपाकादि-सुरभितैलः, स्नातानुलिप्तः, परिहिताऽशेषकौशेयवसनसद्रत्नभासुरविभूषणपटलः, प्रभयाऽतुलया भास्वानिव देदीप्यमानः, समस्तबलपरिवृतः, सर्वर्द्धिसमाकलितः समस्तवादित्रादिरवमुखरीकृताऽऽशापटलः, सकलात्मीयपरिजनानुगतो दशाहं यावत् स्थितिपतिकां प्रावर्त्तयत्सर्वत्र नगर्याम्। तथाहि—प्रत्यापणीयक्रयविक्रयादे राजकीयं करमजहात्। प्रत्याब्दिकं राजग्राह्यं गोमहिषवृषभादीनामपि करं दशाहमौज्झत्। सर्वेषां लोकानां यानि यानि खाद्यपेयादीनि तानि सर्वाणि हट्टात्प्रदापितानि मूल्यन्तु स्वकोशाददापयत्। दशदिवसाँस्तेऽपि हट्टीयाः पुरुषा नृपादेशादतोलयित्वैव दातुं लग्नाः सर्वेषां सर्वाणि। 'केऽपि राजकीयाः पुरुषाः कस्यचिदपि सद्मानि किञ्चिदपि बलादादातुं मा व्रजन्तु' इत्युच्चैराघोषयामास। सर्वापणेषु दाशाहिकायामेतस्यां क्रयविक्रयसतोलन-प्रदानानि निवारयामास। स्वग्राह्यमृणं करं वा हित्वा परग्राह्यं परेषा-

मृणं स्वकोषाद्दापयित्वा सर्वे लोका अनृणिनश्चक्रिरे । एतत्सर्वं यथावत्कारका महीयांसः पुमांसो नियुक्ताः । शतसहस्रलक्षदीनारव्ययसाध्या भगवदर्हत्प्रतिमार्चा अकरोत्कारितवाँश्चाऽन्यैरपि । अष्टमीचतुर्दश्योः पौषधकारिणां श्राद्धानां भक्तिवात्सल्यविधित्सया भूरिधनानि पृथक् स्थापितवान् । अन्यान्यपि धर्मकृत्यानि विविधानि सोऽकरोदन्यैश्चाऽचीकरत् । पर्वदिनादौ च बहुविधानि दानानि कुर्वन् कारयँल्लोकैरुपहृतं शतं सहस्रं लक्षं गृह्णन् ग्राहयँश्चाऽनुचरैस्तावन्मात्रं ददद्दापयँश्च सिद्धार्थो राजा दशदिनानि महोत्सवमयानि चक्रिवान् । तत्र प्रथमे दिवसे भगवतो मातापितरौ स्थितिपतितां व्यधाताम् । तृतीयदिवसे चन्द्रसूर्ययोर्दर्शनमचीकरताम् । विधिश्चेत्थम्—जन्मदिवसाद् दिनद्वयेऽतीते गृहमेधी विद्वान् अर्हत्प्रतिमाऽग्रे राजतीश्चन्द्रमूर्त्तिं प्रतिष्ठाप्य विधिवदभ्यर्च्य स्नातां परिहितवसनाऽऽभरणां ससुतां मातरं चन्द्राऽभिमुखमुपावेश्य " ॐ अर्हं चन्द्रोऽसि, निशाकरोऽसि, नक्षत्रपतिरसि, सुधाकरोऽसि, औषधीगर्भोऽसि, अस्य कुलस्य वृद्धिं कुरु कुरु स्वाहा " इति चन्द्रमसो मन्त्रमुच्चारयन् पुत्रस्य चन्द्रं दर्शयेत् । ततो माता ससुता गुरुं प्रणमेत्तदा गुरुस्तस्या एवमाशीर्वादं दद्यात्—" सर्वौषधीमिश्रमरीचिराजिः, सर्वापदां संहरणप्रवीणः । करोतु वृद्धिं सकलेऽपि वंशे, युष्माकमिन्दुः सततं प्रसन्नः ॥ १ ॥ " यदि तत्र दिने कृष्णचतुर्दशी, अमावास्या, मेघादिना पिहितश्चन्द्रो वा स्यात्तथापि मूर्त्तिस्थापनाऽर्चनादिविधिनैव तत्प्रतिविम्बं दर्शयेत् । ततस्तस्या एव यामिन्याः प्रभाते समुदिते च सूर्ये कुलगुरुः स्नातानुलिप्तः कृतबलिकर्मा सौवर्णीं ताम्रमयीं वा सूर्यमूर्त्तिं जिनेशप्रतिमाग्रे संस्थाप्य, विधिवदभ्यर्च्य सपुत्रां प्रसूं तत्रोपावेश्य " ॐ अर्हं सूर्योऽसि, दिनकरोऽसि, तमोऽपहोऽसि, सहस्रकिरणोऽसि, जगच्चक्षुरसि, प्रसीदाऽस्य कुलस्य तुष्टिं, पुष्टिं, मोदं, कुरु कुरु स्वाहा " अमुं मन्त्रं पठित्वाऽभ्युदितं सूर्यं दर्शयेत् । ततो माता सव-

त्सा गुरुं प्रणमेत्, तदा गुरुस्तस्या आशिषं दद्यात्—" सर्वसुराऽसुरवन्द्यः, कारयिताऽपूर्वसर्वकार्याणाम् । भूयात् त्रिजगच्चक्षुर्मङ्गलदस्ते सपुत्रायाः २ " दर्शयत्यधुनाऽपि तत्स्थाने शिशुमादर्शम् । षष्ठे दिवसे, रात्रौ धर्मजागरणं कुलपारम्पर्येण व्यदधाताम् । एकादशेऽहनि गृहादीनामशुचिं निवृत्य, द्वादशे दिवसे च भगवतो मातापितरौ प्रहर्षभरौ, विपुलाशनपानखादिमस्वादिमादिचतुर्विधाभिर्भोज्यसामग्रीभिः स्वज्ञातीन्, निजपुत्रपुत्रीणां श्वशुरादीन्, अशेषान् क्षत्रियदासदासीप्रमुखान्, भोजयितुं निमन्त्रयामासतुः । ततः कृतस्नानौ, विहितबलिकर्माणौ, कृतकौतुकमङ्गलौ, परिहितसभार्हमाङ्गल्यचीनांशुकौ, मणिमयसद्रत्नजटितस्तोकनेपथ्यशोभितशरीरौ, भगवन्मातापितरौ, भोजनवेलायां भोजनमण्डपमागतौ, सुखासनाऽऽसीनौ, मित्रज्ञातिस्वजनादिपरिवारैः सार्धं तच्चतुर्विधं परिवेषितमाहारमिक्ष्वादिवदीषदास्वादयन्तौ बहुत्यजन्तौ, खर्जूरादिवदल्पमुज्झन्तौ बहुभुञ्जानौ, सर्वमश्नन्तौ किञ्चिदेव जहतौ, परस्परं यच्छन्तौ बुभुजाते। ग्रन्थान्तरे भोजनविधिरित्थम्—

मण्डपादिरचना—

मनोहर मंडप निपजाया, देखते दिल हुलसाया।
अनोपम दृश्य था जैसा, कहीं पर होय नहीं वैसा ॥ १ ॥
चकाचक कांच चिलकारा, पट्टकूल वस्त्र शृंगारा ।
झाड़ और हंडिया सोहे, सकल जनता के मन मोहे ॥ २ ॥
पत्र सब केलि के छाये, दीवालें भव्य रंगवाये ।
कुंकुम के छांटणे दीये, सुगंधित महक वहाँ कीये ॥ ३ ॥
तोरण की त्यारी है चंगी, मंडप वह दिख रहा जंगी।
अंगन सब शुद्ध पुतवाये, कीमती रत्न जड़वाये ॥ ४ ॥
विछायत भव्य विरचाई, जाजमें जंगी मंगवाई ।
गलीचे बहुत गुलजारे, पांतिये रेशमी सारे ॥ ५ ॥

कहीं पर मखमली आसन, खर्च की नहीं है विमासन ।
सोने के थाल रखवाये, पटों पर सर्व सजवाये ॥ ६ ॥
कटोरे वाटकी प्याले, स्वर्ण के एक से आले ।
लोटे अरु ग्लास बहुतेरे, अनेकों कर दिये भेरे ॥ ७ ॥
अभी सब न्यात बुलवावे, अनेकों आदमी आवे ।
स्वजन अरु मित्रगण सारे, स्वजाती बहुत विस्तारे ॥ ८ ॥
आयकर पांत पर बैठे, आसन पर कोइ नहीं हेठे ।
आई सब पुरसने वाली, दीखती बहु रूपाली ॥ ९ ॥
अनोपम वस्त्र से शोभित, रूप अरु कांति से मोहित ।
किये हैं सोल सिणगारा, आभूषण दिव्य विस्तारा ॥ १० ॥
हाथ में शुद्ध जल झारी, तरुणों की दृष्टि को ठारी ।
आन कर हाथ धुपवाये, देखंते काम उभराये ॥ ११ ॥

भोज्यफलाऽऽद्य:—

फलों की प्रथम थी त्यारी, दिखावट अजब ही न्यारी ।
अखोड़ मिश्री की जाति, इसीविध अनेकों भांति ॥ १२ ॥
चोपड़ी चारोली केला, रायण और श्रीफल भेला ।
बहुत से बदाम अरु पिस्ते, मूल्य में वो नहीं सस्ते ॥ १३ ॥
द्राख अरु आम खरबूजे, नारंगी अनार तरबूजे ।
सेव सहतूत अरु निम्बू, खारक खजूर फिर जम्बू ॥ १४ ॥
गूंदा और पेमदी बेर, आनके कर दिये ढेर ।
छोलकर सेलड़ी लाई, मधुररस सब के मन भाई ॥ १५ ॥
सीताफल रामफल अधिके, जामफल बीजोरा बढ़के ।
इत्यादि बहुत किये भेले, सुस्वादु लाये फिर केले ॥ १६ ॥
सभी के सामने पुरसे, चखतां चित्त बहु विकसे ।
मुख में मेल कर खावे, पेट का फिक्र नहीं लावे ॥ १७ ॥

भोज्यपक्कान्नाऽऽदयः—

मालवी भूमि में उपजे, बहुत ही श्रेष्ठ गहुं निपजे ।
पानीयुत हाथ से मसल्या, शुद्ध कर चक्की में दल्या ॥ १८ ॥
वस्त्र इक मलमल को आण्यो, मेदो वह उसीसे छाण्यो ।
घृतपक्क पुरसिया खाजा, दन्त में होत आवाजा ॥ १९ ॥
लायकर पुरसिये पकवान, जीमन को हो गये सावधान ।
अनेकों जाति के लाडू, मानो! ज्यों जीमते साडू ॥ २० ॥
सिंहकेसरीये मेले, मसाले अधिक ही भेले ।
कंसार मगद के मोदक, कीटीया दालीया शोधक ॥ २१ ॥
ऐसे मोदक जो खावे, बुड्ढा भी मर्द हो जावे ।
लायकर पुरसी मुरकी, खानेको जीभ तब फुरकी ॥ २२ ॥
जलेबी मुंह में डाले, रस के गट्टके चाले ।
पेड़े जब पेट में पड़िये, मेलते मुंह में गुड़िये ॥ २३ ॥
मखाना मुह में डाले, बड़ बड़ वाक्य तब चाले ।
घेवर जब मुखमें धरिये, चाखतां घृत बहु झरिये ॥ २४ ॥
झीणा झीणा तारकी फीणी, सेवां अब आणी है झीणी ।
देख देख दहीथरे खावे, मन में तो हसते जावे ॥ २५ ॥
तिलों की सांकली खाधी, सिंगोड़े सेव से साधी ।
अब आया साकरिया सीरा, बुड्ढों का मन हुआ अधीरा ॥ २६ ॥
लाई अब उत्तम लापसी, छोटे मोटे इसीसे धापसी ।
पकवान अनेका आवे, मेवे की खीचड़ी खावे ॥ २७ ॥
अब आई सुगंधी शाल, खाने को हो गये उजमाल ।
मूंग की दाल है भेली, सुगंधी स्वच्छ घृत ठेली ॥ २८ ॥
खीचडी पातली अरु पोली, इकवीस की होत इक कोली ।
सालणां मुंह में भावे, जीभ पर पानी फिर आवे ॥ २९ ॥

पकोडे स्वादु वेसणके, बडे भी मूंग की कणके ।
मसाले बहुत थे तीखे, इत्यादि सब बने घीके ॥ ३० ॥

विविधजातिव्यञ्जनादयः—

मूंगीया केर रायडोड़ी, लाते हैं शाक दौड़ दोड़ी ।
वालोल करमदा काचा, नीला चणा मिरच में साचा ॥ ३१ ॥
पीपर अरु चवला की फलियें, सांगरी मूंग की कलियें ।
करेलां वावलिया भींडी, तोरई रींगड़ा तींडी ॥ ३२ ॥
मोगरी काचरी लाना, कूमटीया फोग अरु धाना ।
रायता छाश अरु दधिके, एक से एक थे अधिके ॥ ३३ ॥
खीचिया सारेवड़ा पापड़, पातले जैसे थे कापड़ ।
इत्यादिक वहुते साग, जीरा मिरचों का वहु लाग ॥ ३४ ॥
मसाला गर्म मिलवाये, घृत में पहिले तलवाये ।
हींग के वघार सुगंधा, खाते समय छोड़ दिये धंधा ॥ ३५ ॥
लेने को सामने जोवे, जीभ तो फरफरी होवे ।
चणा की मेथी की भाजी, चंदलेवा पालखा साजी ॥ ३६ ॥
सुआ अरु चीलकी भाजी, वत्थुआ परजन से राजी ।
देगचां भर भर के दूध, भर भर के वाटके पीध ॥ ३७ ॥
अब तो भर गये पेट, डकारें आवती ठेठ ।
शुद्ध पाणि से चल्लू कीजे, न मावे पेट में उत्तर दीजे ॥ ३८ ॥
पीछे दिये पान–तम्बोल, केसर के छींटे रंगरोल ।
हीर चीर मखमल पटंबर, पहरने देत हैं सुन्दर ॥ ३९ ॥
फूलों की माल पहिरावे, हीये में हर्ष उभरावे ।
आभूषण पहिरामणी देवे, भूप–सिद्धार्थ जस लेवे ॥ ४० ॥

३८ भगवतो नामकरणं तत्स्वरूपवर्णनञ्च—

इत्थमशित्वा मुखपाणिप्रक्षालनादिना शुचीभूतौ ज्ञातिप्रभृतीन्

विपुलताम्बूलगन्धपुष्पमाल्यवसनालङ्कारादिना सत्कृत्यैवमवदताम्—भोः स्वजनाः! अमुष्मिन् दारके गर्भे समुत्पन्ने, वयं हिरण्येन, राया, राज्येन, धान्येन, रूप्येण च ववृधिमहे। भूयसीमसीमामेव प्रवृद्धिमवलोक्य, प्रागेव निरचिन्वाव—यत्साति जन्मनि दारकस्य 'श्रीवर्द्धमान' इति शुभमन्वर्थं नाम धरिष्यावः। सोऽयं चिरकालिको मामको मनोरथोऽद्य साफल्य-मैयः (प्राप)। अतोऽमुष्य कुमारस्य 'श्रीवर्द्धमान' इति शुभाभि-धानं प्रथताम्। भगवतो महावीरस्य त्रीण्यभिधानानि जज्ञिरे—माता-पितृभ्यां दत्तं 'वर्द्धमान' इति प्रथमम्। रागद्वेषादिराहित्यात्तपस्या-क्लेशसहनशक्तियोगाच्च 'श्रमण' इति द्वितीयम्। आकस्मिके विद्युदा-दिजे भये सिंहादिदुर्जीवजाते भैरवे च दुःखे यदसौ नो चलिष्यति, मनसि द्रढिमानमेव धरिष्यते, परिषहिष्यते च द्वाविंशतिपरीषहान्, दिव्यादींश्चतुर्धा षोडशधा चोपसर्गान्, क्षमिष्यते च क्षमया नतत्रश-क्त्या। भविष्यति च भद्रादीनामेकरात्रिक्यादीनां वा प्रतिमानामवकः। अरतिरत्योः सत्योर्हर्षविषादौ नो भरिष्यति, कैवल्यज्ञानदर्शनवरश्रियं वरिष्यति, भविष्यतीदृशो भगवानतो देवेन्द्रा अमुष्य 'श्रमणो महा-वीर' इत्यन्वर्थं नाम तृतीयं चक्रिरे।

द्वितीयाशशीव मन्दाराङ्कुर इव दिने दिने भगवान् वरीवृध्यमानः सम्पूर्णपीयूषमयूखमुखः, गजराजगतिकः, बिम्बफलोष्ठपुटः, सितोज्ज्व-लद्विजपङ्क्तिः, भ्रमरश्यामलकचकलापः, अम्बुजमञ्जुकरः, सुरभिश्व-सितः, प्रभयोल्लसितः, फुल्लारविन्ददलायताक्षः, मारविजित्वररूपश्रिया जुष्टः। किमधिकं सर्वेषां कान्तिमतां सुराणामेकत्रीकृतोऽपि रूपो भगव-द्वामचरणाङ्गुष्ठस्य षोडशीमपि कलामाप्तुं नाऽर्हति[१]। ईदृशो भगवान्

---

१ प्रभोस्तीर्थङ्करादल्पं रूपं गणधरस्य, ततोऽल्पमाहारकशरीरवतां साधूनाम्, तेभ्यो-ऽल्पमनुत्तरवैमानिकदेवानाम्, अमीभ्योऽल्पं नवग्रैवेयकदेवानाम्, इत्थं द्वादशैकादशादिप्रथम-देवलोकं यावदुत्तरोत्तरं रूपाल्पत्वम्, ततो न्यूनं ज्योतिष्कदेवानाम्, ततो भवनपतीनाम्, ततो

महतो महीयाञ्छ्रुतवान्, मतिमान्, प्रथितावधिमान्, पृथुपूर्वभवस्मृतिमान्नैरुज्यवाननगाधबुद्धिचातुर्यसौन्दर्यशौर्यौदार्यधैर्यादिगुणगणैर्जगदुत्कृष्टतमस्त्रिलोक्यां तिलकायमानो बभूवान् ।

३९ भगवतो बालक्रीडनं, समागतमायिकदेवजयश्च—

अथैकदाऽष्टवर्षीयान्भगवान् कौतुकोज्झितोऽपि निजवयस्यराजकुमारैः सह, तद्देशीयातिप्रसिद्धाऽऽमलकीक्रीडां चिकीर्षुर्नगराद्बहिरगमत् । तत्रैकस्य पिप्पलतरोरधस्तात्सर्वे भगवत्प्रमुखा राजकुमाराः संचस्क्रिरे । तत्रेयं पद्धतिः—यद् द्वौ द्वौ बालकौ सहैव धावेताम्, धावित्वा च यः प्रागेव तं पिप्पलतरुं स्पृशेत् तस्य जयः । यश्च पश्चात्तिष्ठेत्स हारितो भवति, हारितश्च निजस्कन्धे जेतारमारोप्य तत्रैव निर्धारितस्थाने धावन्नागच्छेत् । प्रभुर्यावद्राजपुत्रैः सह क्रीडन्नासीत्तावत्सौधर्मेन्द्रः सभासीनो वीरप्रभोरिव बलीयान् कोऽप्यन्यो नैव दरीदृश्यते । बाल्येऽप्यबालपराक्रममम‌ुं महावीरं शक्रादयोऽपि भापयितुं नैव कल्पेरन् । इत्याकर्ण्य कोऽपि मिथ्यादृष्टिदेवः शक्रभाषितमश्रद्दधानः स्वचेतस्येवमचिन्तयत्—यदसौ प्रभुत्वाऽखर्वदर्पादेवमसमञ्जसं निरङ्कुश इव ब्रूते । एषोक्तिः—पङ्गुना गिरिलङ्घनमिव मनागपि श्रद्धार्हा नो भवितुमर्हति । तदहमधुनैव तत्र गत्वा, तमधिकं वित्रास्य शक्रोदितमेतदलीकं करवाणि, इति निश्चित्य, मनुष्यलोकमागत्य, राजकुमाररूपं विकृत्य, भगवता सह रन्तुं लग्नः । तदा भगवाञ्जवेन धावित्वा, प्रागेव तं पिप्पलतरुं करेण स्पृष्टवान्, गतवाँश्चाऽग्रे । तदा स सुर आत्ममायया भगवतो भीषणाय मुशलस्थूलललद्द्विजिह्वान्, महाभीमान्, फूत्कुर्वतः, शिरसि दीप्रमणिधरान्, भोगिनो विकुर्व्याऽऽमूलात्प्रतिशाखमवेष्टयत् । अतिभीषणं

व्यन्तराणाम्, ततो न्यूनं चक्रवर्त्तिनाम् । ततो वासुदेवे, ततो बलदेवे, तदल्पं माण्डलिकादौ भवत्युत्तरोत्तरं रूपतारतम्यम् ।

भोगिनं तत्तरुमूले वीक्ष्य, सर्वे कुमारा अतित्रस्ताः पलायन्त। परन्तु निर्भीक एक एव प्रभुस्तत्रागत्य, सलीलं तं भोगिनं पाणिना गृहीत्वाऽतिदूरं निरक्षिपत्। ततः पुनः समागताः कुमाराः कन्दुकक्रीडनं मिथः प्रारेभिरे। तत्रैवं पणायाश्चक्रिरे—यत्पराजितो बालो निजस्कन्धे जेतारं संस्थाप्य, दूरं धावेत्, इत्थं क्रीडद्भिः कुमारैः सत्रा स सुरोऽपि तैः सह रन्तुं लग्नः। क्षणादेव भगवता क्रीडता पराजितो देवः। अतएव स भगवन्तं निजस्कन्धोपरि निधाय, तद्भापनाय सप्ततालतरुप्रमाणोऽभवत्। श्रीवीरोऽपि तस्य दुर्मतेर्भावं विज्ञाय, वज्रसमया मुष्ट्या तत्पृष्ठं जघान, तेन परिपीडितः सुरः शक्रोक्तिं स्मारयमाणो मशक इव सङ्कोचं प्राप। ततः प्रत्यक्षीभूय, सकलं यथाजातं निवेद्य, पौनःपुन्येन स्वापराधं क्षमयन्, विभुमेवं बभाषे स सुरः—"प्रभो! यथा शक्रेन्द्रस्त्वदुदारगुणगणान् सदसि व्याजहार, तथैव सकलास्त्वयि दृश्यन्ते। त्रिजगत्यां त्वमिवाऽपरः कोऽपि बलीयान्नैव विद्यते। शक्रेन्द्रोऽपि स्वयं तत्रागत्य, भगवच्चरणारविन्दयोरभिवन्द्य, शैशवेऽप्यमितं पराक्रममवलोक्य, मोमुद्यमानः 'श्रीवीर' इति भगवतो नाम धृतवान्।

४० भगवतो लेखनशालागमनं—

अथ भगवतो वीरस्य यदाऽष्टमोऽब्दः प्रावृतत्, तदा विज्ञतमौ, प्रेम-

---

१ वर्धमान जब वर्ष अष्ट की आयु को पर्याप्त थे,
मोहवश हो पिता माता फिक्र में परिव्याप्त थे।
विना शिक्षा श्रेय नाहीं जगत् में रीति यही,
अतः अब इन प्रिय कुमर को विद्वान् करना सही ॥ १ ॥
नीति—शास्त्र में कथन सच्चा वर्ष पंच पर्यन्त है,
लाड—गोद की सीम दाखी फिर पढ़ने मे तन्त है।
पिता माता निज तनुज को अशिक्षित रखते कहीं,
शत्रु सदृश वे कहाते मूर्ख का आदर नहीं ॥ २ ॥

पाशबद्धौ, मातापितरौ भगवन्तं समुचिताऽमितविभूषणविभूषितं वि-
धाय, महीयसा हर्षोद्गारेण शुभेऽहनि श्रेयस्यां वेलायां लेखनशालां

---

इसी कारण पाठशाला भेज कर पंडित कने,
सर्व-विद्या अरु कलायें सिखाना जहाँ तक बने।
बुला पंडित ज्योतिषी को शुभ लग्न दिखवा लिया,
विविध वाजा साज संयुत भूपने उत्सव किया ॥ ३ ॥
गोल-धानी द्राख श्रीफल सींगोड़ा खारक चणा,
टोपरा साकर चारोली वर्फी पेड़ा अति घणा।
फल फूल एलची पाक-पिस्ता मखाणा मोदक लिये,
खर्जूर दाड़िम सेव ताजी थाल भर भेले किये ॥ ४ ॥
सर्व मेवे विविध वस्तु साथ लेकर कर धरे,
पाठशाला में लेजा कर छात्रों को वितरण करे।
सोने के खड़िये पाटीयें फिर कीमती चांदी तनी,
रत्नजडित की लेखनी ले जो थी सोने की बनी ॥ ५ ॥
तम्बोल ताजे बना बीड़े कस्तूरी केसर छांटने,
पूर्वोक्त वस्तु कीध संग्रह विद्यार्थियों को बांटने।
आगे अध्यापक योग्य भूषण वस्त्र नाना जाति के,
स्वर्ण निर्मित कड़ा कंठो मुद्रड़ी बहु भांति के ॥ ६ ॥
पालखी रथ अश्व हस्ति सर्व किंकर साथ थे,
भट्ट चारण विरुद बोले प्रभु त्रिलोकी नाथ थे।
इसीविध शुभलग्न समये पाठशाला पद धरे,
सर्वजनता थी उपस्थित मुख से जय जय रव करे ॥ ७ ॥
चलित आसन इन्द्र पहुंचे प्रश्न पूछे प्रभु कहे,
वदे सुरपति कार्य अनुचित त्रिजगपति ये वीर है।
इन्हें विद्याभ्यास कैसा ? ज्ञानधारी नाथ है,
सर्व वस्तु भाव जानत सकल इनके हाथ है ॥ ८ ॥
अल्पज्ञानी कोइ पंडित इन्हें कथा पाठन करे,
हुआ अविनय क्षमा मांगो इन्द्र यों मुख ऊचरे।
तदा पंडित त्यक्त आसन प्रभु चरण में शिर धरे,
उच्च आसन बैठि जिनवर शास्त्र सहु परगट करे ॥ ९ ॥

प्रवेशयितुं, विपुलधनव्ययेनातिप्रौढतरं महोत्सवं व्यतन्वाताम् । तथाहि–सकलस्वजनमण्डलं, नरपालगणं चामन्त्र्य, सम्भोज्य, मत्तमातङ्गैर्जात्याश्वव्रजैरथैर्महार्हमणिरत्नभासुरैरङ्गदैर्मौक्तिकहारैः, सद्रत्नजटितैरङ्गुलीयकैः, कुण्डलवलयप्रमुखैराभरणैः, पञ्चवर्णैश्चीनांशुकैश्च सत्कृत्य, पण्डितयोग्यदेयानि विविधवसनमण्डनश्रीफलप्रभृतीनि । लेखनशालीयसमस्तशिशुगणेभ्यो भक्षणाय पूगीफल–शृङ्गाटक–खर्जूर–सितोपल–वदाम–खारकप्रमुखमनःप्रीतिकराणि विविधानि खाद्यानि, रत्नमयस्वर्णरूप्यमयानि पुस्तकोपकरणानि, अतिसुन्दरमषीपात्रलेखनीपट्टिकाप्रभृतीनि, सरस्वतीपूजायै विविधरत्नजटितां सौवर्णीं विभूषां कौशेयशाटिकादींश्च, छात्रेभ्यो वितरणाय विविधवसनादीनि च सर्वाणि लात्वा, कुलवृद्धस्त्रीभिः सुभगाभिर्गीतं गायन्तीभिस्तीर्थवारिणा स्नपितं, वसनैरलङ्कारैरशेषैर्मण्डितवपुषं वर्द्धमानकुमारं, शिरसि धृतसितातपत्रं, चतुश्चामरैर्वीज्यमानं, चतुरङ्गचमूपरिवृतं, सततनानद्यमानचतुर्विधवादित्राऽऽरावमुखरीकृताऽऽशमनुगतसामन्तादिपरिजनैर्जुष्टं, पण्डिताधिगेहमानिन्याते ।

४१ विप्ररूपेण सुरेन्द्रकृतपृच्छा, भले प्रकरणस्य व्याख्या च—

उपाध्यायोऽपि राजपुत्राध्यापनोचितवसनविभूषणाऽऽसनादिना सज्जितो यावदभूत्, तावच्छक्रस्यासनं चलाचलमध्यजायत । तेन शक्रेन्द्रोऽवधिप्रयोगेण तत्कारणमवेदीत्, अवादीद्देवान्–अहो ! अत्याश्चर्यमजनि, यद् भगवान् अशेषविद्भूत्वापि लेखनशालामानीयवान् । नूनमेतत् सहकारतरौ तोरणबन्धनमिव, पीयूषस्य मधुरीकरणमिव, सरस्वत्याः पुस्तकदर्शनमिव, मातुरग्रे मातुलवर्णनमिव । अध्ययनमन्तरेणैव सर्वविदुषो विनापि मण्डनं सुमण्डितस्य द्रव्यं विनैव परमैश्वर्यसम्पन्नस्य वर्द्धमानस्य विद्याभ्यासकृते किलोपाध्यायसदनगमनमध्यजायत । सर्वमेतत् पिष्टपेषणमेव कुर्वाते भगवत्स्वरूपमजानन्तौ मातापितरौ । अतएव भगवदाशातना

यथा नो जायेत, तथा यतितव्यमित्यवधार्य, विप्ररूपेणेन्द्रेण प्रभोः समीपमागत्य, तमुपाध्यायमुच्चासनादधो निपात्य, भगवन्तमुच्चैस्तमसिंहासने समुपवेश्य, प्रागुपाध्यायमेव गूढतरान् कियतो विषयान् पप्रच्छ। परमज्ञत्वादेकस्याऽप्युत्तरं दातुं स नैव प्राभूत्। ततो विप्ररूपधरः शक्रः सकलजनसमक्षं तानेव विषयान् भगवन्तमप्राक्षीत्। भगवाँस्तु सर्वस्योत्तरमसंशयं चक्रिवान्। एतदत्यद्भुतं विलोकमानः स पाठकश्चमत्कृतो मनसि दध्यौ—यान् प्रागनेकधा भूयांसो विद्वांसः पृष्टा अपि नैव समाद्धिरे, तानपि सन्देहान् बालोऽयं निरास। तन्मन्ये ! साक्षाच्चतुर्मुखः सरस्वती वा पुंभावमधिगता कश्चित्सर्वज्ञजीवो वा, नो चेत्कथमेष शैशव एव सर्वं वेत्ति ?। शक्रेन्द्रः खलु भगवन्तं शब्दानामुत्पत्तिमपृच्छत्, तदा भगवान् संज्ञा, परिभाषा, विधिर्नियमः, प्रतिषेधोऽतिदेशोऽधिकारोऽनुवादो, विभाषा, निपात इति दशधा सूत्राणि तदर्थांश्च प्ररूपयामास। तत इन्द्रो वृत्त्यादिना विस्तार्य जैनेन्द्रव्याकरणमकरोत्।

पुनः सर्वजनसमक्षं विप्ररूपधरः सौधर्मेन्द्रः सर्वान् विस्मापयन्, भगवन्तं 'भले' इत्येतदर्थमप्राक्षीत्। भगवानप्युवाच—'१ बे लीटी' द्वौ जीवौ वर्त्तेते—एकः सिद्धो निष्कर्मा, द्वितीयो जीवः संसारी सकर्मा। २ 'भले' रे जीव ! सिद्धजीवराशिमवितुमिच्छ। ३ मींडूं' इति बिन्दुं व्यनक्ति, अयं हि संसारोऽतिवर्त्तुलाकारो गम्भीरतरः कूपोऽस्ति, अस्माच्छिद्रमार्गेण निर्गत्य, जीवोऽयं सिद्धराशिं मिलति। ४ 'बिलाडी' लोकप्रसिद्धा लोहमयी बिलाडी यथा कूपान्तः पतितवस्तूद्धरणाय प्रधानसाधनं वर्त्तते, तथाऽमुष्य जीवस्य संसाराम्बुधेर्निर्गन्तुं, देशविरतिसर्वविरती साधने स्तः। ५ 'ओगण चोटिओ माथे पोठियो' यच्चतुर्दशराजलोकस्याधोलोकमर्त्यलोकोर्ध्वलोकमयी भागत्रयी कृताऽस्ति। तत्रोर्ध्वलोकस्य शिखास्थानीभूता द्वादशयोजनविस्तीर्णा सिद्धशिलाऽस्ति। तत्र योजनस्य चतुर्विंशतितमांशभूतत्रयस्त्रिंशदधिकत्रिशद्धनुरुपरि द्वात्रिंशदङ्गुलप्रमाणलोकाकाशोपरि सिद्धजीवा निवसन्ति। ६ 'नमो चीटालो' रे जीव ! नूनममुष्मिन् संसारे क्षणिकेऽवास्तवे विषयोपभोगे मङ्क्ष्यसि चेदवश्यमधोगतिं लप्स्यसे। ७ 'ममो माडलो' एष संसारो जीवस्य शाश्वतं सदनं वर्त्तते, तत्राऽमुष्य मोहनामा मातुलो निवसति सपरिवारः। ८ 'ममा हाथ बे लाड्डवा' स मोहात्मको मातुलो जीवस्य करे कामभोगलक्षणौ मोदकौ दत्त्वा तथा प्रतारयति, यथा

तन्मोहितोऽयमस्मात्संसारात्कदाचिदपि नैव निर्गन्तुमर्हति । ९ 'सेरी राणी चोकडी ' यन्मोक्षसदनमारोढिणां प्राणिनामधिमार्गं चत्वारः कषाया निरुन्धन्ति, बहवो जीवास्तन्मार्गमधिरुह्यापि तैर्वेष्टिताः पश्चादेव परावर्त्तमाना नानायोनिषु भ्रमन्ति । ये चतुरास्ते कथमपि कषायानेतान् ज्ञानाऽसिना छित्वा तदाप्नुवन्ति । १० 'पाछी च्यार कुंडावली ' यदि त्वमेकादशं गुणस्थानात्मकं सोपानं तत्राऽऽरूढमपि जीवं बलादुत्तार्य, चतुर्गतिकेऽस्मिन् संसार एव निपातयन्ति ते कषायाः । ११ 'ढाउं ढाउं ढोकलो माथे बे छोकरो ' रे जीव ! त्वमस्मिन् संसारे धावं धावं भूयो भूयो गर्भागारे निपत्य, नानाविधशोकदुःखाग्निना दिवानिशं पापच्यमानः पुत्रकलत्रादिकृतां कदर्थनां सहिष्यसे । यदि धर्मसार्वभौमं मोक्षराजं दिदृक्षुः सिद्धनगरीं जिगमिषसि, तर्हि प्रथमं तदीयं सम्यक्त्वनामानं महामन्त्रिणं मिल, स एव त्वां तं सङ्गमयिष्यते । १२ 'हाथमां डांगडी ' यः सम्यक्त्वमहामन्त्री कीर्त्तितस्तत्सदनमपि गच्छतो जीवान्मार्गे कषायलुण्टाको लुण्टति तं हिंसितुं, धर्मकथारूपं यथाप्रवृत्तिकरणं विधायाऽपूर्वकरणस्य शुभपरिणामलक्षणमहायष्टिं पाणिना चाऽऽदाय, १३ 'आइडा दो भाइडा बडो भाइ कानो ' रागद्वेषलक्षणावुभौ भ्रातरौ निहत्य, तदन्यानपि सप्तप्रकृतिरूपाँश्चौरान् हत्वाऽपूर्वकरणरूपमहायष्ट्यैव मिथ्यात्वग्रन्थिमपि भङ्क्त्वा, तदग्रे गत्वा, रूपपञ्चकेन तत्र वर्त्तमानं महामन्त्रिणं द्रक्ष्यसि । तदनु तत्सेवायां वर्त्तमानं त्वां योग्यं मत्वा, १४ 'इंडि केवली ईंडि उकरु ' तस्य धर्मचक्रिण एकदेशविरतिनाम्नीं लघुपुत्रीं सर्वविरतिनाम्नीं ज्येष्ठपुत्रीञ्च त्वया परिणाययिष्यति । अनवरतमेकाग्रमनसा सम्यक्सम्यक्त्वमन्त्रिणं जोषिष्यसे चेत्, तर्ह्येव स प्रसत्स्यति नान्यथा । १५ 'आओ आओ आँकोडा बडे आँकड फाकोडा ' शङ्काऽऽकाङ्क्षाकषायरूपा महती शृङ्खलाऽस्ति, तां मनागपि स्प्रक्ष्यसि चेत्, स भृशं त्वयि शङ्कमानः खेत्स्यते ततस्त्वां हास्यति । १६ 'नीलि तोडवे कांढोला वडे ' तत्र विषयकषायस्वरूपे ममतामायारूपे वा द्वे विषवल्ल्यौ वर्त्तेते, शयाते च तत्र कामभोगलक्षणौ विलेशयौ । तयोश्चाऽजागरणेनाऽकोपनेन च सुप्रसीदन्नेव सम्यक्त्वमन्त्री ते मोक्षगमनाय सहयायिनमर्पयिष्यति । १७ 'एनवेन बे गाडी' समितिगुप्तिरूपरथोपरि त्वामुपावेश्य, १८ 'ओरखवाला बलद्दिया ' ज्ञानचारित्ररूपौ द्वौ वृषभौ तत्र योजयित्वा, १९ 'अमीया बे रासडी ' संवरनिर्जरारूपातिदृढतररज्जुभ्यां बद्ध्वा रथं सञ्चालयिष्यति । २० 'कक्को केवडो ' परन्तु केवलज्ञानरूपरक्षकपुरुषं विना कोऽपि तां सिद्धिनगरीमधिगन्तुं नैव कल्पते, स चाऽनाहारिकमार्गणया प्राप्यते । २१ 'खक्खो खाजलो ' अतस्त्वं चतुर्विधमाहारं जहाहि, रसनेन्द्रियलोलुपो माभूः । २२ 'गगा गोरी गाय वियाणी ' अनाहारिकमार्गणायास्तपःप्रमुखाया दर्शयिता च गुरुरेव भवति, अतएव महोपकारित्वाद् गुरोर्भक्तिः कर्त्तव्या, यो गुरुरमुमपारसंसारसागरं सुखेन सन्तरीतुं, बोधिबीजस्वरूपं महापोतमर्पयति,

स गुरुः सर्वथा सेवनीयस्तद् गौरवञ्च वितनितव्यमेव । २३ 'घघो घरट पलाण्यो जाय' रे जीव ! त्वमस्मिन् संसारे पुत्रकलत्रगृहपरिवारादिमयारम्भभारेण दिवानिशं खिद्यसे, स एष गुरुस्त्वां तद्भारान्मोचयिता । २४ 'ननीयो आमण दूमणो' स गुरुस्ते गृहभारोत्थदुःखापनोदनाय यत्पञ्चाणुव्रतं पञ्चमहाव्रतं वा स्वीकारयाञ्चकार, तत्क्लेशात्पश्चात्तापं माकृथाः । २५ 'चचा चीनी चोपडी' गुरुदत्तचारित्रपरिपालने सदैव समुत्सहस्व, जात्वपि प्रमादं मागाः । २६ 'छछो वदिया पोटला' छद्मस्थत्वेऽपि गुरुसमीपे तिष्ठञ्छ्रुतज्ञानचतुर्दशपूर्वविद्यानां पोट्टलिकां बधान, ज्ञानाऽभ्यसनं चाऽधिकं कुरुष्व । २७ 'जज्जो जेसल वाणीयो' रे जीव ! एतां शल्यत्रयीमुज्झ, येनाऽऽशु सुखमनुभवितासि । २८ 'झज्झो झारी सारीखो' रे जीव ! त्वमत्र लोके झारीतुल्यो भव, यथाऽयं स्तोकमुखो, विपुलोदरो भवति, तथा त्वमपि स्याः, अर्थात् परेषां दोषान्माऽवादीः, शृणुयाश्चेदुदरान्तरेव स्थापय । २९ 'ञञीयो खाडो चांदो' अर्धचन्द्राकारे तत्र सिद्धशिलासदने गमनाय, निरतिचारं चारित्रं परिपालयन्, सदैव सावधानमना एधि । ३० 'टट्टा पौली खांडेषु' गुरूणामग्रे यद्व्रतनियमादिकमगृह्णीथास्तदतिचारादिदूषितं मा कुर्याः । ३१ 'ठठ्ठा ठोवर गाडूओ' भग्नकलश इव माभूः, किन्तु गुरुदत्तां श्रौतीं शिक्षां हृदयकलशे यत्नेन संगृहाण । ३२ 'डड्डा डामर गांठे' बहिराडम्बरीभूयाऽन्तष्कर्मणां ग्रन्थिं मा बधान । ३३ 'ढड्ढा मुणो पूंछे' श्वपुच्छवद्वक्रतां मा भविष्टाः, किन्तु सदा सर्वत्र सरलेनैव भाव्यम् । ३४ 'णणो ताणो खेले' रे जीव ! दुर्जयेन बलीयसा मोहराजेन सत्रा युयुत्सुर्बुभूषसि चेज्ज्ञानदर्शनचारित्रत्रिपुटीलक्षणं कुन्तास्त्रं सदैव पाणौ धरस्व । ३५ 'तत्तो तावे तेले' जपतपःप्रमुखतपस्यां विदधत्कस्यचिदाक्रोशनगिरा सन्तप्ततैलवदुष्णतां मायासीः । ३६ 'थत्था थे रखवालो' यदि ते कदाचिन्मनोवशे नाऽऽगच्छेत्, तदपि कायवचसोः स्थैर्यं करणीयमेव । ३७ 'ददियो दीवटो' त्वमवश्यं सदैव जाज्वल्यमानेन सम्यग्दर्शनस्वरूपदीपकेन स्वकीयहृदयसदनं प्रकाशयन्, सर्वेभ्योऽनुकम्पां ददीथाः, इन्द्रियाणि च दमयेथाः । ३८ 'धद्धीयो धाणको' धनानामर्जनं परिग्रहसंचयकरणं वा मनसि माऽचीकमथा, केवलं धर्मधन एव मनो युङ्ग्धि । ३९ 'ननीयो पुलायरो' नास्तिकत्वेन भद्रत्वेन वा सम्यक्त्वरत्नं जात्वपि नैव गमयेथाः, तच्छैथिल्यं माकृथाः । ४० 'पप्पा पोली पाटे' यान्येतानि पापहेतुभूतानि पञ्चेन्द्रियाणि तान्याश्रवद्वाराणि महानर्थकराणि मत्वा, संवररूपकपाटदानेन पिहितान्येव कुरुष्व, बहिश्चराणि माकृथाः, नो चेदष्टादशपापस्थानानि त्वदन्तः प्रविश्य, महानर्थमुत्पादयिष्यन्ति । ४१ 'फप्फा फगडे जोडे' अविदुषा, दुराचारिणा, दुर्व्यसनिना, मिथ्यात्विना, पापिना, त्रा सह मा सङ्गच्छस्व । ४२ 'बब्बा मांहे चांदणुं' हृदयभवने बोधिबीजमधिकं

चिनु, यतो हि बीजे प्रवृद्धे, हृदयगगने ज्ञानेन्दुरुदेष्यति । ४३ 'अब्भो भारी भेंसको' यथा पशुः सचित्ताऽचित्ततृणभक्षणेन कुक्षिं पुष्णाति, तथा द्वाविंशत्यभक्ष्याणां द्वात्रिंशदनन्तकायिककन्दमूलादीनामशनेन महोदरो माभूः, कदापि च रोगादिकैः प्रवर्त्तितोऽपि माधमः । सुश्रावकोऽर्हन्नक इव बहुधा चालितोऽपि माऽचालीः, परैर्देवादिभिर्वा क्लेशितोऽपि मनागपि माखेदीः, सदैव मनो दार्ढ्यं नयेथाः, व्रतनियमादिनाऽहंयुर्वा माभूः । अथवा 'भभीयो भाटचूलेतरो' यथा महानसीया चुल्हिका धगद्धगिति प्रज्वलति, तथा त्वमसह्यमर्मवेधिनापि यस्य कस्याऽऽक्रोशवचसाऽन्तरुद्भूतक्रोधाग्निना धगद्धगिति माज्वालीः, अर्थात् क्रोधं जह्याः । ४४ 'ममियो मोचक' अष्टौ कर्माणि त्यक्त्वा मोक्षमार्गं भजस्व । ४५ 'ययीयो जाडो पेटको' अस्मिन् संसारे कृतान्तः खलु महोदरो वर्वर्त्ति, सकलं जगदयं ग्रसति, तदप्येतस्योदरपूर्त्तिर्नो जायते, अतस्त्वं तस्माद्बिभीथाः, कदापि धर्मकृत्ये प्रमादं माकृथाः । ४६ 'रायरो कटारमल्ल' इह हि रागद्वेषरूपौ द्वौ महामल्लौ वर्त्तेते, तयो रागश्च द्विविधोऽस्ति—एकः प्रशस्तः, अपरोऽप्रशस्तः । उभावपीमौ जित्वा, लघुकर्मिको भूत्वा, केवलज्ञानमुपार्जिष्यसि चेत्, अवश्यमाशु शाश्वतं सुखमनुभविष्यसि । ४७ 'लल्ला घोडो ला' अत्र संसारे महीयानेष लोभलक्षणस्तुरङ्गमः सातत्येन विचरति तत्राऽऽरूढं पुमांसं भृशं खुरप्रहारैर्जर्जरयति, अतस्त्वं तदन्तिकमव्रजन् विदूरमेव सावधानतया तिष्ठ । ४८ 'वव्वा विंगण वासदे' सन्ति चाऽत्र कामादिषट्का महाचौरास्तान् हृदयसदने मा वासयेः, वासयितासि चेदवश्यमेते सकलसप्यात्मोज्ज्वलगुणात्मकं धनं चोरयिष्यन्ति । ४९ 'शशा कोठा मरडीया' यथा शशकः स्वकर्णाभ्यां छन्नो भूत्वा, तुन्दपरिमृजो जायते, तथा कुमतादिनाऽऽवृतो भवन् धर्मेऽलसो माजनिष्ठाः, नो चेत्तमपि पापीयानिव दुर्गतिं यास्यति । अवश्यमेकदाऽयं यमराड् गलग्राहं शशकमाखेटीव त्वां हनिष्यत्येव, अतो धर्मोद्यमी भवतु भवान् । ५० 'षषा खूणे फाडिया' रे जीव ! सत्यमेव वक्तव्यम्, अलीकं तु प्राणात्ययेऽपि मावोचथाः । यतो मृषावादिनां माहात्म्यं सर्वत्र हीयते, वचोऽपि तेषां लोकेषु श्रद्धेयं नो भवितुमर्हति । यथा घटे क्वचित्किञ्चिदपि रन्ध्रे समुत्पन्ने तदन्तःस्थं सकलं वारि क्रमशो बहिर्याति, झोलिकाकोत्थलकादौ क्वचिदेकस्मिन्नपि कोणे स्फुटिते तदन्तः स्थापितं सर्वं यथा क्रमशो निर्गच्छति, तथा मिथ्यावादिनामपि समस्ता व्रतनियमादयो गुणाः क्रमशो निर्गच्छन्त्येव । रहसि कृतमपि पापमायतौ सर्वेषामुदितं सत्फलत्येव, अतस्तदपि त्रिकरणैर्वर्जनीयमेव । ५१ 'सारसे दन्ती लोक' चेदमुना मोहराजेन साकं योधनं चिकीर्षुरसि, तर्हि दन्तावल इव साहसं बिभृयाः, अर्थात्प्रवर्त्तमाने योधने सर्वतः पुरःसरन्मातङ्गः परेषां पुरे कपाटं कोट्टं यथा भनक्ति, तथा त्वमपि मोहराजस्य मिथ्यात्वलक्षणं दुर्गं भङ्ग्धि । ५२

'हा होलो हरिणे कलो' एष मोहपारधिः पाशं वितत्य जीवमृगं गृह्णाति, इति हेतोस्तदीयां विस्तृतां मायालक्षणां वागुरां विलोक्याऽतिदूरं पलायस्व। नो चेन्मृगधुना विततवागुरायां पतितकुरङ्ग इव त्वमपि मोहपाशनिपतितो भूत्वा, संसारबन्धनाज्जात्वपि नैव छुटिष्यसि। ५३ 'लाये लच्छी दो पणिहार' चेन्मोक्षाभिलाषं बिभ्रदिदं संसारबन्धनं छेत्स्यसि, तर्ह्येका द्रव्यलक्ष्मीरपरा भावलक्ष्मीश्च ते जलमाहरिष्यतः। इदमत्र रहस्यम्—यत्त्वमनुत्तरविमाने देवत्वेनोत्पत्स्यसे, मर्त्ये वा चक्रवर्त्तित्वेन जनिष्यसे, तर्हि भरतादिवद् द्रव्यलक्ष्मीफलमुपभुज्य, कैवल्यमासाद्य भावलक्ष्मीमपि मोक्ष्यसे। ५४ 'खडिया खाटक मोर पाले बांध्या बे चोर' अस्मिन् संसारे षट्कायिकजीवानां ये ज्ञानादयो गुणा वर्त्तन्ते, तेषां विलुण्टनाय, द्वौ रागद्वेषलक्षणाववसरं प्रतीक्षमाणौ लुण्टाकौ तिष्ठतस्तावुभौ गृहीत्वा, तथा समुन्मूलय, यथा कर्ममहीरुहः पुनर्नो प्ररोहेत्। समूलमेतौ समुच्छिद्य, चत्वारि घनघातिकर्माण्यपि पातयेथाः, यथाऽऽशु निर्बाधं कैवल्यश्रिया जुष्यमाणः, प्रान्ते समाधिना शैलेशीकरणेन शुक्लध्यानस्य तुरीयपादे समारूढः, कार्मणशरीरं विहाय, विधूतक्रियस्त्वं सिद्धजीवानां राशौ मेलितासि। ५५ 'मंगलमहाश्री दे विद्या परमेश्वरी' ततो मङ्गलमयीं भावलक्ष्मीमधिगन्तासि। अर्थादनन्तज्ञानदर्शनचारित्रवीर्यो भवितासि। अगुरुलघुः, अरूपी, परिपूर्णः, अविनाशी च स्वतो भविष्यसि। ईदृशीं मङ्गलमयीं लक्ष्मीमधिगत्य साद्यनन्तभागं यावदजरामरीभूय, शाश्वतं परमानन्दस्वरूपेण स्थातासि, इति भले प्रकरणम्।

लोकाश्चाष्टवर्षीयसोऽपि महावीरस्येदृशीं विद्वत्तामालोक्य विस्मिता अभूवन्-अहो! सर्वविद्भूत्वापि मनागप्यहङ्कृतिं नो दधाति। इत्थं भगवन्तं प्रशंसतो लोकानाचष्ट शक्रेन्द्रः—भो भो लोकाः! यूयमेनं प्राकृतं बालं मा विदाङ्कुरुत, किन्तु त्रिलोक्या अधिपतिमवगच्छत। अयं खलु सर्वविरसर्वदर्शी भवन्नपि सागरवन्महागम्भीरो वर्वर्त्ति, परमपृष्टः कमपि किञ्चिदपि नैव भाषते, न वाऽऽडम्बरो विद्यते। ये महीयांसो भवन्ति, तेऽवश्यं प्रावृट्कालीना घनपटला इव स्तोकमप्यात्मश्लाघादिकं नैव कुर्वन्ति, क्रियामेव दर्शयन्ति। बाह्याडम्बरोऽप्यसारस्यैव दृश्यते—असारत्वात्कांस्ये यादृग्ध्वनिर्जायते तादृगसारत्वात्स्वर्णे जातुचिन्नैव जायते। इत्थं भगवतो वर्द्धमानस्य स्तुतिं विधाय, शक्रेन्द्रः स्वस्थानं प्राप। तत्रावसरे स उपाध्यायो वीरविभोश्चरणयोः

पतिस्त्वा जजल्प—भगवन् ! त्वं खलु वाङ्मयाऽपारसागरपारदृश्वा वर्त्तसे। अहमपूर्णकलशकल्पोऽस्मि । अतस्त्वमेव गुरुरसि, नाहमित्थं ब्रुवते पाठकाय घनं दानमदात्प्रभुः । ततो मातापितृप्रमुखाः सर्वे परिजनाः प्रमुदिता भवन्तः प्रभुं प्रागवत्करीन्द्रोपरि समुपावेश्य स्वभवनमनैषुः ।

४२ भगवदुद्वाहस्तत्परिवारकीर्त्तनञ्च—

अथैवं शैशवेन समुज्झिते तारुण्येन समाश्रितं वर्द्धमानं मातापितृभ्यां शुभमुहूर्त्ते, समरवीरभूपस्य यशोदा नाम्नी तदनुरूपगुणशीलाकृतिः पुत्री महामहेन पर्यणीयत । तया सह सुखमनुभवतो भगवतः पुत्री जज्ञे । ताञ्च प्रवरनरपतेः पुत्राय जमालये ददिवान् । साऽपि शेषवतीनाम्नीं सुतां सुषुवे । इत्थं भगवतो गार्हस्थ्येऽष्टाविंशतिवर्षाणि व्यतीयुः । भगवतः पैत्रिकं गोत्रं काश्यपमासीत् । सिद्धार्थः, श्रेयांसो, यशस्वीति पितुस्त्रीणि नामानि प्रख्यातिमयुः । माता च वशिष्ठगोत्रोत्पन्ना त्रिशला, विदेहदिन्ना, प्रीतिकारिणीति नामत्रयं दधानाऽऽसीत् । पितृव्यश्च सुपार्श्वनामाऽभूत् । ज्यायान् बन्धुरासीन्नन्दिवर्धनः । सुदर्शनाऽभिधाना स्वसा । कौण्डिन्यगोत्रजा यशोदा पत्नी । पुत्री च काश्यपगोत्रा प्रियदर्शनाऽक्षोद्या इति द्वे नाम्नी बिभ्राणा । दौहित्र्याश्च काश्यपगोत्रं शेषवती यशस्वीति द्वे नाम्नी जज्ञाते ।

४३ दीक्षोद्यतस्यापि वीरस्य भ्रात्रनुरोधाद् गृहस्थितिः—

अथ सकलकलाकुशलः, सत्प्रतिज्ञः, निःसीमसौन्दर्यवान्, विनयवान्, अतिसरलः, कान्तिमान्, त्रिभुवनप्रख्यातिमान्, सकलमहीतलप्रख्यातसिद्धार्थराजसूनुः, सुधामयूख इव त्रिलोकी विद्योतकः, कुलकमलदिवाकरो, वज्रऋषभनाराचसंहननः, समचतुरस्रसंस्थानः, गृहवासे मृदुतरगात्रः, दीक्षानन्तरं तु परीषहसहनशीलतयाऽतिकाठिनः, त्रैशलेयः, श्रमणो भगवान्, महावीरोऽष्टाविंशतितमे हायने मातापित्रोर्देवत्वमुपे-

१ भगवन्मातापित्रोरावश्यकसूत्रटीकायां तुरीयदेवलोकगमनमभिहितम् । आचाराङ्ग-

युषोः प्रव्रजितुमना ज्यायांसं नन्दिवर्धनं बान्धवमेवमाख्यातवान्—बन्धो ! यावन्मे मातापितरौ जीवेतां तावन्मया नो प्रव्रजितव्यमित्यहं पुरा प्रत्यजानाम् । तौ चेदानीं व्युपरतौ, अतएव साम्प्रतं प्रव्रजितुं मामनुजानीहि । नन्दिवर्द्धनोऽवदत्—भ्रातः ! किमेवं व्रणोपरि क्षारं क्षिपसि ?, यदधुना मातापित्रोर्वियोग एव मां महास्फोटप्रायो भृशं बाधते, तदुपरि त्वद्वियोगस्तु नूनं क्षारक्षेप एव भविता । तयोरपि शोकोऽधुना नाऽगात्, तर्हि कथमनुजानामि त्वां प्रव्रजितुम् ? । भगवानुवाच—बान्धव ! मातापितृभ्रातृपुत्रकलत्रादयस्तु जीवानामनन्तवारमभूवन्, भवितारश्च । सर्वांश्चैतान् विमुच्यैक एव जीव आयाति, निर्याति, एक एव च कृतं शुभाऽशुभङ्कर्म भुङ्क्ते, अतः कोऽपि कस्याप्यात्मीयो नास्ति, तर्हि कं कं शोचानि, प्रतिबध्नानि वा केन केन सत्रा । नन्दिवर्द्धनोऽजल्पत्—सर्वमित्थमेवाऽस्तीति विदन्तमपि मामिदानीं मोहनीयकर्मप्राबल्यमधिकमधीरयाति, ततस्तावकं वियोगं सहितुं नैवाऽर्हामि । अत इदानीं दीक्षाऽऽदानं विहाय, वर्षद्वयमपि गृहे स्थीयताम् । तच्छ्रुत्वा, पुरुषोत्तमत्वात्परदुःखाऽसहिष्णुत्वाच्च भगवान् नन्दिवर्द्धनाऽऽग्रहमुररीचकार । जल्पितवांश्चैवम्—बन्धो ! भवदनुरोधाद्धायनद्वयं प्रासुकाऽशनपानादिनैव स्थास्यामि । अतो मदर्थं कमप्यारम्भं माकार्षीरिति सहर्षं नन्दिवर्द्धनोऽपि मेने । तदनु वर्षद्वयं वस्त्राभरणादिकं बिभ्रदपि प्रासुकैषणीयमाहरन्, अचित्तं वारि पिबन् भगवान् गृहवासमध्यवास । तद्दिनादेवाचित्तेनापि जलेन सर्वाङ्गं न सस्नौ, पर्यपालयच्च ततःप्रभृति ब्रह्मचर्यम् । दीक्षाकाले तु सचित्तवारिणैव स्नातवान् भगवान् । अथैवं प्रभुं संसारविमुखं विलोकमाना, असौ चतुर्दशस्वप्नैर्जातो भविष्यति चक्रवर्तीति धिया भगवतः सेवायै समायाताः श्रेणिकचण्डप्रद्योतन-

---

सूत्रटीकायान्तु निरशनेनाऽच्युतदेवलोके गमनं प्रत्यपादि । तयोर्विरोधपरिहाराय चतुर्धात्मके-देवनिकायेषु तुरीयं वैमानिकदेवनिकायमित्यत्राऽऽवश्यकोक्तिस्तात्पर्यमाख्यातव्यम् ।

प्रमुखा राजपुत्रा, नाऽसौ भविता सार्वभौमः, किन्तु तीर्थप्रवर्त्तक इति निश्चित्य, स्वस्वस्थानं जग्मुः ।

४४ लोकान्तिकदेवकृतप्रतिबोधः—

इत्थं गृहे तिष्ठतो भगवतो वत्सरमेकं व्यत्यैत् । यदा द्वितीयो हायनः प्रावर्त्तत, तदा ब्रह्मदेवलोकवासिनः सारस्वता १, आदित्या २, वह्नयो ३, वरुणा ४, गर्दतोयाः ५, त्रुटिता ६, अव्याबाधा ७, आग्नेया ८, अरिष्टाः ९, एते नवलोकान्तिका देवा आगत्य, भगवन्तमनवरतं प्रणमन्त इष्टैर्मधुरैर्वचोभिः स्तुवन्तः समेधयन्तः—भगवन् ! विजयस्व, मङ्गलसदन ! भद्रमस्तु ते, जिनेशो भव, सकलजगज्जनहितं निःश्रेयस्करं धर्मतीर्थं प्रवर्त्तयेति प्रतिबोधयामासुः । यद्यपि प्रभुः स्वत एव प्रतिबुद्धस्तं प्रतिबोधकरणं पिष्टपेषणमेवाऽभूत्, तथापि लोकान्तिकदेवानां शाश्वती मर्यादा वर्वर्त्ति खल्वेषा, यथा दीक्षावेलातः प्रागेव स्वयंबुद्धमपि प्रभुं प्रतिबोधन्ति ।

४५ वार्षिकदानवर्णनं तन्मानञ्च—

श्रमणस्य भगवतो महावीरस्य गार्हस्थ्येप्यनुत्तरमवधिज्ञानमवधिदर्शनं किलाऽऽसीत्, तेन च दीक्षाकालमवगत्य, विपुलधनकनकरत्नमणिमौक्तिकशङ्खप्रवालादिसर्वं राज्याद्युपभोगक्षमं लोष्ठवदत्याक्षीत् । अस्थिरत्वात्सर्वमेतद् गर्हितमिति व्याहरन्, गुप्तमगुप्तञ्च सकलं साराऽसारभूतं धनमस्मा इदं देयमेतस्मा इदमिति विभागशो गोत्रिकेभ्यो याचकेभ्यश्च समागतेभ्यः प्रदाय, दीक्षादिनादवशिष्ट प्राग् वत्सरे वार्षिकं दानं प्रारब्धवान् प्रभुः । तच्च प्रत्यहं सूर्योदयाद् भोजनवेलावधिके सपादप्रहरात्मके काले सौवर्णिकानामष्टलक्षाधिकां कोटिं दातुं लग्नः । ' येन यावन्मात्रं प्रयाच्येत तस्मै तत्तावदेव दास्यामि' इत्थं सर्वत्र समुद्घोषमकार-

यच्च । सर्वमेतच्छक्राऽऽदेशाद्देवाः पिपुरति स्म । एवं वितरणशाली भगवान् सांवत्सरिके दाने सौवर्णिकानामञ्जत्रयीमष्टाशीतिकोटिमशीतिलक्षञ्च प्रादित । तच्च प्रत्येकमशीतिरत्तिकामात्रं तीर्थकृतस्तन्मातापित्रोश्च नाम्नाङ्कितमासीत् । ईदृश द्वादशशतसौवर्णिकैरेको मणो भवति । इत्थमुक्तसंख्यापरिमितैः सौवर्णिकैर्मणानां नवसहस्राण्यभूवन् । साम्प्रतन्त्वेकस्मिन्ननसि चत्वारिंशन्मणा निक्षिप्यन्ते, तर्हि नवसहस्रमणानां सपादशतद्वयशकटान्यभवन् । तथा चोत्प्रेक्षितवन्तः कवयः—

यदीत्थं भगवद्वारिवाहसुवृष्टदानवारिपूरनिमग्नदारिद्र्यदावानलास्ते-मार्गणगणाः सज्जितगजवाजिराजिवसनमण्डनैस्तत्कालवैलक्षण्यमापन्ना दुर्लक्ष्यतां नीता गृहमागताः शपथादिना निजस्त्रियमात्मानं प्रत्यापयामासुः । क्वापि कोऽपि दारिद्र्यदुर्दशयोर्नामापि नाऽश्रृणोत् । विहाय च लोकान् भगवदम्बुदवृष्टदानजलधिनिमज्जनभिया मार्गणतापि धानुष्कानां शरेष्वेव गत्वा न्यवसत् । भगवतः पाणितस्तद्दानं भव्याः सदाचारिजना एव लेभिरे, न केचिदभव्याः । सर्वमेतच्छक्रेन्द्राऽऽदिष्टवैश्रमणनिदेशवर्त्तिनः सुरा दैव्या शक्त्याऽष्टसमयादेव समुत्पाद्य, प्रभोः सद्मानि पूरयन्ति स्म । प्रभोः करकमले च सौधर्मेन्द्रस्तां शक्तिमदात्—ययेत्थमेतावतो दीनारान् प्रतिघस्रमर्थिसात्कुर्वाणो भगवान् मनागपि नैव शश्राम । ईशानेन्द्रस्तु सद्रत्नजटितां सौवर्णीं यष्टिं विदधत्, चतुष्षष्टीन्द्रान् सामान्यानन्यांश्च देवान् दानलिप्सून् निवार्य, भगवद्दानार्थिनां नृणां यस्य ललाटे यावती लब्धिरासीत्, तेनार्थिना तावन्मात्रमेव मार्गयामास । चमरेन्द्रबलीन्द्रौ च भगवन्मुष्टौ समायातमधिकं देयं पश्चादादद्याताम्, अल्पश्चेत् पिपृयाताम् । भुवनपतयो देवा भारतवासिनो शेषानर्थिजनानन्वेषमन्वेषमानयन्ति स्म । वाणव्यन्तरास्तु तान्मनुजानर्थिनः स्वस्वस्थानं नयेयुः । ज्योतिष्कलेखा भगवद्दानाऽऽदानाय विद्याधरानाकारयेयुः । एतस्मिन्नवसरे तीर्थकृतां मातापितरौ महीयसीं शालात्रयीं निर्मि-

मायाताम् । प्रभोर्वीरस्य मातापित्रोर्विपन्नत्वात् तद्भ्रातानन्दिवर्द्धन एव सर्वमचीकरत् । तत्र प्रथमशालायां भारतीयमनुजेभ्योऽन्नपानादिकं प्रदद्दीत, द्वितीयस्यां वासांसि, तृतीयस्यामाभूषणानि प्रदद्यात् । भगवतः करकमलात्तद्दादाने कस्य किं फलं जायते ? तदाह—चतुष्षष्टीन्द्रा गृहीतभगवद्दानप्रभावेण द्वादशवर्षाणि मिथो न क्लिश्येयुः । नरेन्द्रश्चक्रवर्त्ती वा तीर्थङ्करदानं गृहीत्वा तान् दीनारान् स्वकोशे स्थापयेच्चेद्‌द्वादशवर्षाणि कोशः परिपूर्णोऽवतिष्ठेत् । श्रेष्ठिनः सेनापतिप्रमुखाश्च भगवद्धस्तप्रदत्तप्रदानमादद्युश्चेद् द्वादशसमाः कीर्त्या महत्या नन्देयुः । रोगिणां रोगाश्च नश्येयुः, द्वादशसमाश्चाग्रे पुनः कोऽपि रोगो नैवोत्पद्येत ।

४६ दीक्षामहोत्सवस्तद्ग्रहणञ्च—

अथ भगवान् नन्दिवर्द्धनमवोचत—क्षितिपते ! परिपूर्णस्तावकोऽयमप्यवधिः, तस्माल्लामि दीक्षाम् । इत्थं भगवद्वाक्यमाकर्ण्य, नन्दिवर्द्धनो राजा भगवद्दीक्षामहामहं विधित्सुः सकलं क्षत्रियकुण्डपुरं गगनचुम्बनविविधनिकेतनप्रतिवीथिसकलापणराजपथमण्डनकरणादिना सुरपुरानुकारिकारितवान् । ततो नन्दिवर्द्धनः शक्रादयश्च कनकमयान् १, रूप्यमयान् २, मणिमयान् ३, कनकरूप्यमयान् ४, कनकमणिमयान् ५, रूप्यमणिमयान् ६, कनकरूप्यमणिमयान् ७, मृण्मयान् ८, इत्यष्टजातीयान् प्रत्येकमष्टाधिकसहस्रसंख्यामितान् अभिषेककलशाँस्तदितरामपि तदुपयोगिनीं सकलसामग्रीं समपीपदन् । ततोऽच्युतेन्द्राद्यैर्भगवत्यभिषिक्ते सौरिकास्ते कलशा दिव्यशक्त्या नृपकारितकलशेषु प्रविविशुस्तेन ते कुम्भा अधिकं शुशुभिरे । ततो नन्दिराजः प्रभुं प्राङ्मुखमुपावेश्य, निर्जराऽऽनीतक्षीरोदनीरैः सकलतीर्थमृद्भिः समस्तकाषायैश्च भगवन्तमभ्यषिचत । सर्वे शक्रादयस्तदा भृङ्गारदर्पणादिपाणयः पुरतस्तस्थिवांसः । कुर्वाणाश्च जयध्वनिमुच्चैरित्थं सुरेन्द्रै राज्ञा चाभिषिक्तः, सुस्नातो गन्धकाषायया रूक्षीकृताङ्गः, सुरचन्दनानुलिप्तोऽधिग्रीवं परिधा-

पितपारिजातसुमदामको, महावस्त्रमुकुटमुक्ताहारकुण्डलग्रैवेयककेयूरोर्मिकादिसौवर्णिकमहार्हसद्रत्नजटिताऽशेषप्रसाधनप्रसाधितो, नानाजातीयविशिष्टगरिष्ठरत्नजटितकनकाचलोज्ज्वललक्षार्घसिताम्बराऽऽवृतः, प्रभुर्नन्दिराजनिर्मापितायां, पञ्चाशद्धनुरायतायां, पञ्चविंशद्धनुर्विस्तृतायां, षट्त्रिंशद्धनुरुन्नतायां, शतस्तम्भशोभितायां, मणिकनकविचित्रितायां, दैविकमहिम्नाऽनुप्रविष्टसुरकृततादृशचन्द्रप्रभाऽभिधायां, शिविकायां धृतसिंहासनोपरि प्राङ्मुखो निषसाद। प्रभोर्दक्षिणे पटशाटकमादाय, कुलमहत्तरिका स्त्री, वामभागे च प्रभोरुपमाता दीक्षोपकरणमाददाना न्यषीदताम्। पृष्ठे चैका रूपतारुण्यपूर्णा, कृतषोडशशृङ्गारा, स्फुरत्ताराकारा, सितातपत्रहस्ता, ईशानकोणे चैका धृतपाणिपूर्णकुम्भा भद्रासने न्यषीदत्। अग्निकोणे चैका मणिमयतालव्यजनहस्ता भद्रासने तिष्ठेत्। तदनु भगवान् सुव्रताख्ये दिने विजयमुहूर्त्ते प्रशस्यतमवेलायां पूर्वदिग्गामिन्यां छायायामभिनिर्वृतायाञ्च पाश्चात्यपौरुष्यां ( तुरीयप्रहरे ) मार्गशीर्षकृष्णदशम्यां प्रव्रज्यायै प्रतस्थिवान्। तदवसरे नन्दिराजनिदेशात्सहस्रं पुरुषास्तां शिबिकां यावद् वोढुमुत्तस्थुः, तावच्छक्रो दाक्षिणात्योर्ध्वबाहामीशानेन्द्र औदीचीमुपरितनीं बाहां, चमरेन्द्रो याम्यामधस्तनीं बाहां, बलीन्द्र औत्तराहां नीचैस्तनीं बाहां, शेषाश्च भवनपतिव्यन्तरज्योतिष्कवैमानिकेन्द्रा ललत्कनकमणिगणोज्ज्वलकुण्डलाद्याभूषणकिरणनिकरदेदीप्यमानाः पञ्चवर्णानि कुसुमानि विकिरन्तस्ताडयन्तश्चोच्चैर्दुन्दुभीन् समुत्पाटयामासुस्तां शिबिकाम्। ततः शक्रेशानौ तां बाहां विहाय, प्रभोश्चामराणि वीजयामासतुः। इत्थमादौ भगवच्छिबिकां भव्या नरास्ततो देवेन्द्रा असुरेन्द्रा नागेन्द्राश्चावहन्त। इतरे च सर्वे देवा व्योम्नि वर्त्तमानाः प्रमोदमानाः केचन ननृतुः, केचिद्वाद्यानि वादयामासुः, अपरे च जयध्वनिमातेनिरे। तत्राऽतसीकरवीरचम्पकादिकुसुमैरुपवनमिव, कल्पतरुपुष्पैर्नन्दनवनमिव, सुराऽसुरगणनरनिकरैरानगरं भगवद्दीक्षास्थाना-

वधि नभो देवैर्देवीभिश्च व्याकुलमशोभिष्ट । अनारतसन्ताड्यमानभेरी मृदङ्गदुन्दुभिशङ्खादिनानाविधवाद्यनिनादो दिवं भुवञ्चातितरां व्यानशे।

तन्नादं श्रावं श्रावं, त्याजं त्याजश्चात्मडिम्भानपि, समाव्रजन्त्यः सीमन्तिन्यः स्वीयैर्विविधचेष्टनैर्लोकान् विस्मापयामासुः । भगवद्विलोकने लौल्यं वहन्त्यः कियत्यः कज्जलं कमनीयतमे कपोलतले, नयनयोश्च कस्तूरीविलेपनमकुर्वत । कियत्यश्चपला अबला ग्रीवायां क्वणन्मञ्जीरं, पादयोश्च ग्रीवाभूषां पर्यदधत । काचित्किङ्किणीमुरसि, मुक्ताहारञ्च कटितटे परिहितवती । कापि गोशीर्षपङ्केन चरणौ, लाक्षारसेन गात्राणि रञ्जितवती । कियती च स्नानं विदधती विभ्रमातुरार्धमेव सस्नौ । काश्चित्स्तनं पिबतः शिशूनपि विहाय त्वरया चेलुः । काचिद्विस्रस्तवसना रसनामेव करकमले दधाना चचाल । काचनतरुणी रुदन्तं स्तनन्धयमपि हित्वा, स्थूलौतुमेव कट्यामाधाय, त्वरया व्रजन्ती कस्य चित्ते हास्यावकाशं ना व्यधत्त । काचनमहिला भगवन्मुखपूर्णपीयूषमयूखविलोकनैकलोला विलसत्कपोला स्रस्तानि निपतितानि मणिमयानि विभूषणान्यपि नाऽजानात् । काश्चिदबलाः करकमलतलाभ्यां मौक्तिकव्रजानि किरन्ति स्म । काश्चिदबला मधुरं मङ्गलगीतानि गायन्ति स्म । प्रमुदितास्ताः कियत्यो नरीनृत्यन्ते स्म ।

अथ प्रभोः पुरतः प्रागूरत्नमयानि स्वस्तिक १—श्रीवत्स २—नन्दावर्त्त ३—वर्द्धमानक ४—भद्रासन ५—कलश ६—मत्स्ययुग्म ७—दर्पण ८—लक्षणानीत्यष्टौ मङ्गलानि चेलुः । ततः पूर्णकलशाः, भृङ्गाराः, चामराणि चेलुः । ततोऽष्टशतानि सुसज्जिता महागजास्तुरगाश्चैतावन्तश्च घण्टाध्वजमण्डिताः, शस्त्रास्त्रपरिपूर्णा रथास्तावन्तो वरपुरुषा निर्ययुः । तदनु चतुरङ्गाचमूश्चचाल । ततः सहस्रलघुध्वजपरिष्कृतः सहस्रयोजनोच्छ्रितो महेन्द्रध्वजो निरगच्छत् । ततः कृपाणधराः, कुन्तधराः, धनुर्धराः, फलकधराः, विदूषकाः, नर्त्तकाः, नादकाः, गायकाः, जयजयारावं विस्तृणन्तः

प्रतस्थिरे । ततो मोदमेदुराः, सर्वाभरणवसनमण्डितात्मानो, महौजसः, सामन्तप्रमुखा राजन्याः, माण्डलिकाः, कौटुम्बिकाः, महेभ्यपुङ्गवाः, सार्थवाहाः, देवा, देव्यश्च प्रभोः पुरतश्चेलुः । तदनु स्वर्गमर्त्यपातालवासिन्या परिषदा प्रस्थितम् । विभोः पृष्ठानुगश्चमूगणपरिवृतश्छत्रचामरादिराजचिह्नपरिष्कृतो नन्दिवर्द्धनभूपालः प्रस्थितवान् । तत्राऽध्वनि सर्वतः प्राक् शङ्खचक्रधराः, गलावलम्बितस्वर्णमयलाङ्गलधारिणः पुरुषाः, प्रियोक्तिकुशलाः, मागधाः, महत्तरादिपरिजनाश्च भगवन्तमनुजग्मुः । तदवसरे कुलवृद्धाः शक्रादयश्चैवं तुष्टुवुर्भगवन्तम्—

भगवन् ! विजयस्व, समृद्धिमान्भव, निरवद्यज्ञानदर्शनचारित्रैरजय्यानीन्द्रियाणि वशय, श्रामण्यप्राकर्ष्ये तिष्ठ, रागद्वेषौ महारातौ च जहि, बाह्याभ्यन्तरतपसा महासिना धृतिमसीमां लभस्व, शुक्लध्यानेनाऽष्टौ कर्मारीन् समुन्मूलय, यथा प्रतिमल्लं विजित्य कश्चिन्मल्लो विजयध्वजं गृह्णाति, तथाऽमुष्यां त्रिलोक्यां कर्मशत्रूञ्जित्वा विजयवैजयन्तीं गृहाण, प्राप्नुहि चानुपमं वितिमिरं समुज्ज्वलं वरकेवलज्ञानम्, निहत्य च परीषहपृतनां, परमं मोक्षपदमधिगच्छ । भोः क्षत्रियकुलवृषभ ! जय जय, जगदेकवीरो भवान्, बहुदिवसान्, बहुपक्षान्, बहुमासान्, बहुऋतून्, अयनानि, वर्षाणि च परीषहोपसर्गेभ्यो भीतिमलभमानः, क्षान्त्या वैद्युतसैंहिकादिकं भयं सहताम् । इत्थं शुभवचसा वर्ध्यमानः, सुरासुरनरनारीगणनयनसहस्रैः पेपीयमानः, श्रेणीकृतलोकानां वदनसहस्रैस्तोष्टूय्यमानोऽमीषां मानसमालासहस्रैश्चिरञ्जीवतु चिरं नन्दत्विति गिरा वरीवृध्यमानो, मनोरथसहस्रैः परीस्पृश्यमानोऽहममुष्य सेवकः स्यां चेद्वरमिति चिन्त्यमानो, रूपेण, कान्त्या, गुणैश्च स्वामितया किलेष्यमाणो, लोकानामङ्गुलिसहस्रैर्दरीदृश्यमानः, सर्वेषां नमनाञ्जलीन् गृह्णन्, संत्यजँश्च सौधपंक्तिसहस्राणि, वीणातलतालविविधवाद्यनृत्यगीतमधुरालापेन जयध्वनिमिश्रितजनताकलरवेण च प्रतिबुध्यमानः, सर्वर्द्ध्या समुल्लासितः,

सन्धारितसर्वाभरणकान्तिकान्तः, सर्वबलवाहनसकलमहाजनमेलापकेन सहितः, विहितसर्वजनौचित्यः, नैगमादिनागरैर्लोकैः समस्ततालाचरैः सहितः, भगवान्महावीरो वर्द्धमानः क्षत्रियकुण्डनगरमध्यपथेन निर्गत्य, ज्ञातखण्डवनाभिधानोपवनेऽशोकमहातरुतले समाययौ ।

तत्राऽऽगतो भगवाञ् शिबिकात उत्तीर्य, वस्त्राभरणादीनि माल्यादिकञ्च स्वहस्तेनोत्तार्य, कराङ्गुलीभ्य ऊर्मिकाः, मणिबन्धाभ्यां वलये, भुजाभ्यां केयूरे, ग्रीवातः समस्तमुक्ताहारादीन्, श्रुतिभ्यां कुण्डले, शिरसो मुकुटमित्यादीन्यशेषाणि विभूषणान्यमुचत् । तानि सर्वाणि कुलमहत्तरिका हंसलक्षणपटवाससा जग्राह। जगाद च प्रभुम्—भगवन् ! इक्ष्वाकुवंशे जातोऽसि, काश्यपगोत्रोऽसि, त्रिभुवनविदितज्ञातक्षत्रियकुलगगनशशाङ्क ! त्रिभुवनप्रख्यातसिद्धार्थराजपुत्रोऽसि, ज्ञातक्षत्रियया त्रिशलया प्रसूतोऽसि, सुराऽसुरनरेन्द्रप्रथितकीर्त्तिकोऽसि, अतएव गौरवं भज, अतितीक्ष्णखड्गधारासोदरं महाव्रतं गृहाण, निरतिचारं संयममव, कैवल्यं विन्द । इत्थं शिक्षयित्वा, वन्दित्वा, साऽन्यत्र निरगात् । ततो भगवान् एकया मुष्ट्या कूर्चम्, मुष्टिचतुष्टयेन शिरोरुहानित्थं पञ्चमौष्टिकं लुञ्चनं स्वहस्तेनैव कृतवान् । तदादाय देवेन्द्रः क्षीरोदधौ निरास्थत् । एवमपानकेन षष्ठभक्तेन वामस्कन्धे शक्रार्पितदेवदूष्यमादाय, रागद्वेषादिराहित्यादेकः । यथा राज्ञां चतुःसहस्र्या प्रथमजिनः, त्रिभिस्त्रिभिः शतैर्मल्लिपार्श्वनाथौ, षड्भिः शतैर्वासुपूज्यः, शेषाश्च सहस्रेण, तथा चरमतीर्थङ्करो न केनापि सह प्रवव्राज, अतएवाऽद्वितीयः । तदित्थं शिरःकूर्चलुञ्चनेन द्रव्यतः, क्रोधाद्यपनयनेन भावतश्च मुण्डितो भूत्वा, श्रामण्यं शिश्राय । अथैवं प्रव्रजितो भगवान् यदा सामायिके समास्थित, तदा देवेन्द्रः स्वयं वाद्यादिकोलाहलं न्यवीवृतत् । भगवाँश्च ' णमो सिद्धाणं ' इत्यभिधाय ' करेमि सामाइयं० ' इत्यादि पपाठ । गुरोरसत्वात् ' भंते ' इति पाठं तु नोच्चारितवान्, तीर्थकर्त्तुस्तथैवौचित्यात् । चारित्रग्रहणान-

न्तरमेव विभोस्तुर्यं ज्ञानमुदपादि। ततः शक्रादिसर्वे देवा भगवन्तमभिवन्द्य, नन्दीश्वरद्वीपमागत्याऽऽष्टाहिकं महामहं विधाय, स्वस्वस्थानमगुः। भगवानपि नन्दिवर्द्धनमापृच्छ्य विजहार।

इति श्रीवीरजिनशासनस्फारशृङ्गारहार-सुविहितसूरिपुरन्दरनन्दनवनाऽऽरामविहारि-शिथिलाऽऽचारप्रचारतमोहारि—जैनाचार्य—भट्टारक-श्रीमद्विजयराजेन्द्रसूरीश्वरसङ्कलितायां 'श्रीकल्पसूत्रार्थप्रबोधिनी' नाम्न्यां टीकायां पञ्चमं व्याख्यानं समाप्तम्।



## अथ षष्ठं व्याख्यानं प्रारभ्यते।



४७ भगवतो विहारः, परिषहसहनश्च—

अथ चतुर्ज्ञानवद्भगवद्विहारानन्तरं " त्वां विना काननायमाने सदने कथं तिष्ठामः?, केन वाऽनुभविष्यामो गोष्ठीसुखम्?, भोक्ष्यामहे वा केन सत्रा?, कं वा प्रतिकार्यं प्रीतिवाहुल्याद् वीर! वीर!! इत्याह्वयिष्यामः?, किमन्यत्, त्वामपश्यतां नो हृदयानि स्फुटन्ति, नूनमेते वयं त्वया विना निराश्रया अभूम " इत्थमालपन्तस्ते नन्दिवर्द्धनप्रमुखा रोरुद्यमानाः कथमपि ततो न्यवर्त्तन्त। इतश्च भगवदङ्गे दीक्षाकालिको गोशीर्षचन्दनादिविलेपः साधिकमासचतुष्टयीं सद्यस्क प्राय एवाऽऽसीत्। अतएव तदङ्गसौरभ्यभराऽऽकृष्टा मधुकराः परितः समेत्य, वाढं गाढं प्रभोस्त्वचं दशन्ति स्म। भूयांसो युवजनाश्च गन्धपुटीं ययाचिरे। तददाने मौनमाधाय, सन्तिष्ठमाने भगवति प्रकुपितास्ते वहूनुपसर्गान् कर्त्तुमारेभिरे। कियत्यः कामिन्योऽपि मारविजित्वरमामोदभरं शरीरमालोकमालोकं मदनवशम्वदीभूता भगवन्मनःसुमेरुमनेकविधकुटिलकटाक्षपातहावभावादिवात्यया चालयितुमयतन्त। परमेष भगवान् सर्वमेवैतदगणयन्मुहूर्त्तमात्रावशिष्टे तत्रैव दिने कुमारग्राममागत्य, रात्रौ कायोत्सर्गेण

तस्थिवान्नगराद्बहिः। तत्रैकः कर्षकः सकलाहं हलेषु वृषभान् संवाह्य, सन्ध्यासमये तान् भगवत्पार्श्वे विमुच्य, गोदोहनकृते निजसदनमायातः। वृषभास्तु क्षुधितत्वाच्चरितुं वनं प्राविशन्। गृहकृत्यं सम्पाद्य पुनस्तत्रागतो गोपो वृषभानपश्यन् प्रभुमपृच्छत्–आर्य ! त्वदग्रे मुक्ता मे वृषभाः क्वापि गच्छन्तो दृष्टाः ?, पुनः पुनः पृष्टोऽपि यदा नोवाच भगवान्, तदा तद्गवेषणाय वनं ययौ। ते वृषभास्तु कामञ्चरित्वा, तत्रैव पुनरागत्य, निशाऽवसानेऽतिष्ठन्। गोपोऽपि सकलां निशामितस्ततः सर्वत्राऽन्विष्य, तच्छुद्धिमलभमानश्चोखिद्यमानः प्रगे तत्राऽऽगतस्तत्रैव वृषभान्निरीक्ष्य, कुपितो जजल्प–रे पाखण्डिन् ! त्वमेव मम वृषभान् कुत्राऽपि गुप्तानकृथाः, मामपि मुधैव सकलां रजनीं भ्रामितवानासि, अतस्त्वामपि तत्फलं दर्शयामीति वदन्, स्थूलया रज्ज्वा प्रहर्त्तुमधावत। तदैतदवधिना विदित्वा, शक्रेन्द्रस्तत्कालं तत्रागत्य " रे ! किमेनं नो जानासि, यदसौ नन्दिवर्द्धनभूपतेर्भ्राता सिद्धार्थराजसूनुरात्तसंयमो वर्द्धमानस्तपस्यति ?, अमुष्योपसर्गकरणेन त्वां कां दशां नेष्यते राजेत्यपि नो बुध्यसे ?" इत्थं भीषयित्वा न्यवीवृतत्। व्यजिज्ञपच्च–भगवन् ! द्वादशवर्षाणि तव बहवो विघ्नाः पतिष्यन्त्यतोऽहं तावत्कालं भवदन्तिके वैयावृत्त्यचिकीस्तिष्ठानि चेद्वरम् ? भगवानाख्यत्–शक्रेन्द्र ! एतन्नाऽभून्नवाऽग्रे भविता, नो भवति यत्तीर्थकर्त्तारः सुरेन्द्रस्य दनुजेन्द्रस्य वा यस्य कस्यापि साहाय्येन कैवल्यमुत्पादयेयुः, किन्तु स्वबाहुवीर्येणैव प्राप्नुवन्ति। तथापि देवेन्द्र आत्यन्तिकोपसर्गनिवृत्तये भगवन्मातृष्वस्रीयं सिद्धार्थव्यन्तरं तत्र मुक्त्वा, स्वस्थानमीयिवान्। ततः प्रभुः प्रभाते जाते विहृत्य 'कोल्लागसन्निवेशे' समागत्य, बाहुलविप्रस्य गृहे भविष्यतां साधूनां पात्रमावश्यकमिति सूचनायैव कांस्यपात्रे परमान्नेन प्रथमं पारणं खल्वकरोत्। तदा ध्वजदर्शनम् १, गन्धोदकवृष्टिः २, पुष्पवृष्टिः ३, देवदुन्दु-

भिध्वनिः ४, अहोदानमहोदानमित्याघोषः ५, इति भगवन्माहात्म्यविद्योतनाय पञ्चदिव्यानि[1] जज्ञिरे ।

ततो विहरन् भगवान् 'मोराकसन्निवेशे' दूइज्जन्ततापसाश्रममागतवान् । तत्र सिद्धार्थराजस्य सखा स आश्रमपतिरभिमुखमागात् । प्रभुरपि पितृसखत्वात्सम्मेलनाय हस्तौ प्रासारयत, अतिष्ठच्च तदत्याग्रहेणैकां रजनीम् । प्रगे च विजिहीर्षुं भगवन्तं स तापसः स्थातुं समभ्यर्थयामास । निर्बन्धातिशयमवगत्य, प्रभुर्यथावसरमित्युदीर्याऽन्यत्र विजहार । ततश्चाष्टौ मासान् स्वैरं विहरन् वर्षर्त्तौ पुनस्तत्राऽऽययौ प्रभुः । तापसोऽपि सहर्षं महता प्रश्रयेण तृणकुटीरके भगवन्तमध्यवासयत् । तदाऽन्यत्र कुत्रापि तृणादेरसत्त्वात्क्षुधापरिपीडिता गावः प्रभुणाश्रितकुटीरकं निःशङ्कमशितुं लग्नाः । इतरतापस इव भगवाँस्तु ता गावो नैव वारयति स्म, पश्यन्नपि मौनमेव शिश्रिये । तदा गवादिना भक्षितप्रायं कुटीरं विलोक्य, तत्स्वामी समागत्य, प्रभुमेवमाख्यत्—भगवन् ! ये खल्वचेतनाः पक्षिणस्तेऽपि स्वाऽऽश्रमवन्ति, त्वन्तु राजपुत्रो भूत्वाऽपि स्वाश्रयपरिपालनेऽप्यशक्तोऽसि ! तदाक्रोशं श्रुत्वा, भगवान् दध्यौ—यन्मयाऽतः परमत्र न स्थातव्यम्, यदसौ कुटीरकविनाशादप्रीतिमागात् । ततो भगवाञ्छ्रावणकृष्णाऽमावास्यायामेव व्यहार्षीत् । तदैव पञ्चैतानभिग्रहानकरोत्—अप्रीत्यादिप्रतिबन्धकबाहुल्ये स्थाने न स्थातव्यम् १, यावच्छाद्मस्थ्यं तावत्प्रतिमयैव वर्त्तितव्यम् २, गृहिविनयो न विधेयः ३, मौनता ४, पाणिपात्र एव भोक्तव्यम्, ५, इत्थमात्ताऽभिग्रहः प्रभुः साधिकमासाधिकवर्षं चीवरं बिभराञ्चकार, ततःपरमचेलत्वं पाणिपात्रत्वञ्चाङ्गीकृतवान् ।

---

१ ग्रन्थान्तरे च पुष्पवर्षणं विहाय वसुधारावृष्टिमाह । सा च सार्धत्रयोदशदीनारकोटिरुत्कृष्टा, तावल्लक्षात्मिका जघन्या भवति ।

४८ भगवदचैलतानिरूपणम् —

प्रभुर्विहरमाणो दक्षिणवाचालनगरसमीपे स्वर्णवालुकानदीतीरे समायातः, तत्र च कण्टकेऽवलग्नस्य भगवतो देवदूष्यवसनार्धमपतत् । कियद्दूरं गत्वा, सिंहाऽवलोकनेन तदद्राक्षीत् । तदवलोकनं ममत्वधियाऽकारि भगवतेति केचित् १, सचित्तवसतौ वाऽन्यत्र पपातेति विलोकयितुमित्यन्ये २, अस्मत्परम्परासु वस्त्राणि पात्राणि वा, सुकराणि दुरवापाणि वा भविष्यन्तीति बुभुत्सयेत्यपरे ३, वृद्धास्तु वस्त्रं कण्टकेऽवलगदतो मे शासनं कण्टकबहुलं भविष्यतीति विदित्वाऽलोभत्वात्तद्वसनार्धं प्रभुर्नाऽगृह्णात्, किन्तु पितुः सखा विप्रो जग्राह। तदर्धन्तु प्रागेव तस्मा अदात्, तद्दानमेव विस्तृणाति—

स ब्राह्मणो निर्धनत्वाद् भगवदाब्दिकदानवितरणवेलायां विदेशगत आसीत् । दौर्भाग्यात्तत्रापि किञ्चिदप्राप्य गेहमागात्तदवस्थं तं भृशम्भार्यापि धिक्कुर्वती ततर्ज—रे निर्भाग्य ! किं कर्म पुराऽकारि, येन कुत्रापि किमपि नो लेभिषे ?, हन्त ! यदा भगवान्नवाम्बुदो वारिधारामिव याचकजनमनःकामितं प्रदायं प्रदायं समेषां दारिद्र्यं विलोप्याऽऽचन्द्रसूर्यं त्रैलोकिकयाचकगणं महर्द्धिकमकरोत् । तच्छ्रुत्वापि तदा किं नागाः ?, अतस्त्वं दूरमपसर, मां मुखं मा दर्शय, नोचेदधुनापि तमेव जङ्गमं चिन्तामणिं याचस्व । स एव जगदनाथजनबन्धुः परदुःखाऽसहिष्णुरवश्यमेव तवापि दारिद्र्यमपहरिष्यति । इत्थं स्त्रिया संप्रेरितो विप्रो भगवत्पार्श्वमागत्यैवं विज्ञपयाञ्चकार—विभो ! त्वामेकमेव सुरासुरनराः कल्पतरोरप्यधिकं वाञ्छितदायकं निगदन्ति । भवद्दानवार्धौ निमग्नतरस्य दारिद्र्यस्य नामापि नो श्रूयते । अहमेक एव हतभाग्यस्तदवसरे विदेश आसम् । तत्रापि किं किं नाऽकारि, के के वा नाऽभ्यर्थिताः, कुत्र कुत्र वा शिरोऽवनामं नाऽकरवम्, तदपि क्वापि किमपि

नाऽप्रापि । अतस्त्वामेवाऽधुना शरणमधिगतोऽस्मि । विश्वजनीन ! जगज्जनदारिद्र्यदूरीकरणशीलस्य मद्दारिद्र्यनिराकरणे कियाँस्ते परिश्रमः?। इत्थमभ्यर्थमानाय तस्मै विप्राय प्रभुणा स्वकीयदेवदूष्यवाससोऽर्धमदायि । एतद् वसनार्धदानेन भगवच्छिष्यपरम्परायां वसनपात्रयोर्मूर्च्छा व्यज्यत इति केचित्, यदसौ प्राग् विप्रकुलेऽवततार, अतएव विप्रायैव तददित । स विप्रस्तु तदर्धं चीवरमादाय, निजगेहमागात् । तदवसरे सचीवरं पतिमवलोक्य, प्रहृष्टा सती कृताञ्जलिरभ्यधादेवं तत्पत्नी—" प्राणनाथ ! केकी पयोदागमनमिव त्वदागमनकाङ्क्षिणी, नीरवियुक्ता मत्सीव व्याकुलतामुपगता किलाऽऽसम् " इत्यादिमधुरं वच आचक्षाणा सप्रेम सरसमाहारं भोजयित्वा प्रासीसदत्तमाम् । विप्रस्तद्वसनार्धं दशाञ्चलकृते तन्तुवायाय ददौ । सोऽपि तद् व्यतिकरं ज्ञात्वा, जगाद भो विप्र ! त्वं याहि, एतद्वसनार्धमानय, तत्खण्डद्वयमेकीकृत्य दास्यामि, भविष्यति चैतल्लक्षार्धम् । तथा करणेन तव ममापि दारिद्र्यं विनशिष्यतीत्याकर्ण्य, लोलुपीभूय, पुनरपि भगवदभ्याशमागत्य, दध्यौ विप्रः—यदहं कथमेनं भूयो भूयः प्रयाचेय ?, याचिष्ये चेन्मां लोलुपं वेदिष्यति प्रभुः। अतो मया लोभाधिक्यं नैव प्रकटनीयमिति निश्चित्य, मौनमाशिश्रियत। " यस्मादर्थिनां वाक् व्रीडां हि नियच्छति, असम्पदा च याचितुं प्रेरयते, तदपि दत्तमौनकपाटेन मुखेन देहि देहीति नाऽचकथत् । " अवदध्रे च स्वान्ते यदा कदा भगवतः स्कन्धादेतन्निपतिष्यति, तदैतद् ग्रहीताऽस्मि । इत्थं वर्षमेकं स विप्रोऽवसरं प्रतीक्षमाणः प्रभुमन्वगच्छत् । अथैकदा स्वयं निपतितं तदादाय, स्वसदनमायातः स्वं कृतकृत्यं मन्यमानः । इत्थमस्मच्छिष्यपरम्परया सवाससा भवितव्यमिति सचैलधर्मप्ररूपणकामेन भगवता साधिकमासाधिकमब्दं सचैलेनाऽभावि । सपात्रेणापि भवितव्यमिति स्थापनाऽऽशया प्रथमपारणं भगवानकार्षीच्च पात्रेण । पश्चादाजन्माऽचैलकः पाणिपात्रश्चाऽभवत् । अन्ये

च सकलास्तीर्थङ्करा यावज्जीवं तद्देवदूष्यवसनधारणात्सचैलका एवाऽऽसन् । कियत्सु ग्रन्थेषु मध्यपातिनां द्वाविंशतिजिनानामेव यावज्जीवं देवदूष्यवस्त्रधारणमुक्तम् ।

४९ चण्डकौशिकप्रतिबोधः—

इत्थं विहरन्नेकदा भगवानुत्तरवाचालसन्निवेशो वर्धमाननगरमियाय । तत्र स्वर्णबालुका रूप्यबालुकाभिधे नद्यौ समुत्तीर्य, अग्रे चलतो भगवतो मार्गद्वयमागात्; तत्रैको वक्रोऽपरश्च सरलः । तदा लोका ऊचुः—आर्य ! योऽयं सरलः पन्थास्तत्र महाहेर्भीतिरस्ति, तेन पथा मागाः । एवं लोकैर्वार्यमाणोऽपि प्रभुर्वक्रपथमपहाय, सरलमार्गेणैव पुरश्चचाल । मार्गे च कनखलकानने कस्यचिदेकस्य तापसाश्रमोऽस्ति । तत्रैको दृष्टिविषो महाकायश्चण्डकौशिको महाव्यालस्तिष्ठति । तदुत्पत्तिश्चैवम्—"क्वचिन्नगरे द्वौ गुरुशिष्यौ चतुर्मास्यामातिष्ठताम् । तावेकदा मासक्षपणपारणाय गोचर्यै गतवन्तौ । मार्गे च वर्षर्त्तौ जीवोत्पत्तेर्बाहुल्याद् गुरोः पादतलेन लघुदर्दुरो ममार । शिष्योऽजल्पत्—स्वामिन् ! भवत्पादेन दर्दुरोऽम्रियत । गुरुः सकोपमवादीत्—रे ! किमेवं ब्रूषे, नाऽयं मत्क्रमतलाऽऽघातेन मृतः, किन्त्वन्यस्यैव चरणतलनिपातसंपीलितो मृतो दृश्यते । ईदृशा मृता जीवास्तु बहुशोऽधिमार्गं दृश्यन्ते । किन्ते मयैव निहताः ?, गुरूक्तिं श्रुत्वा शिष्यो मौनमदधात् । पुनरीर्यापथिकीं प्रतिक्रमणकाले निशि संस्तारकाऽवसरे च जातां दर्दुरविराधनां गुरुणा स्मारितवाञ्छिष्यः । तेन तदुद्भूतप्रचण्डकोपानलदन्दह्यमानो गुरुस्तमन्तेसदं निहन्तुमधावत् । शिष्यस्तूर्णं ततः पलाय्य क्वाप्यनश्यत् । गुरुरेव स्तम्भाऽऽघातेन स्फुटितशिरा मृत्वा, ज्योतिष्कदेवो जज्ञे । ततश्च्युत्वाऽभूत्तत्राश्रमे चण्डकौशिकनामा तापसमुख्यः, अजनि, चामुष्य शिष्याणां पञ्चशती । स चैकदा निजवाटिकायां फलपुष्पादिकमाददतो राजपुत्रानालोक्य, प्रकोपात्परशुपाणिस्तान्निहन्तुमधावीत्, परन्तु जवेन धावमानः पादस्खल-

नादासन्नकूपे निपत्य, परशुभिन्नहृदय आर्त्तध्यानेन मृत्वा, तस्मिन्नेवाश्रमे चण्डकौशिकनामा दृष्टिविषो महाकायो विलेशय उदपादि । स च दृशैव लोकान् भस्मसात्कर्त्तुं प्रावृतत्, तद्भीत्या च सर्वे तापसाः पलायन्त । ये केचन तेन पथा चेलुस्तान् भस्मसात्कृतवान्, तेन तन्मार्गेण केऽपि न चलन्ति । " भगवाँस्तु तस्यैव विलोपरि कायोत्सर्गेण तस्थिवान् । तदा स विलेशयः प्रभुं प्रतिमायां स्थितं विलोक्य, रोषाज्ज्वलन्भास्करं दर्शं दर्शं दृष्टिज्वालां प्रकामम्भगवदुपरि समौज्झत् । ममोपर्येव जातुचिदयं मापतत्विति धिया दूरमपासरच्च, पुनःपुनरेवमकरोत्; तथापि प्रभुं तथैवाऽद्राक्षीत् । ततोऽतीव कोपमानीय भगवन्तं चरणयुगले बाढमदशत्, तदपि निराकुलमेव प्रभुमपश्यत् । ततो निर्गतं रक्तञ्च दुग्धकल्पमालोक्य व्यमृशत्–अहो ! यदहं पश्यामि स तत्कालमेव भस्मसाज्जायते, एनमदशं बहुधा तथापि जीवत्येव मनागपि नैव चचाल, रुधिरमप्येतस्य क्षीरसदृशं निर्गच्छति, अतो नूनमेव कोऽप्यसाधारणः पुमानस्तीति विमृश्य भगवन्मुखमालुलोके । तदा रे चण्डकौशिक ! बुध्यस्व, बुध्यस्वेति प्रभुभाषितं श्रुत्वा, जातिस्मृतिमासाद्य, प्राग्भवानपश्यत्ततो भगवन्तं त्रिःपरिक्रम्य जगाद—जगदुद्धारपरायण ! मामनाथमेतस्माद्दुर्गत्यकूपारादुद्धर, सफलं मे जन्म येनाऽनायासेन दुर्गतिकूपोध्धृतोऽस्मीति विमृश्य, समुद्गततीव्रतरवैराग्यादात्तपाक्षिकाऽनशनः स बिले मुखं विन्यस्य तस्थिवान्, शरीरन्तु बहिरेवाऽतिष्ठिपत् । तदा तेन मार्गेण यान्तीभिः क्षीरदध्यादिविक्रयार्थमाभीरीभिः प्रसेदिवानयं नागराज इति जानतीभिर्घृतक्षीरदधिशर्करादिकैस्तदर्चाऽकारि, तेन तदङ्गं घृतमीलपिपीलकादयो जीवा भृशमबाधन्त; तत्परिपीड्यमानोऽपि स दध्यौ—यद्गात्रे सञ्चालिते मरिष्यन्त्येते जीवास्ततस्तदवस्थ एव मनागप्यकम्पमानः, पिपीलिकादिना चालनीकृताऽशेषगात्रः स प्रभुदर्शनाऽमृतसंसिक्तः शुभध्यानेन मृत्वा, सहस्रारदेवलोके देवोऽभवत् ।

५० पुष्पनैमित्तिककथानकम्—

ततो विहरमाणस्य प्रभोर्गङ्गातीरेऽतिसूक्ष्मसैकतेऽङ्कितायां पादपङ्क्तौ चक्रध्वजोर्ध्वरेखाङ्कुशादिकानि चिह्नानि विलोकमानः पुष्पाख्यः सामुद्रिको दध्यौ—यदमुनाऽध्वना कोऽप्येकाकी चक्रवर्ती निरगात्। तस्मात्तदन्तिकमित्वा, तत्सेवां विदध्याश्चेदीप्सितं प्राप्नुयामिति निर्धार्य, तदैव पदपङ्क्त्यनुसारेण भगवदन्तिकमेत्य, निरीहं दिगम्बरं विलोक्य, ध्यातुमलगत्—हन्त! महता कष्टेन यदध्यैषि सामुद्रिकशास्त्रं तदद्य मुधैवाऽभूत्, यस्माच्चक्रवर्त्तिलक्षणाऽङ्कितोऽसौ श्रामण्यं नीतो रङ्को वीक्ष्यते; अतः सामुद्रिकग्रन्था वैयर्थ्याज्जल एव क्षेपणीयाः। इत्थं यावदवधारयति, तावच्छक्रः सर्वमेतदवधिना विदित्वा, तत्राऽऽगत्य, भगवन्तमभिवन्द्य, पुष्पनैमित्तिकमवादीत्—किमेवं विषीदसि? सामुद्रिकं मुधा नास्ति, किन्तु सत्यमेव विदाङ्करोतु भवान्। असौ खलु सार्वभौमव्यञ्जनव्यञ्जितस्त्रिभुवनभर्त्ता, सुराऽसुरनरेन्द्राणामपि शासिता, सर्वसम्पत्प्रदाता, तीर्थप्रवर्त्तयिता भविता। अतएवाऽमुष्य देहः खेदस्वेदमलव्याधिमुक्तः, श्वासश्च सौरभ्यमयः, पिशितशोणिते च पयसीव धवलतरे स्तः। ईदृशानि बहिरान्तराण्यप्यगण्यान्येव लक्षणानि विचकाशति। इत्थं भगवद्गुणगणान् वर्णयन्, पुष्पसामुद्रिकाय भूरि स्वर्णमणिरत्नानि प्रदाय, शक्रः स्वस्थानमागान्नैमित्तिकोऽपि प्रहृष्यन्निजदेशं प्रत्यगच्छत्।

५१ शूलपाणियक्षप्रतिबोधो, भगवतः स्वप्नदर्शनञ्च—

अथ प्रभुः किञ्चिदधिकद्वादशाब्दपर्यन्तं सदैव व्युत्सृष्टकायो दैविकान्, मानवान्, तिर्यक्कृतान्, भोगाद्यर्थं प्रार्थनप्रमुखाननुकूलान्, ताडनादिप्रतिकूलान् सर्वानुपसर्गान् सेहे। क्रोधाद्यभावाच्चक्षमे, दैन्यस्याऽकरणात्तितिक्षामबोढ। तत्र दैविकोपसर्गसहनं यथा—स भगवान् मोराकसन्निवेशादेत्य प्रथमां चतुर्मासीं शूलपाणियक्षस्य भवने तस्थिवान्। स च यक्षः प्रागूजन्मनि धनदेवमहेभ्यस्य वृषभ आसीत्। तस्य

श्रेष्ठिन एकदा पञ्चशतशकटानि महत्यामेकस्यां तटिन्यां पङ्के निरमाङ्क्षुः, तदवसरे कश्चिदेको युवा बलीयाननड्वान्भामेव द्विधा विभज्य, युगद्वये योजयेच्चेदहमेक एव सर्वाणि शकटान्युत्तारयाणीति बलोत्कर्षं दर्शयन्निव वामयुग्यो भूत्वा, सर्वाणि समुदतीतरत् । तावता परिश्रमेण भग्नास्थिको गन्तुमशक्तो भवत् । तमशक्तमवलोक्य, श्रेष्ठी वर्द्धमानग्राममागत्य, पञ्चकुलेभ्यस्तदवस्थवृषभस्य तृणजलदानाय द्रव्यं दत्त्वा, तमनड्वाहञ्च तत्रैव मुक्त्वा ययौ । ग्राममुख्यास्तु तच्चिन्तां नो चक्रिरे । सोऽनड्वान् क्षुधातृषा च परिबाधितो कामनिर्जरया मृत्वा, 'शूलपाणि' नामा यक्षो बभूव । सहि प्राग्भवीयं तमवधिना ज्ञात्वा भृशं चुकोप । ततस्तत्र ग्रामे सकललोकक्षयकरीं महामारीं व्यतनोत् । भूयांसो लोका मम्रुः, कियतामसंस्कृतानां शवानामस्थिसञ्चयैरास्थिग्राम इत्येव पप्रथे । एवं बहूँल्लोकान्म्रियमाणान्निरीक्ष्याऽवशिष्टा लोकास्तमेकदा समभ्यर्च्य जजल्पुः—भो यक्ष ! केनोपायेन प्रसत्स्यसि, निवर्त्स्यति च केनोपायेन महामारीयं तदाचक्ष्व । लोकाभ्यर्थनं श्रुत्वा, यक्षो व्योम्नि खल्वेवमवादीत्—हितं वाञ्छथ चेदस्मदुक्तिं कुरुत, यदहं प्राग्भवे सार्थवाहस्य धनदेवस्य वृषभ आसम्, गन्तुमशक्तस्य ममार्थे श्रेष्ठिना धनानि भवद्भ्यो दत्तानि, भवन्तश्च मामकीं सेवां मनागपि नाकुर्वत, सर्वाणि तानि द्रव्याणि मिथो विभेजिरे । तत एवाऽहं कुमृतिमागाम्, भूत्वा च यक्षो विदित्वा, च तदेतत्प्राक्तनं यौष्माकं मन्तुं कुपित्वा, च भवतः संहर्त्तुमिमां मारीमजीजनम् । अतो यूयं तत्राऽस्थिनिचयोपरि रम्यं देवलं निर्माय, शूलहस्तां वृषभमूर्त्तिं स्थापयत, नित्यं नानोपचारैरर्चयत, ततो बाधयाऽनया मुक्ता भविष्यथ, नोचेत्सकला मरिष्यथ । यक्षोक्तिमाकर्ण्य, प्राणत्राणाय तूर्णमेव चैत्यं निर्माय, तन्मूर्त्तिमतिष्ठिपँस्ते लोकाः । नानावस्तुना तदर्चामारेभिरे, तत उपशशाम तत्र महामारीकृतोपद्रवः । तमेव प्रतिबोधयितुं प्रभुस्तस्मिँश्चैत्ये समाययौ । दुष्टो सौ यक्षक्रिया-

मायां रजन्यामस्मिन् प्रासादे यस्तिष्ठति तं हिनस्तीति लोकाः प्रभुं न्यषेधिषुस्तथाप्यकुतोभयः प्रभुर्मौनमाधाय, तत्रैव कायोत्सर्गेण तस्थौ । स यक्षः सायङ्कालमारभ्य भगवद्भापनाय नानाविधमुपसर्गं व्यतत । तत्रादौ भूमिर्द्यौश्च यथा भिद्येतां तथाऽट्टहासं ततान । ततो दन्तावलो भूत्वा, शुण्डादण्डेन भगवदङ्गे प्राहरत्। ततः पिशाचरूपेण भीषयामास । ततः सर्पो भूत्वा, प्रभुमनेकधाऽदाङ्क्षीत् । इत्थमसह्यानुपद्रवानकरोत्, तदपि प्रभुर्मनागपि नैव चुक्षुभे । ततो दुरात्मा यक्षो भगवतः शिरसि श्रवसोर्नसोर्नयनयोर्दन्तेषु पृष्ठे कररुहेषु विविधां शूलादिवेदनां चाऽकार्षीत्, तथापि भगवन्तमक्षुब्धमवलोक्यासाधारणं पुमांसमवधार्य, सेवितुमलगत् । स्वाऽपराधं क्षामयँश्च प्रभोरग्रे मुदा नरीनृत्यमानो मधुरं गायं गायं सम्यक्त्वमीयिवान् । लोकाश्चैवं बुबुधुर्यदसुना दुरात्मना ध्रुवमघानि स आर्यः । यद्द्यैवं नर्नृतीति प्रमुदितो मधुरं गायति । तत्र च तत्कृतां कदर्थनां सहमानः प्रतिमास्थ एव स्वल्पं निद्राणो भगवान् दश स्वप्नानवलोक्य जजागार । जाते च प्रभाते तत्रागता लोका भगवन्तमबाधमवलोक्य जहृषुः । अष्टाङ्गनिमित्ताऽभिज्ञावुभौ उत्पलेन्द्रशर्माणौ बाडवौ तत्राऽऽजग्मतुः । तत उत्पलनैमित्तिकोऽजल्पत्—भगवन् ! अद्य रात्रौ ये दश स्वप्नास्त्वया दृष्टास्तत्फलन्तु सर्वज्ञस्य भगवतो विदितमेवास्ति, तथापि व्यवहारदृशा यथाशास्त्रं त्वां ब्रवीमि—यत्त्वं १ तालपिशाचमवधीत्तदचिरान्मोहनीयं कर्म निहन्तासि । २ सितकोकिलदर्शनाच्छुक्लध्यानी भविष्यसि । ३ पञ्चवर्णविचित्रकोकिलयुगलदर्शनाद् द्वादशाङ्गीं प्ररूपयिष्यसि । ४ गोवृन्दविलोकनाच्चतुर्धात्मकसङ्घस्त्वां सेविष्यते । ५ अपारं पारावारं यतस्तेरिथ, ततस्त्वं संसारसागरं तरिष्यसि । ६ यदुदयमानं भास्करं प्रेक्षाञ्चकृषे, तेनाऽचिरात्ते केवलज्ञानमुद्भविष्यति । ७ यत्त्वमान्त्रैः श्लिष्टं मानुषोत्तरनगं ददृक्ष, तेन त्वां त्रिभु-

वनव्यापिनी सती सुकीर्त्तिराश्लेक्ष्यति । ८ यत्त्वं मन्दरभूधरशिखराऽऽरूढं स्वं लुलोकिषे, तेन देवस्थापितस्वर्णसिंहासनासीनो देवमानवसमज्यायां चतुर्विधं धर्ममुपदेक्ष्यसि । ९ सुरगणैः श्रितं पद्मसरो व्यलोकथाः, अतस्त्वां चतुर्निकायवन्तो निलिम्पाः सेविष्यन्ते । १० भगवन् ! यन्नवान् मालाद्वयीं विलोकितवाँस्तदर्थं नो वेद्मि, त्वमेव कृपां विधाय ब्रूष्व । तदा स्वामी छाद्मस्थ्यान्नोवाच किन्तु, सिद्धार्थव्यन्तरो भगवदङ्गे संक्रम्य जजल्प—यदहं मालायुगलाऽवलोकनात्साधुश्रावकभेदेन भवाम्भोधेस्तरणतारणक्षमं महापोतकल्पं द्विविधं धर्मं वक्ष्यामि । तदित्थं स्वप्नफलानि व्याहृत्योत्पलो प्रभुं प्रणम्य स्वस्थानमगात् ।

५२ अच्छुन्दकनैमित्तिककथा—

भगवानपि तत्राऽष्टार्धमासक्षपणैरेकाश्चतुर्मासीं पञ्चदशादिवसोनामत्यैत् । ततो विहृत्य, मोराकसन्निवेशमागत्य प्रतिमास्थोऽतिष्ठत् । तत्र च वीरविभोर्माहात्म्यप्राकट्याय भगवच्छरीरे प्रविष्टः सिद्धार्थव्यन्तरो लोकानां त्रैकालिकानि फलानि वक्तुमारेभे । तेन लोका भगवत्यधिकं श्रद्दधिरे सिषेविरे चाऽसीमया भक्त्या । इत्थं प्रभोर्महिमा तत्राऽवरीवृध्यत । तदा तत्रत्यः कश्चिदच्छन्दकनामा नैमित्तिकः प्रभौ महतीं द्वेष्यधियमभार्षीत् । यतः पौरास्तमेवमूचिरे—यत्त्वमार्यदेव इव निमित्तं नात्थ, गताहे मया क्षेत्रेऽहिरदर्शि, तदूचिवान्भगवान्, दिने यदभुञ्जि तदप्यगदत् । इत्थं भगवन्महिमाऽऽधिक्यं श्रावं श्रावं मत्सरी स एकदा भगवद्वाक्यमलीकं चिकीर्षुस्तत्रागत्यकरे तृणमेकं लात्वा, प्रभुमपृच्छत्—आर्य ! ' त्वमत्र त्रिकालदर्शी श्रूयसे, अतः पृच्छामि किमेतत्तृणं छेद्यमच्छेद्यं वा भविता ? तन्निशम्य नैवैतत्केनापि कदापि छिद्येत इति सिद्धार्थोऽभाषिष्ट । तदा स दुर्मतिस्तत्तृणं छेत्तुमुदयुनक् । तदवसरे शक्रेन्द्रः प्रयुक्ताऽवधिकः सर्वं विदित्वा तत्रागत्य पविना तस्याङ्गुलीरेव खल्वच्छैत्सीत् । ततोऽच्छिन्ने तृणे सर्वैस्तिरस्कृतस्त्रपेतराम् । सिद्धार्थो व्यन्तरः

क्रुद्धो भूत्वा, ' चौरः खल्वयम्, निमित्तशास्त्रं स्तोकमपि न जानाति ' इति लोकानवदत् । लोका अजल्पन्—भगवन् ! कदा कस्य किमयमचूचुरत् ? । सिद्धार्थो व्याजहार—यः खल्वस्ति वीरघोषकर्मकरस्तस्य कांस्यिकं दशपलमितं पात्रं चोरयित्वा, खर्जूरतरोरधस्तलेऽतिष्ठिपत् । एवमिन्द्रशर्मणो विप्रस्याऽजमपहृत्य, निशि निहत्याऽयमश्नात्, तदस्थीन्यधुनाप्येतस्य गृहपश्चाद्बदरीवृक्षतले भूमौ क्षिप्तानि वर्त्तन्ते । एवममुष्मिन् यद्वर्त्तते तृतीयं दूषणं तदहं वो नो वक्ष्यामि, किन्तु तत्पत्न्येव निगदिष्यति, गत्वा तामेव पृच्छन्तु । ततो लोकाः कौतुकात्तदैव स्थानद्वयं गत्वा, दृष्ट्वा च तदुभयं पश्चात्तत्सदनमागतास्तदीयां भार्यामप्राक्षुः । साऽवदत्—अयं महापापी वर्त्तते, यदनिशं सोदरां स्वसारमेव भुङ्क्ते । ततो समेषां लोकानां तदुपरि महती घृणा जाता, भगवद्वाक्ये च परां श्रद्धामापुः । सर्वत्राऽऽप्ततिरस्कारो लज्जितः स भगवत्पादयोः पतित्वा, व्यजिज्ञपत्—त्वं हि विश्वस्मिन्नखिले पोपूज्यमानोऽसि, अहन्तु केवलमत्रैव कथञ्चिज्जीवामीतितद्दीनोक्तिमाकर्ण्य, मयि सत्यत्र खल्वेतस्य वृत्तिर्हास्यतीति निर्धार्य, ततोऽन्यत्र व्यहरत् प्रभुः ।

५३ कम्बलसम्बलयोः कथानकम्—

अथ विहरमाणो भगवान् उत्तरवाचालसन्निवेशे समागत्य, नागसेनाख्यश्रावकसदने परमान्नेन पारणं व्यधात् । तदा पञ्चदिव्यानि प्रादुरासन् । ततः प्रभुः श्वेताम्बीं नगरीमाययौ । तत्र प्रदेशीराजा भगवन्माहात्म्यं वितेने । ततः सुरभिपुरं प्रतस्थिवान्मार्गे नैयकगोत्रिणः क्षितीशाः पञ्चभीरथैर्भगवन्तमभ्यवन्दन्त । ततोऽध्वनि गङ्गानदी समायाता । तत्र सिद्धयात्राभिधनाविकस्य नावि बहवो लोका नदीमुत्तितीर्षवः समासत । प्रभुरपि तैः सह निषसाद । तदा कौशिको रराट । तच्छ्रुत्वा क्षेमिलनामा निमित्तविदवोचत—भो लोकाः ! यदयं कौशिको

रारटीति, तेन ज्ञायते यदद्याऽस्माकमापतिष्यति कोऽपि मरणप्रायो महोत्पातः, परममुष्य महीयसः पुंसः प्रभावतो जीवन्तो भविष्यामः । इत्थं यावन्निगदति तावत् त्रिपृष्ठभवे यं केसरिणं भगवानहन्, स सिंह-जीवो बहुभवानधिगत्य, भवनपतिदेवेषु सुदंष्ट्रनामा नागकुमारोऽजनि । स चाऽवधिना प्रभुमवलोक्य, प्राक्तनं वैरं स्मृत्वा, तत्राऽऽगत्य, नावं निमज्जयितुमुदयुक्त । तदवसरे कम्बलसम्बलनामानौ नागकुमारदेवौ तत्राऽगाताम् । तत्र सम्बलो मज्जन्तीं नौकामधस्ताद्धृत्वा खल्वरक्षत्, कम्बलस्तु पोतं मज्जयता सुदंष्ट्रदेवेन सह युद्ध्वा तमजैषीत् । पराजिते च तस्मिन् भगवान् सह सर्वजनैस्तीरमापत् । अनयोरुत्पत्तिश्चैवम्—मथुरानगर्यां जिनदासाख्यः परमश्रावको निवसति, स्त्री च साधुदासी नाम्नी परमश्राविकाऽखण्डशीलगुणशालिन्यास्ति । तौ दम्पती पञ्चमव्रते चतुष्पदानां जीवानां यावज्जीवं सुरक्षणाय प्रत्यजानीताम् । तयोश्च गोमहिष्यादिकं नाऽऽसीत्, किन्तु तत्रत्यायाः कस्या आभीर्या अपेक्षितं दधिक्षीरादिकमुचितमूल्येन साधुदासी क्रीणती किलाऽऽसीत् । इत्थं तयोश्चिरपरिचयाद् घनिष्ठा प्रीतिरुदपद्यत । अथैकदा आभीर्या गृहे विवाहोत्सवः प्रावर्त्तत । तत्र च तौ दम्पती प्रीत्या निमन्त्रितौ तामूचतुः—अयि ! आवयोरागमनं तवागारे न संभविष्यति, किन्त्वपेक्षितं तदुपकरणं सकलं मम सदनादादेयम् । अथ तया साधुदास्या दत्तानि वस्त्राऽऽभरणादीन्युपकरणानि समानीय, विवाहोत्सवं समपीपदत् । तेन प्रमुदितयाऽऽभीर्याऽनिच्छन्त्या अपि साधुदास्याः सद्मनि बलादेव द्वौ समानवयस्कौ सुन्दरतरौ वत्सतरौ वृषौ बद्ध्वा गतम् । एतौ विलोक्य, तौ दम्पती व्यमृशताम्—यद्येतौ परावर्त्तयिष्यावस्तर्हि नूनमिमौ षण्डीकृत्य शकटे हले वा योजयिष्यति, ततश्चाऽनयोर्महादुःखं भविष्यतीत्यवधार्य. पुत्राविव शुद्धतृणदानजलपानादिना पुपुषतुः । तयोरेकस्य कम्बलमपरस्य सम्बलमिति नाम चक्राते । इत्थं वाहनादिश्रमजं दुःखमन-

नुभवन्तौ सुखेन तौ ववृधाते । अष्टमीचतुर्दश्यादिपर्वदिवसे पौषधं कुर्वता तेन जिनदासेन वाचितं धर्मकथादिकं श्रावं श्रावं तावपि सम्यक्त्ववन्तौ व्रतिनौ जज्ञाते । अथैकदा जिनदासस्य सख्या तमपृष्ट्वैव बलीयांसौ कमनीयतमौ धुरीणौ विज्ञाय, निजेच्छया रथे संयोज्याऽदृष्टधुरौ तौ भाण्डीरवनयक्षयात्रायां तथा वाहितौ यथा तयोर्नाड्यस्तुत्रुटुः। ततः परावर्त्त्य गुप्त्यैव तौ जिनदासगृहेऽबध्नात् । तावस्थनां भङ्गात्यक्ताऽशनपानौ वेदनार्दितौ विलोक्य, पुत्रवात्सल्यादिव रोरुद्यमानो जिनदासश्चिरं विषीदन् कारयामास ताभ्यां म्रियमाणाभ्यामनशनम् । चतुर्विधाहारहापननमस्कारमहामन्त्रस्मारणादितत्कालोचितसर्वमकरोत् । ततस्तौ शुभध्यानेन मृत्वा, नागकुमारावभूताम् । तावेव नवौ प्रयुक्ताऽवधिकौ सर्वं विदित्वा, तत्राऽऽगत्यैकः पोतं तत्रेऽपरो भगवत्क्लेशाय प्रयतमानं सुदंष्ट्रदेवं व्यजेष्ट । ततस्तौ प्रभोः पुरस्तान्नृत्यगीतादिकं वितत्य, गन्धोदककुसुमश्चाभिवृष्य स्वस्थानं जग्मतुः ।

५४ गोशालस्याऽऽगमनं, सह विहरणञ्च—

भगवानपि ततो विहरमाणो राजगृहनगरे नालन्दाख्ये पाटके तन्तुवायस्य शालायाः क्वचिदेकत्र भागे प्रथमं मासक्षपणं विदधत्तस्थौ । तत्र शरवणग्रामवासी मंखलीपुत्रः सुभद्रागर्भजो बहुलाख्याद्विजस्य गोशालायामुत्पन्नत्वादन्वर्थनामा गोशालः समायातः। सहि प्रथमपारणादिवसे प्रभुं विजयश्रेष्ठिसदनात्प्रासुकाहारं प्रत्यलाभयत् । तदा देवकृतानि पञ्चमहादिव्यानि विलोक्य, प्रभो ! मामपि स्वान्तेसदमवगच्छेत्याख्यत् । ततो द्वितीयपारणा नन्देन पक्वान्नादिविविधप्रासुकाऽऽहारेण, तृतीया च सुनन्दाभिधेन सुश्रावकेण परमान्नादिनाऽकारि प्रभुणा । गोशालो व्यचिन्तयत्—यदेनं प्रतिसद्म जनः परया भक्त्या प्रतिलाभयति, अतोऽहमप्येतस्मात्पृथग्भूय, गोचर्यै व्रजेयश्चेन्मामपि लाभयिष्यते, किलैधिष्यते च ममापि महिमेति निश्चित्य, भगवतः पृथग्भूय, यद्गृहे

भगवता प्रत्यलाभि, तदासन्नसदने सोऽप्यगात् तमागतं दृष्ट्वा गृहपतिः प्रामोदत। द्रुतमुत्थाय वन्दित्वा च सोल्लासमवक्-स्वामिन् ! मम गेहे पारणं विधेहि। तदा गोशालकेन हस्तौ प्रसारितौ गृही चोष्णं प्रासुकाहारं परिवेष्य, मम गृहे स्वर्णादिवृष्टिर्भविष्यतीत्याशयोपर्यपश्यत्। तदवसरे गोशालस्य मस्तके काक आगत्योपाविशत्, करे च काचिद्भवनोपरितो वह्निमक्षिपत्। तद्वीक्ष्य श्रेष्ठी दध्यौ-अहो ! मद्गृहेऽङ्गारवर्षणमेव जातम्, तद्गृहे तु स्वर्णवृष्टिर्जज्ञे। तदा दग्धपाणिर्गोशालो लज्जितो भवन्नागत्य दध्यौ-यदस्य पार्श्वे कापि शक्तिरस्ति, या सर्वत्र दीनारवृष्टिं विदधाति, तां विद्यामहमप्यमुष्माद् गृह्णीयाच्चेदभीष्टं सेत्स्यति; लोकाश्च सर्वे मामपि भगवन्तमिवाऽऽदरिष्यन्तेतराम्। इत्यवधार्य, पुनर्भगवद्दिदृक्षया तत्स्थानमागतोऽपि स प्रभुं नाऽवलोकत।

अथ प्रभुश्चतुर्थमासक्षपणपारणं कोल्लागसन्निवेशमागत्य, बहुलविप्रगृहेषु परमान्नेन व्यदधात्, तत्रापि देवता पञ्चदिव्यानि प्रकटयाञ्चक्रिरे। गोशालोऽपि प्रभुमपश्यन् गवेषयँश्च नगरे सर्वत्र यदा नाऽऽलुलोके, तदा सकलमुपकरणं विप्रसात्कृत्वा, शिरः श्मश्रुणी च वापयित्वा, कोल्लागसन्निवेशमागत्य, प्रभुमवलोक्यैवमभ्यर्थयत-भगवन् ! त्वच्छिष्यता मे तिष्ठतु। प्रभुरपि तदभ्यर्थनामुररीकृत्य, तेन सहाऽग्रे विहरमाणः स्वर्णखलग्रामं प्रति चचाल। अधिमार्गमेकत्र महति कटाहे क्षीरं पचमानं गोपमवलोक्य, गोशालो न्यगदत्-भगवन् ! क्षणमत्रैव स्थीयतामयं प्रचुरं पायसं पचति, तद्भुक्त्वा पुनरग्रे गन्तव्यम्। सिद्धार्थोऽवदत्-नैतद्भोक्ष्यते, तत्पात्रमेव भग्नं भविता। ततो गोशालो गोपालसन्निधौ गत्वा, तद्भङ्गं व्यजिज्ञपत्, तदा सोऽपि तदभङ्गे प्रायतत, तथापि तत्पात्रमस्फुटत्। तदवलोकमानो गोशालो 'भाव्यं भवत्येव' इति निराचिनोत्। ततश्चलित्वा भगवान् ब्राह्मणग्राममायातः। तत्र नन्दोपनन्दनामानौ द्वौ सहोदरौ स्तः। तयोश्च द्वौ पाटकौ वर्त्तेते। प्रभुर्नन्दपाटके प्रावि-

क्षन्नन्दसद्मनि च पारणामकार्षीत् । गोशालस्तूपनन्दगेहे सात्ताहिकपर्युषितवैकृताहारलाभेन प्रकुप्यन्—रे ! ईदृशस्य श्रद्धाविनयविहीनस्य तव सदनं मामकगौरवतपस्तेजसा भस्मसाज्जायतामित्यशपत्, तदैव तत्सदनमधाक्षीदासन्नदेवता । ततः प्रयातः प्रभुश्चम्पापुरीमायातः तत्र भगवान् द्वौ द्वौ मासौ क्षपयन् कृतवाँश्चतुर्मासीम् ३, तत्राऽन्तिमद्वैमासिकक्षपणपारणं नगराद्बहिः कृत्वा, कोल्लागसन्निवेशमागतवाँस्तास्थिवाँश्चैकत्र शून्यागारे कायोत्सर्गेण । तत्र विद्युन्मत्या दास्या साकं रममाणं सिंहाख्यं नगरनायकस्य पुत्रं प्रेक्षमाणो गोशाल उच्चैर्जहास । तत एनं नितरामकुट्टयत् । कुट्टितश्च गोशालः प्रभुमित्यब्रवीत्—प्रभो ! मामाधिकं जघान सः, भवान् कथं नो वारितवान् ?, तच्छृण्वन्नपि भगवाँस्तूष्णीमस्थात् । सिद्धार्थोऽजल्पत् पुनरेवं कदापि माहसीः, हसिष्यसि चेत्पुनरपि हनिष्यत्येव । ततो भगवान् पात्रालकमागात्, तस्थौ च क्वचिच्छून्यसद्मनि कायोत्सर्गेण । तस्मिँश्च निजदास्या स्कन्दिलया सह क्रीडन्तं स्कन्दं विलोक्य, वाढमुपहसन् गोशालः कुट्टितस्तेन । ततः प्रभुः कुमारसन्निवेशमेत्य, चम्पारमणीयोद्याने प्रातिमयाऽतिष्ठत् । तत्रैव पार्श्वनाथप्रभोरन्तेसद्बहुलशिष्यमण्डलमण्डितो मुनिचन्द्रयतिपतिः कुम्भकारशालायामतिष्ठत् । तच्छिष्यान् दृष्ट्वा गोशालोऽपृच्छत्—भवन्तः के सन्ति?, ते जगदुः—वयं निर्ग्रन्थाः श्रमणाः स्मः । पुनराचष्ट गोशालः—यूयं क्व ?, मामको धर्माचार्यश्च क्व ?, उभयोर्मेरुसर्षपयोः खद्योतगगनमण्योरिव तारतम्यमुपलक्षये । तदाकर्ण्य ते जगदुः—तावको गुरुरपि त्वादृगेव भवितेति श्रुत्वाऽतिक्रुद्धो भवन्नेवमाख्यत्—रे ! मामकं गुरुमाक्षिपन्ति भवन्तस्तर्हि भवदाश्रमो भस्मीभवतु । तैरप्यगादि—त्वादृशां शापान्मनागपि न बिभीमः । गोशालः सर्वमेतद्भगवन्तमुवाच । सिद्धार्थो बभाण—नैतेषामाश्रमो धक्ष्यते । तस्यामेव रजन्यां मुनिचन्द्रसूरिर्जिनकल्पसाम्यं विदधत्कायोत्सर्गे स्थितः केनचिन्मत्तेन कुम्भकारेण चौर-

भ्रमादघानि । तदैवोत्पन्नाऽवधिको मृत्वा स्वर्गं गतः, तन्माहिमानं कुर्वाणा लेखा उद्योतमकुर्वत । तमुद्वीक्ष्य गोशालोऽवदत्—अहो ! तेषामेव गुर्वाक्षेपिणामुपाश्रयो दह्यते । सिद्धार्थो जगौ-किं मोदसे, नायमुपाश्रयो दह्यते, किन्तु मुनिचन्द्रः स्वर्याति, तदर्थं सुरकृतः प्रकाशो ज्ञायतामिति विलक्षीभूतो गोशालस्तत्र गत्वा, तदन्तेसदस्तिरस्कृतवान् ।

तदनु प्रभुश्चौरानगरीमाजगाम । तत्र तावुभौ हेरिकौ मत्वा, प्रथमं गोशालं राजकीयाः पुरुषाः कूपगर्त्ते क्षिप्त्वा, यावत्प्रभुं क्षेप्तुमुद्यतास्तावत्तत्रोत्पलस्वसारौ सोमा जयन्ती नाम्न्यौ गृहीतचारित्रं त्यक्त्वा, परिव्राजिकीभूते भगवन्तमवलोक्य तावमोचयताम् । ततः प्रभुः पृष्ठचम्पामागात्, तत्र चतुर्मासिकक्षपणेन प्रावृट्कालमतिवाहितवान्, पारितवाँश्च ग्रामाद्बहिः (४) ततो विहरमाणः प्रभुः कायङ्गलसन्निवेशमागतवान् । तत्र माघमासीयजागरणादिने दारिद्र्य स्थविरनामानौ पाखण्डिनौ नृत्यन्तौ गायन्तौ च विलोक्य, गोशालो जहास । तेन कुपितौ तौ गोशालमाधिकं जघ्नतुः, प्रान्ते भगवच्छिष्यं मत्वा मुमुचतुः । ततः स्वामी श्रावस्तीनगरीमायातः, अतिष्ठच्च कायोत्सर्गे । तत्र सिद्धार्थो गोशालमाख्यत्—त्वमद्य नृपलमशिष्यसि । गोशालस्तदुक्तिमलीकयितुं प्रयतमानस्तद्दिने गोचर्यै सुश्रावकसदने प्राविशत् । तद्गृहपतिः पितृदत्तनामा वणिगास्ति, तस्य पत्नी श्रीभद्रा नाम्नी वर्त्तते, सा मृतवत्साऽऽसीत् । तामेकदा शिवदत्तनैमित्तिक उपादिशत्—भद्रे ! मा शोचीः, यदि मृतडिम्भकस्य पलं पायसेन सह पक्त्वा कस्मैचिद्भिक्षवे दास्यसि, तर्हि ते पुत्रा जीविष्यन्तीति पुत्रजीविकोपायं श्रुत्वाऽवसरं प्रतीक्षमाणा तयोक्तविधिना पाचितं पायसं गृहाऽऽगताय गोशालाय दत्तवती । गोशालोऽपि तदाश, विवेद च यच्छ्रमणोपासिनां श्राद्धानां सद्मनि मांसभक्षणं गगनकुसुमकल्पमेवास्तीति सिद्धार्थवचो मुधा जातम् । पश्चादागत्य सिद्धार्थमब्रवीत्—यदद्य पायसमभुञ्जि, तवोक्तमलीकमभूत् । सिद्धार्थोऽवदत्—

यदद्य पायसमभुञ्जि, तवोक्तमलीकमभूत् । सिद्धार्थोऽवदत्--नहि ! ! नूनं पलमभुङ्क्थाः, गोशालो गलान्तरङ्गुलीं दत्त्वा ववाम, तदा मांसखण्डानि छर्दने विलोक्य प्रकुपितः पुनस्तत्राऽऽगात् । परन्तु सा तु प्रागेव तच्छापभीत्या द्वारपरावर्त्तनमकृत । तद्द्वारमनुपलभ्य सकलमेतत्पाटकं मदीयधर्माचार्यस्य तपस्तेजोमाहिम्ना दह्यतामिति शशाप, तदैव भगवन्माहात्म्यगौरवार्थं तत्पाटकं देवो ददाह । ततः प्रभुर्दरिद्रसन्निवेशमागत्य बहिः प्रतिमया तस्थौ । तत्रैव पान्था अग्निं प्रज्वालयामासुः, भगवाँस्तु मनागपि नाऽपससार । तेन भगवच्चरणौ दग्धौ विलोक्य गोशालोऽनश्यत् । ततो मङ्गलग्राममायातो विभुर्वासुदेवसदने प्रतिमया तस्थौ । गोशालो लोचने व्याघुट्य डिम्भान् भापयामास । तेन रुष्टास्तत्पित्रादिजना आगत्य गोशालं निघ्नन्तो मुनिपिशाचोऽयमिति कथयन्तस्तत्यजुः । ततः प्रभुरावर्त्तग्राममागत्य बलदेववेश्मनि कायोत्सर्गेण तस्थिवान् । तत्रापि गोशालः शिशून्मुखसङ्कोचादिना भीषयाञ्चकार, तेन प्रचण्डास्तत्पित्रादयः समागत्य गोशालं ग्रथिलं मत्वा भगवन्तमेव हन्तुमुद्यता अभूवन्, तावद्बलदेवमूर्त्तिरेव हलेन हन्तुकामाँस्तान् न्यवीवरत्[1] । भीतास्ते सर्वे जनाः स्वामिनं प्रणेमुः । ततो विहरमाणः प्रभुः स्वीयप्रभूतक्लिष्टकर्माणि निर्जरयितुं लाटदेशमागच्छत् । तत्रत्या अनार्यलोकाः प्रभुमुपदुद्रुवुः, सर्वं सोढम् भगवता । ततो विहृत्य पूर्णकलशाभिधानाऽनार्यग्रामं जिगमिषोर्भगवतः पथि द्वौ चौरौ मिमिलतुः । एतौ प्रभुं विलोक्याऽपशकुनशङ्कया खड्गेन हन्तुमधावताम् । तदा प्रयुक्ताऽवधिना सुरनायकस्तत्रागत्य पविना तावहन् ।

बह्वपायं सहमानो भगवाँश्चौराकसन्निवेशमागात् । तत्रैकत्र मण्डपे लोकैः पापच्यमानं भोज्यमनेकविधं विलोक्य, भूयो भूयस्तिरोभूय व्य-

---

[1] कियत्पुस्तके हन्तुं प्रवृत्तयोस्तयोः पादौ व्यष्टभदित्यलेखि ।

लोकत गोशालः । लोकास्तथापश्यन्तं गोशालं चौरोऽयमित्यवधार्य भृशमघ्नन् । सोऽपि तदुपरि भृशं कोपाटोपं वितन्वन् भगवन्नाममहिम्ना ससामग्रीकं मण्डपमदीदहत् । ततः प्रभुः कलम्बुकासन्निवेशमैत् । तत्र मेघकालहस्तिनामानौ द्वौ भ्रातरौ स्तः । कालहस्तिना प्रभुरुपद्रुतो मेघेन तूपलक्ष्य बाढं क्षमितः । ततः प्रभुर्भद्रिकापुरीमेत्य पञ्चमीं चतुर्मासीमकरोत्, व्यधाच्च नगराद्बहिश्चतुर्मासक्षपणपारणम् ( ५ ) तत आजगाम भगवाँस्तम्बालग्रामम् । तत्र पार्श्वनाथसान्तानिकनन्दिषेणाचार्यस्य शिष्यैः सह कृतकलहो गोशालः सहोपाश्रयेण मदीयधर्माचार्यमहिम्ना भस्मसाद्भवत्वित्यशपत् । परन्त्वदूषितसंयमाराधनप्रभावेण तच्छापस्तेषां नाऽलगत् । तस्यामेव रजन्यां प्रतिमास्थितो नन्दिषेणाचार्य आरक्षकपुत्रेण चौरधिया भल्लास्त्रेण निहतः समुद्भूतावधिज्ञानः स्वरगात् । तदा देवकृतमुद्योतं विलोक्य मुदितङ्गोशालं सिद्धार्थोऽजल्पत्— मूर्ख ! स्वर्यातस्य नन्दिषेणाचार्यस्य महोत्सवविधित्सया समागतदेवगणकृतोद्योतोऽस्तीति श्रुत्वा गोशालो वैलक्ष्यमापत् । ततः स्वामी कूपिकसन्निवेशमागतश्चौरिकशङ्कया लोकैर्गृहीतः पार्श्वनाथीयसाध्वीभ्यां संयमपालनाऽसक्तत्वात्तापसीभूताभ्यां विजयाप्रगल्भेतिसंज्ञाभ्याममोचि । तत्र गोशालः प्रभुणा सह विहरणे बाढं क्लिश्ये, अतो मया पृथग्भूय विहर्त्तव्यमित्यवधार्य, स्वामिना पृथगेव विजहार द्वितीयेनाऽध्वना । मार्गे च मिलिता चौराणां पञ्चशती ‘ मातुल मातुल ’ इत्यालपन्ती गोशालस्कन्धमारुरोह । तद्भारभरेण चेखिद्यमानो धाव धावेति तैः प्रेर्यमाणो गोशालो यदेकाकी विहरँस्ततोऽप्यधिकं दुःखमनुभवामीति शुशोच । अतोऽहं पुनः प्रभुणा सहैव विचरेयं चेद्वरमित्थं निश्चित्य भगवन्तमन्वेष्टुमारेभे । इतश्च प्रभुरपि वैशालीपुरीमागत्य लोहकारशालायां प्रतिमया तस्थिवान् । तच्छालाधिपतिरयस्कारः प्राक् षण्मासान् रुजार्त्त आसीत्पश्चाल्लब्धनैरुज्यः शुभवेलायां स्वोपकरणं लात्वा तत्राऽऽगात् ।

भगवन्तमुदीक्ष्य हन्त ! जातमपशकुनमितिधिया घनेन निहन्तुं यावदेच्छत्तावच्छक्रः प्रयुक्ताऽवधिको विदित्वा प्रभोः कष्टं, तूर्णमागत्य तेनैव घनेन तमहन् । ततो भगवान् यामाकसन्निवेशमाययौ । तत्रोद्याने तस्थुषः प्रभोर्महिमानं प्रैदिधद् बिभेलकयक्षः ।

५५ कटपूतनादेवीकृतोपसर्गः—

ततो विहृत्य शालिशीर्षनगरमागत्य बहिरस्थात्कायोत्सर्गेण प्रभुः । तत्र शिशिरर्त्तौ दुःसहतरां शैत्यपीडां सासहाञ्चक्रे । तथाहि—पुरा त्रिपृष्ठवासुदेवभवे परिभूता काचित्स्त्री बहुभवसन्ततिमेत्य कटपूतनाऽऽख्यव्यन्तरी सम्भूता प्राक्तनं वैरं स्मरन्ती प्रभुमवधिना ज्ञात्वा, तापसीरूपं कृत्वा निजजटाभिः प्रभोरुपरि वारिधारां चिरमवर्षत्, प्रचण्डवातमवीवहत्, मेघेन जलवृष्टिमप्यचीकरत्प्रान्ते च प्रभुमचलं मत्वा, तत्पादयोः पतित्वा निजाऽपराधं क्षमयन्ती तोष्टवाञ्चकार । इतरैः सोढुमशक्यमप्येतत्कृतमतिभीषणमुपसर्गं सासह्यमानस्य षष्ठेन तपसा विशुद्धस्याऽवधूतसञ्चितकर्मणो भगवतस्तदैव लोकावधिज्ञानमुत्पेदे ।

ततः परावर्त्तमानो विभुर्भद्रिकानगरीमासाद्य, षष्ठ्यां प्रावृषि तस्थिवाँश्चातुर्मास्यम् । तत्र तपोविविधानाभिग्रहाँश्च चर्कराञ्चकार । तत्र षण्मासेभ्यः परस्ताद् गोशाल आगत्याऽमिलत् । तत्र भगवाँश्चतुर्मासपारणं बहिरागत्य व्यधात् (६) । तदनु प्रभुरष्टौ मासान् निरुपसर्गो मगधदेशएव विचचार । तत आलम्भिकानगरीमुपेत्य बहिर्देवकुले सप्तमीं चतुर्मासीं चतुर्मास्यतपोविधानेनाऽतिवाह्य पारयित्वा च कुण्डगसन्निवेशमागत्य, वासुदेवचैत्ये प्रतिमयाऽतिष्ठन्महावीरः । गोशालोऽपि वासुदेवमूर्त्तितः पराङ्मुखीभूय तस्थौ, मुखाधिष्ठानकरणादर्चकादयः पादेन यष्ट्यादिना चाऽतिनिहत्य मृतप्रायं कृत्वा मुमुचुः । कृतविहारः प्रभुर्मर्दनग्राममागत्य बलदेवचैत्ये कायोत्सर्गेण तस्थौ । तत्रापि दुर्धीः स गोशालो बलदेव-

प्रतिमामुखे मेहनं प्रक्षिप्य तस्थौ, तेन लोका बाढं कुट्टयित्वा मृतकल्पं ज्ञात्वा तत्यजुः ( ७ ) क्रमेण प्रभुरुन्नागसन्निवेशमाययौ, मार्गे चाभिमुखमागच्छन्तौ कौचिद्दन्तुरौ वधूवरौ प्रेक्ष्य मंखलीसूनुरुपहसितवान् । तेन रुष्टास्ते तमत्यर्थमताडयन्, अक्षिपँश्च वंशजाल्याम् । ततो विहरमाणः प्रभुरेकदा पुरिमतालनगरमीयिवान् । तत्र नगराद्बहिः शकटमुखोद्याने प्रतिमया तस्थौ । तस्मिन्नगरे वग्गुरनामा श्रेष्ठी निवसति, सुसुभद्राख्या तत्पत्न्यस्ति । तौ च मल्लिनाथप्रसादात्पुत्रं लब्ध्वा तत्रोद्याने नवं भव्यं जिनालयं निर्माप्य, तत्प्रतिमाश्च विधिवत्प्रतिष्ठाप्य नित्यमभ्यर्चतः । तदवसरे वीरविभोरग्रे समायातः शक्रः । प्रभोर्महिमानमेधयितुं तावेवमाख्यत्–श्रेष्ठिन् ! यं प्रत्यहं पूजयसि तमधुना युवां दर्शयाम्यत्रागच्छतमित्याभाष्य तत्रानीय प्रभोः क्रमाब्जयोरपीपतत् । तौ दम्पती च वीरविभुमतिभक्त्या संपूज्य मल्लिनाथं पोपूजाञ्चक्रतुः । ततः प्रभुर्गोभूमिं गत्वा राजगृहनगरीमाप । तत्र चतुर्मास्यं तपः कुर्वाणश्चतुरो मासानत्यैत्, अकार्षीच्च बहिः पारणम् ( ८ ), ततो वज्रभूमिमागत्य बहवो विघ्नाः पतन्तीति कृत्वा भगवान् प्रावृट्कालं सकलं तत्रोषितवान्, अनुष्ठितवाँश्च चातुर्मासिकंतपः, विहितवाँश्च बहिः पारणम्, विहृतवाँस्तत्रैव, ततः परं मासद्वयं वसतेर्विरहान्नवमश्चातुर्माससमानियतमकृत ( ९ ), ततो विहृत्य कूर्मग्राममाव्रजन्नध्वनि तिलस्तम्बमेकमालोक्य गोशालोऽपृच्छत्–भगवन् ! अस्मिन् स्तम्बे तिलाः फलिष्यन्ति न वा ?, प्रभुर्जगौ–एतद्गताः सप्तापि जीवा मृत्वा खल्वेकस्यां शम्बायां निष्पत्स्यन्ते तावन्तास्तिलाः । इति श्रुत्वा भगवदुक्तं मुधा जायतामिति धिया तं तिलस्तम्बमुत्पाट्य गोशालः क्वचिदन्यत्राऽक्षिपत्, परन्तु प्रभुवाक्यमलीकं माभूदिति हेतुना शासनदेवता जलमभिवृष्य गोखुरादिना कर्दमप्रदेशे तमतिस्थिरत् ।

५६ वैश्यायनतापसोत्पत्तिर्गोशालस्य तेजोलेश्यासाधनञ्च—

ततो विभुः कूर्मग्राममाजगाम, तत्रैको वैश्यायननामा तापसो निवसति । तदुत्पत्तिश्चैवम्—राजगृहचम्पापुरीनगर्योरन्तराले गुर्वराख्य-नामा ग्रामोऽस्ति । तत्र कौशम्बीनामा कोऽप्येकः कौटुम्बिको वसति । तत्रैकदोपगुर्वराख्यग्रामाद् बहिर्नृपान्तरीयश्चतुरङ्गसैन्यमागात् । तद्भीत्या पौराः कान्दिशीका दश दिशासु प्लायाञ्चक्रिरे । तत्रैकामतित्रस्तां सपुत्रां नश्यन्तीं स्त्रियं दृष्ट्वा चौरा अध्वनि बलादग्रहीषुः । बालं चोपग्राममत्य-जन्नितस्ततो भ्राम्यन्तं रुदन्तं तं डिम्भं कौशम्बी कौटुम्बिको निरपत्य-त्वादादाय पुत्रीचक्रे । तन्मातरं च चम्पापुर्यां कस्याश्चिद्रूपाजीवाया हस्ते ते चौरा व्यक्रीणन् । सोऽपि शिशुः क्रमेण यौवनमापन्नश्चम्पापुरीं व्यापर्त्तुमागात् । तत्र पण्यस्त्रीभूतां स्वमातरमज्ञानादभुङ्क्त । ततः प्रतिरात्रं तां भोक्तुमारेभे, तमेकदा शिक्षयितुं तन्मार्गे सवत्सागौर्भूत्वा तत्कुलदेवी तस्थौ । सोऽपि तदालयं गच्छन्मार्गे तिष्ठतो वत्सस्य पुच्छो-परि पादं ददौ । तदा वत्सो गामुवाच—मातः ! एष जनो मल्लाङ्गूलोपरि पादं ददानो व्रजति । गौरब्रवीत्—वत्स ! एतस्य नामापि मा लासीः, यदयं प्रत्यहं स्वजननीं भुञ्जानो मनागपि पापान्न बिभेति; तर्हि त्वां कामान्धीभूतो नाऽपश्यत्तत्र किमाश्चर्यम् ? । तयोर्भाषणं निशम्य स शि-शुस्तामप्राक्षीत् । गौरपि प्राक्तनमशेषं वृत्तं नृगिरा तमब्रवीत् । तच्छ्रुत्वा स वैराग्यात्तापसो जज्ञे, पप्रथे च लोके वैश्यायननाम्ना । स च तरोरधस्ता-दधोमुखीभूय नीचैर्ज्वलन्तमग्निं सेवमानस्तपस्याति, उदपादि च तस्य तेजोलेश्या ।

तत्रावसरे वीरविभुस्ततोऽन्यत्र व्यहरत, तदनु गोशालोऽप्यचलत् । तत्र काले वैश्यायनः स्वजटाजूटादधः पतितान् यूकान् पुनर्जटाजूटमध्ये निदधान आसीत् । तथा कुर्वाणं तमालोक्य गोशालोऽवदत्—रे ! यूकाल-यमात्रोऽसि, त्वयि मुनितां तु नैव पश्यामि । त्रिवारमीदृगुक्तमुपहासवचः

श्रुत्वा, चोकुप्यमानो वैश्यायनर्षिर्गोशालोपरि तेजोलेश्यामसुचत्। तया च दन्दह्यमानं गोशालं भगवाञ्छीतलेश्यया तत्रे । ततस्तापसोऽपि प्रभुं महान्तं विदित्वा स्वापराधं क्षमयन्ननंसीत् । तदनु गोशालः प्रभुमप्राक्षीत्–प्रभो ! अहमेनां विद्यां सिषाधयिष्यामि, अतो भवान् प्रसद्य मां तत्साधनविधिं शिक्षयतु । तदभ्यर्थनया प्रभुः पयःपानं विलेशयस्येव तस्य तमशिशिक्षत्–श्रूयताम्, सदैव तत्साधक आतापनां विदधाति, षष्ठं तपश्च कुरुते, मुष्टिमात्रस्विन्नमाषेण चुलुकमात्रोष्णवारिणा च तत्पारणं विधत्ते । अमुना विधिना षण्मासान् आराधयति, तदा सा सिध्यति। अथ भगवान् कूर्मग्रामात् सिद्धार्थपुरमागच्छन्मार्गे तस्मिँस्तिलस्तम्बे तिला नोत्पेदिरे इति गोशालेन परीपृच्छ्यमानः प्रभुराख्यत्–अवश्यं स तिलस्तम्बः फफालैव । तदा गोशालस्तां तिलशम्बां विदार्य सप्ततिलानुत्पन्नान् प्रेक्षाञ्चक्रे । तत एव स किलैतन्निरचिनोत्–यदेकस्मिन्नपि देहे पुनः पुनरुत्पद्यन्ते जीवा इति । स गोशालः प्रभोः पृथग्भूय श्रावस्तीमागत्य, कुम्भकारशालायां स्थित्वा भगवदुक्तविधिना तेजोलेश्यां साधयित्वा, त्यक्तव्रतात्पार्श्वनाथशिष्यादष्टाङ्गनिमित्तशास्त्रमप्यध्यैष्ट। ततोऽतिगर्वं वहन् सर्वज्ञोऽस्मीति प्रथयितुं लग्नः ।

५६ भगवतः सङ्गमसुरकृतोपसर्गः—

अथ प्रभुः श्रावस्तीपुरीमागात्, तत्र च प्रावृषि न्यवात्सीत्, कृतवाँश्च विविधानि दुष्कराणि तपांसि ( १० ) ततो विहरमाणः प्रभुर्बहुम्लेच्छजनाकीर्णां कठिनभूमिमायातः । तत्र प्रथमं पोलासग्रामाद् बहिः पोलासचैत्येऽष्टमभक्तेन रजनीमेकां प्रतिमयाऽतिष्ठत् । तदवसरे सुरनायकः सभासीनः प्रभुमेवं प्राशंसीत्–यदधुना वीरविभोर्मनःक्षोभयितुं

---

१ तेजोलेश्यासाधनविधिं सिद्धार्थव्यन्तरो गोशालमचकथदिति किरणावल्यां यदभ्यधायि, तत्तु हेयमेव । यतः—भगवतीसूत्राऽऽवश्यकचूर्णिका–हारिभद्रीवृत्ति–हेमचन्द्रकृतवीरचरित्रादिकतिपयग्रन्थेषु भगवानेव तमाख्यदिति स्पष्टमुल्लिलेख ।

त्रिलोक्यामसुष्यां सुराऽसुरनराणां मध्ये कोऽपि नैव शक्नोति । तन्निशम्य कश्चित्सङ्गमाभिधः सामानिको देवः सुराधीशसभायां प्रतिज्ञातवान्—स्वामिन् ! किमेवं ब्रूषे ? अहमधुनैवाऽतिदृढमपि तन्मनः कदलीस्तम्भं वात इव कम्पयामीति प्रतिज्ञाय, स देवः प्रभोः पार्श्वमागत्य प्रथमं रजांसि ववर्ष, तेन प्रभुर्निरुद्धनासाऽक्षिकर्णरन्ध्रः समुच्छ्वसितुमप्यशक्तोऽभवत् १, ततः प्रभुर्देहं वज्रतुण्डपिपीलिकादिना चालनीकल्पमचीकरत् २, वज्रसोदरमुखनिर्मितदंशैः प्रभोरशेषगात्रमदद्दंशत् ३, तीक्ष्णमुखाभिर्घृतमीलिकाभिः सर्वाङ्गमदंशयत ४, वृश्चिकीभूय युगपदेवसहस्रशो दन्दशाञ्चक्रिरे ५, ततो नकुलीभूय भगवदङ्गानि नखैर्मुखैश्च दादराञ्चकार ६, व्यालीभूय भगवन्तं दंदशाञ्चकार ७, ततो मूषकरूपेण भगवदङ्गानि चखाद ८, दन्तिनः करिण्यश्च भूत्वा करैर्जङ्घनामासुः, उन्निन्यिरे च ९, चरणैश्च भूयो भूयो मर्दयामासुः, दन्तांश्च प्रजरीहराञ्चक्रुः १०, ततः पिशाचो भूत्वाऽट्टाट्टहासं विलन्वानः प्रभुं चिरमबीभपत् ११, महाव्याघ्ररूपेण प्रभुगात्राणि नखराभिर्दंष्ट्राभिर्विददार १२, भगवन्मातापित्रो रूपेण भगवदग्रे सकरुणं चिरं विलपँश्चुक्रोश १३, स्कन्धावारो भूत्वा भगवच्चरणयोर्मध्ये दहनं प्रज्वाल्य तण्डुलादिकमपाक्षीत् १४, ततश्चण्डालरूपेणाऽतितीक्ष्णतुण्डानतिक्रूरान् पक्षिणः विकुर्व्य प्रभोरशेषाङ्गमभक्षयत् १५, प्रचण्डोद्धतमहावातेन शैलशिखराण्यपि पातयन् क्षितिमपि कम्पयन् भगवन्तमुन्नायमुन्नायमपीपतत् १६, तत उत्कलिकावातो भूत्वा भगवन्तं चक्रवद्विभ्रमत् १७, मेरुचूलाक्षोदक्षं सहस्रभारमात्रं शिलाचक्रं भगवदुपरि मुमोच, तेन च भगवानाजानुभूमिमग्नतामुपनीतः १८, ततः प्रभातप्रायं विकृत्य जगाद—आर्य ! जातं प्रभातम्, अतस्तूर्णमुत्तिष्ठ । भगवाँस्तु ज्ञानप्रयोगाद्रजनीमेव वेविदीति १९, ततो दैवीं विविधां सम्पदं वितत्य वावदीति स्म—मुनिपुङ्गव ! वरं वरय, यदीच्छसि तन्निगद्यताम् । स्वर्गं मोक्षं वा लि-

प्लसिं १, तथाप्यचलमेव प्रभुमवलोक्य सुरयुवतिरूपं विकृत्य, नानाविधहावभावकटाक्षादिना प्रभुमनश्चालयितुं प्रायतत २०; इत्थमेकस्यामेव रजन्यामितरजनाऽसुविनाशिनामुपसर्गाणां विंशतिमचरीकरीत्। तत्सर्वं सासह्यमानः प्रभुर्महाशैलराडिव मनागप्यकम्पमानो ध्यानद्रढिमानमेव बाभजाञ्चके। अत्रैवमुत्प्रेक्षते कविः—प्रभुजगदुत्पत्तिलयस्थितिकरीमतुलां शक्तिं बिभ्रदपि यत्कृतापराधे सङ्गमसुरेऽनुकम्पां चकर्थ, तेनैव हेतुना कुपितकामिनी नायकमिव भगवन्मानसं विहाय नूनं निर्गतैवेति मन्ये।

इयत उपसर्गान् कृत्वाप्यतुष्यन् सङ्गमदेवो यत्र यत्र प्रभुर्गोचर्यै निरेति, तत्र तत्र सद्मनि प्रासुकमप्याहारमकल्प्यमकरोत्। लोकानां गृहेभ्यो धनानि वसनानि च मुषित्वा प्रभुपार्श्वे मुक्तवान्, लोकाः प्रभुसमीपे स्वस्वस्वापतेयमुदीक्ष्य चौरोऽयमिति वाढं निहत्य कलङ्कयन्ति स्म। शिष्यीभूय लोकानां सदने छन्नतया परिपश्यन् लोकैर्लक्षितः खल्वेवमुवाद, यदहं तदन्तेवासी स मे गुरू रात्रौ चोरयिताऽतोऽहं पश्यामि कुत्र किमस्ति। तन्मुखादेतच्छ्रुत्वा सत्यमेवेति मन्यमाना लोका आगत्य प्रभुमघ्नन्। इत्थं जाजायमानमुपसर्गम्पश्यन् भगवानेवमभ्यग्रहीत्—यावदीदृशा विकटा उपसर्गा मे जायन्ते, तावदहं न भुञ्जीय, नो वा पिबेयम्। एवं सङ्गमसुरकृताऽकल्प्याऽऽहारप्रमुखनानाविधोपसर्गं सासह्यमानः प्रभुः षण्मासीं निरशन एवाऽस्थात्। तत एकदा तं दुर्धियं गतप्रायं मत्वा, प्रभुर्यावद् व्रजग्रामगोकुले गोचरीमादातुमागात्। तत्रापि तावदाहारमनेषणीयं विहितवान् प्रतिगेहं स दुर्मतिः। ततस्तथैव पश्चादागत्य बहिः कायमुत्सृजन्नतिष्ठत्। तदेत्थमुपद्रुतो भगवान्मनागपि नैव चस्खालेति मत्वा, विशुद्धपरिणामं त्रिभुवनजनपरिपूज्यं भगवन्तमवधिना विदित्वा, दोदूयमानमना अधमाधमः सङ्गमः कथमपि सौधर्मं प्रत्यचलत्। भगवानपि तत्रासन्नगोकुले समागत्य कयाचित्स्थ-

विरया वत्सपाल्या प्रतिलम्भितेन परमान्नेन पारणमचरीकरीत् । व्यधुश्च देवताः पञ्चदिव्यानि । एतावन्तं कालं सौधर्मवासिनः सर्वे देवा देव्यश्च चेखिद्यमाना नो मुमुदिरे, नवोत्सेहिरे किमपि विधातुम्, नृत्यगीतादि-सर्वमौज्झत्तावदिन्द्रः, मत्कृता प्रशंसैव प्रभोरियतां क्लेशानां निदानम-भूत्; इति पश्चात्तापं विदधत्पाणिकमलतलन्यस्तवदनः शोशुच्यमानो दीन-दृष्टिस्तस्थौ । अथाऽपूर्णप्रतिज्ञत्वाद्दीनाननमायान्तं तं सुराधमं वीक्ष्य, पराङ्मुखो भूत्वा देवानेवमाख्यातवानिन्द्रः—एष पापीयान् कर्मणा चा-ण्डालादप्यधमः समेति, एतदवलोकनाद्वयमपि पापिष्ठा भविष्यामः, मत्तो भीतिमगणयन् पापादप्यसौ यन्न बिभाय तदद्भुतं मन्ये । अत एनं पापिष्ठं दुराचारिणं स्वर्गादवश्यमधुनैव निष्काशयत । शक्रादेशं श्रुत्वाऽनेके सुरसुभटा यष्टिमुष्ट्यादिना तं बाढं निघ्नन्ति स्म । सुभटै-र्गलग्राहं निर्गमितश्चौरवत्कान्दिशीको भवन् निर्वाणाङ्गार इव तेजसो-ज्झितो मन्दराचलीयचूलिकामागत्य, स सङ्गमदेवः पत्न्या सह सागरो-पममायुर्व्यत्यैत् । इत्थं प्रभुर्दशमेऽब्दे महोपसर्गपटलीमसाहिष्ट ।

५७ भगवदभिग्रहश्चन्दनबालाऽऽख्यानञ्च—

अथाऽऽलम्भिकानगरीमागत्य हरिकान्तः श्वेताम्बिकार्यां हरिसह-श्चोभौ विद्युत्कुमारेन्द्रौ प्रभुमभिवन्द्य सुखशातमप्राष्टाम् । श्रावस्त्यां स्कन्दप्रतिमायां प्रविश्य शक्रो भगवन्तमभिववन्दे; तेन भगवतो महि-मा वरीवृधाञ्चक्रे । कौशाम्ब्यां चन्द्रसूर्यौ भगवद्वन्दनार्थमवतेरतुः । काश्यां शक्रः, राजगृहे चेशानः, मिथिलायां राजा जनको धरणेन्द्रश्च भगवन्तं सुखशातं परीपृच्छाञ्चक्रिरे । ततः प्रभुः सुखेन विशालामि-याय, तत्र प्रावृषं कालं सकलं निनाय, ववृधिरे च तत्र धर्मध्यानानि । तत्र जीर्णश्रेष्ठी भावनामबीभवत्—प्रभो ! अस्याश्चतुर्मास्यां प्रतिदिनं भक्तपानादेर्लाभं मे ददस्व, इति प्रभुमभ्यर्थ्य सदैव भक्तपानादिकं प्रत्य-

लीलभत्; तथापि तस्य मिथ्यात्विनः पूरणमहेभ्यस्य सदने दासीहस्तलब्ध-स्विन्नकुलमाषैरेव पारणमकृत । तदा जज्ञिरे च पञ्चादिव्यानि । सकलाः पौरा आख्यन्-धन्यतमोऽयं पूरणः, यस्यौकसि भगवान् पारणं व्यधत्त। जीर्णस्तु नितरामचेखिदीत्-नूनमहं भाग्यहीनोऽस्मि, यतो भगवान्म-मौकसि व्रतं नाऽपपारत् । तत्र ग्रामानुग्रामं विहरन्नागात्कश्चित्केवली भगवान् । तत्रत्यो नरपालस्तमप्राक्षीत्-स्वामिन् ! अस्मिन्नगरे भाग्यशाली को वर्वर्त्ति ? केवली जगौ-राजन् ! सर्वतो भाग्यभाजं जीर्णश्रेष्ठिनं जानीहि । पुनरूचे राजा-भगवन् ! भगवते पूरणो हि दानं ददिवान्, स धन्यः सर्वाधिको जातः । जीर्णस्य भाग्यभाक्त्वं कथमभूत् ? केवली जगौ--पूरणो हि भावं विनाऽददात्, अतस्तस्य द्रव्येणैव लाभो जातः । जीर्णस्तु भावतो दानमदित । अतोऽसौ भावदानमाहात्म्यादच्युतदेव-लोकीयमायुरबध्नात् (११) । ततो भगवान् सुसुमारनगरमागच्छत्, तत्र च भगवति प्रतिमया तिष्ठति सति चमरेन्द्रः प्रभुं शरणीकृत्य प्रथम-स्वर्गमगमत् । अवशिष्यते मे किञ्चित्कर्मेति जानानः प्रभुः कौशाम्बीपु-रीमाययौ । तत्र शतानीको राजा, तस्य मृगावती राज्ञी वर्त्तते । विज-याभिधः प्रतिहारी, वादीनामा धर्मपाठकः, सुगुप्तनामा मन्त्री, तत्पत्नी नन्दा श्राविका, मृगावत्याश्च समानवयस्काऽस्ति । तत्र पौषशुक्लप्रति-पदि भगवानेवं नियमं लातवान्-द्रव्यतः कुल्माषान् सूर्पकोणस्थितान्, एकं पादं गृहदेहल्यामपरं बहिरित्थं तिष्ठन्तीति क्षेत्रतः, भिक्षूणामागम-नकालातिक्रान्तवेलायामिति कालतः, निगडबद्धचरणयुगला मुण्डित-मूर्धन्या दासीभूता नृपदुहिता कृताऽष्टमभक्तिका रुदती यदि दास्यति, तदा ग्रहीष्यामि नेतरथेत्यभिग्रहं लात्वा प्रभुः प्रतिदिवसं भिक्षार्थे स-मायाति, किन्तु तादृशदात्रिकाया अभावादनात्तभिक्ष एव परावर्त्तते । मन्त्रिप्रमुखा भगवदभिग्रहपूर्त्तये शतधोपायानकार्षुः, तथाप्यपूर्ण एव तस्थौ । अथैकदा शतानीकः क्षितीशश्चतुरङ्गया चम्वा सह चम्पापुरीम-

रौत्सीत्, तद्भीत्या समराङ्गणाद्दधिवाहनो राजा ननाश । तस्मिन्नष्टे शता-
नीकश्चम्पां लुलुण्ट । नष्टेषु पौरजनेषु धारिणी राज्ञी वसुमत्या दुहित्रा
सत्रा निजशीलजीवितयोस्त्राणाय पलायेताम् । मार्गे कश्चिच्छतानीक-
पत्तिस्ते मातापुत्र्यौ बन्दितया निगृह्य जगाद—अयि ! भार्या मे भव,
नो चेद्धनिष्यामीति । वज्रोपममतिगर्हितं तद्वचो निशम्य तत्कालमेव
जिह्वां सम्मर्द्य सुखेनाऽसून् औज्झत् । पत्तिर्दध्यौ—इयमपि मातेव मारिष्य-
त्यत एनां विक्रीणानि चेद्वरम्, इत्यवधार्य वसुमतीमाश्वास्य, कौशाम्बी-
मानीय चतुष्पथे विचिक्रीषया तस्थौ । तत्र प्रथममेका काचिदक्का तां
क्रेतुमागतवती । वसुमती तामपृच्छत्—त्वं कासि, का च ते वृत्तिः ?
तयोक्तम्—सुन्दरि ! मां रूपाजीवां जानीहि, उत्तमैः पुरुषैः सङ्गतिश्च
मामकीवृत्तिरस्ति । तच्छ्रुत्वा वसुमत्यवक्—नाऽमुं चिकीर्षामि गर्हिता-
चारम् । तथापि सा वेश्या बलात्तां क्रेतुमैच्छत् । तदवसरे शासनदेव्या
विच्छिन्नकर्णनासिका साऽक्का रोरुद्यमाना क्वचिदनश्यत् । तदनु धन-
वाहनामा कश्चिन्महेभ्यस्तत्राऽऽगात् । स तामुचितमूल्येनाऽक्रीणात्,
गृहमानीय ' चन्दना ' इति नाम धृत्वा पुत्रीधिया स्थापितवान् । गुण-
गणैर्विभूषिता सा श्रेष्ठिनः प्रीतिभाजनमजायत । एकदा स्वपादौ धाव-
न्त्याश्चन्दनाया रूपेणाऽप्सरस इव भासमानाया भूमौ लुठन्तीं वेणीं
गृहीत्वा तदुपरि धृतवान स श्रेष्ठी । तदालोकमाना मूलाभिधाना जन्म-
वन्ध्या तत्पत्नी मनस्याचिन्तयत्:-हंहो ! इयं तरुणी लोकोत्तरवपुःश्रिया
सकला अपि ललना अधःकुर्वती नूनं भविष्यति श्रेष्ठिनः प्रेयसी मे
सपत्नीति । अतश्चन्दनोपरि द्वेषमुद्वहन्ती किलैकदा श्रेष्ठिनि ग्रामान्तरं
प्रयाते लब्धाऽवसरा सा तां चन्दनामञ्जसा शिरोरुहान् भ्रमरीनिभान्
वापयित्वा, हस्तौ पादौ च शृङ्खलितौ विधाय, शणसूत्रमयीं शाटीं परि-
धाप्य, कोष्ठके क्षिप्त्वा द्वारकपाटं दृढीकृत्य पित्रालयमगात् ।

चन्दना स्वकर्म निन्दन्ती परमेष्ठिमन्त्रान् सास्मराञ्चक्रे । ततश्च-

तुर्थदिवसे स श्रेष्ठी पश्चादागत्य चन्दनामपश्यन् प्रातिवेश्मिकाञ्जनान् पप्रच्छ। परन्तु तत्पत्नीकलहभीत्या कोऽपि तथ्यं जानन्नपि नाख्यत्, तदा काचिदेका वृद्धा तत्पत्न्या कृतां चन्दनायाः कदर्थनामचकथत्। ततः श्रेष्ठी कथमपि कपाटमुद्घाट्याऽन्तः प्रविश्याऽतिदुर्दशामापन्नां चन्दनामालोक्य, निष्काश्य देहल्यामेकः पादोऽन्तर्द्वितीयः पादो बहिर्यथातिष्ठेत्; तथोपावेश्य निजगाद–वत्से ! तिष्ठ, अहमधुनैव निपुणमयस्कारमानीय तव निगडं भञ्जयिष्यामि। चन्दना वदति–तात ! क्षुन्मामधिकं बाधते। तच्छ्रुत्वा सूर्पाऽस्त्रे कुल्माषानर्पयित्वा लोहकारमानेतुं बहिर्ययौ। तदा चन्दना भावयति–यदस्मिन्नवसरे कोऽप्यतिथिरागच्छेत्, तर्हि तस्मै प्रदाय स्वयं भुञ्जे। तदा मध्याह्नाऽतिक्रमे जाते वीरविभुर्गोचर्यै समागतमुदीक्ष्य, प्रमुदिता चन्दना भगवते कुल्माषाँस्तदवस्थैव दातुमकामयत, तावद् गृहीताऽभिग्रहेषु रोदनमपश्यँस्तदलात्वैव प्रभुः परावर्त्तत। भगवति परावृत्ते सा तद्दुःखाद्रोदितुमारभत–हन्त ! धिङ् मां पापीयसीं भाग्यविहीनाम्, यतः साधुरपि मद्धस्तादाहारं नाऽग्रह्णात्। ततः सकलाऽभिग्रहपूर्त्तिमवलोक्य परावर्त्य च तदाहारमाददात्, देवाः पञ्चदिव्यानि प्रकटयाञ्चक्रुः, शुशुभे च शिरसि समुद्गता वेणी, पादयोर्निगडौ भग्नौ भूत्वा नूपुरौ कङ्कणौ च बभूवतुः। प्रादुरासीत्सौधर्मेन्द्रः, शतानीकनरपतेः प्रेयसी मृगावत्यपि कथञ्चिदुपलभ्य मातृष्वसृत्वाच्चन्दनां द्रष्टुं तत्राऽऽगतवती। तत एव सम्बन्धाद्वसुधाराधनमादित्सुं शतानीकं निवार्य चन्दनाऽऽज्ञया तद्धनं धनवाहाय दत्वा, यदैषा चन्दना वीरविभोः प्रथमा साध्वी भविष्यति, तदा तदुत्सवे किलैतद्धनं व्येतव्यमित्यभिधाय शक्रः स्वस्थानमगच्छत्। इतश्च कस्यचिन्मुखाद् गृहे वसुधारावृष्टिं निशम्य सा मूला त्वरमाणा तज्जिघृक्षया पितृसदनात्समागत्य तत् स्वापतेयं यावद् गृह्णाति, तावद्दहन उदगच्छत्तेन तस्या वसनं दग्धम्। देवगणैर्निर्भर्त्स्यमाना विच्छायवदना सा मूला तात्रपाञ्चक्रे।

५८ भगवतःश्रवसोर्गोपालकृतशङ्कुकीलनम्—

अथ विहरमाणः प्रभुर्जृम्भिकानगरीमाययौ । तत्र शक्रः समेत्य नाटकं कृत्वा प्रभो ! इयता कालेन तवोत्पत्स्यते ज्ञानमित्याभाष्य स्वस्थानमियाय । ततः प्रभुर्मेंढिकग्राममासस्साद । तत्र च चमरेन्द्रः सुखशातं प्रष्टुमागात् । तदनु चम्पापुरीमागत्य प्रभुः स्वातिदत्तविप्रवेश्मनि प्रावृषश्चतुरोमासानुवास (१२) । तत्र च बहिः कृतपारणः प्रभुः षाण्मानिकग्राममाययौ । ग्रामाद् बहिरेकत्र कायोत्सर्गेणाऽतिष्ठत् । तत्रैको गोपालो वृषान् मुक्त्वा गृहं गतवान् । पुनश्चिरेणागत्य प्रभुमप्राक्षीत्—आर्य ! अत्र मुक्ता वृषभाः कुत्राऽगमन् ?, प्रभुस्तु प्रतिमास्थत्वान्नोत्तरं ददौ । तदा चोत्कुप्यमानो गोपः प्रभोः श्रवसोः काष्ठशलाके तथा कीलितवान्, यथा न कोऽपि पश्येत्, नैव केनाचिदाकृष्येताम् । तेन भगवतो महती वेदना प्रादुरासीत् । एतत्कर्म पुरा भगवाँस्त्रिपृष्ठवासुदेवभवे शय्यापालकस्य कर्णयोरत्युष्णत्रपुनिधापनेनाऽबध्नात्, स एव च शय्यापालको भवपारम्पर्येण गोपालोऽभूत् । अनुसन्धाय च प्राक्तनं तद्वैरं भगवतोऽप्येवमकरोत् । तदुद्भूतप्रभूतप्रपीडनेन कृशीभूतः प्रभुस्ततो विहृत्य मध्यमायामपापायां पुर्यामाजगाम । तत्र च सिद्धार्थमहेभ्यस्य गृहे भिक्षितुमागात्प्रभुः । तं व्यथितं विलोक्य तत्राऽऽसीनः खरकनामा वैद्यः श्रेष्ठिनमुवाच—प्रभोः कापि महती वेदना वर्त्तते । सोऽवक्—तर्हि तूर्णमेतच्चिकित्सां विधेहि । ततः श्रेष्ठी वैद्येन सहोद्याने समागत्य वृक्षद्वयाऽन्तराले कौशेयतन्तुना द्वयोर्वृक्षशाखयोर्गृहीतकर्णान्तःस्थकीलकौ सण्डासौ युक्त्या बद्ध्वा, युगपदेव तयोः शाखयोरानमने कृते कीलके प्रभोः कर्णाभ्यां तत्क्षणं निरगच्छताम् । इत्थं यत्नाऽतिशयेन मतिवैचक्षण्येन च कीलकनिष्काशने सञ्जाताऽसहनीयवेदनया भगवाँस्तथाऽऽचुक्रोश, यथा भगवदारावेण सकलं वनं घोरनादमयमजायत । अथ संरोहिण्यौषधिप्रयोगेण प्रभुर्निर्व्रणतामापत् । वैद्यः श्रेष्ठी च मृत्वा

तत्पुण्येन दैवीं गतिमंहतः स, गोपालस्तु तत्पापेन सप्तमं नरकमैयः ।

इत्थं भगवतो महावीरस्य जघन्यमध्यमोत्कृष्टभेदादुपसर्गास्त्रिधा जज्ञिरे । तत्र व्यन्तरीकृतं दुःसहं शीतपरीषहनं जघन्यं, सङ्गमसुरकृतमुपसर्गं मध्यमम्, कर्णान्तःकीलकनिधानतदुद्धरणलक्षणमुत्कृष्टमजायत । एवमर्काब्दं यावद्भगवान् खल्वनेकविधानुपसर्गान् सहमानः सुखाऽऽसीनो नाऽभवत्क्षणमपि, गोदोहासन इव कदाचिदुपाविशत्, न वा कर्हिचित् प्रभुर्निद्रातवान्, केवलं शूलपाणियक्षकृतोपसर्गे कायोत्सर्गे तिष्ठन्नेव क्षणमात्रमस्वपीत् । एवं चरमतीर्थपतिर्बहूपसर्गांश्चिरमसहिष्ट । 'भगवानृषभदेवस्तु वर्षमेकं भिक्षादौर्लभ्यमन्वभूत् । अवशिष्टद्वाविंशतिजिनानान्तु स्तोका एवोपसर्गा अजायन्त' ।

५९ भगवतो गुणवर्णनं, तपःसङ्ख्यानञ्च—

अथ श्रमणो भगवान्महावीरस्त्रियोगसंयतत्वात् त्रिगुप्तिगुप्तः, निगुप्तहृषीकनिचयः, वसत्यादिनवधावृत्तिवर्जितब्रह्मचर्यरतः, अकोपनोऽलोलुपः, मानोज्झितो निर्ममः, बाह्याऽभ्यन्तरवृत्तिभ्यां शान्तः, सन्त्यक्ताऽशेषसन्तापः, हिंसाद्याश्रवद्वारराहित्यादनाश्रवः, द्रव्यादिपरिग्रहहानादकिञ्चनः, विमुक्तस्वर्णादिग्रन्थिकः, द्रव्यमलभावमलाभ्यामलिप्तः, रागाद्युपरञ्जकविरहाच्छङ्ख इव निरञ्जनः, जीवस्येवाऽप्रतिबद्धगतिः, वायुरिव स्वैरविहारः, शारदवारिदवदतिनिर्मलाशयः, कमठ इवेन्द्रियग्रामगोपनशीलः, खड्गिशृङ्गमिवाद्वितीयो रागादिद्वैतभावोज्झितः, पक्षीव विमुक्तपरिग्रहः, पद्मपत्रमम्भसेव कर्मदलैराश्लिष्टः, कादाचित्कमपि भारण्डपक्षीव प्रमादं नाभजत, कुञ्जर इव कर्मारातीन् दलयितुं शूरतरः,

---

१ अस्यैकस्मिन्नेव देहे द्वौ जीवौ, द्वे च मुखे, त्रयश्चरणाः, भाषा च मानुषी, द्वाभ्यामपि मुखाभ्यां सममेवाऽश्नाति । आहारादिवैपरीत्ये च म्रियते । सदा प्रमादराहित्येनैव वर्त्तते । बिभर्त्ति च द्विसहस्रसिंहबलम् ।

वृषभ इवाऽऽत्तमहाव्रतभारवहने समर्थतरः, मृगपतिरिव परीषहश्वापदैरजय्यः, मेरुरिवोपसर्गवातव्रातैरप्यचलः, सरित्पतिरिव हर्षशोकादिभिर्विक्रियामलभमानः, शशीव शीतलः, भानुरिव समिद्धतेजाः, पृथ्वीव सर्वंसहः, उपेक्षितजीवितमरणः, अग्निरिव कर्मदलदहनसमर्थः, जात्यकाञ्चनवच्छरीरकान्तिमान्. अपारस्याप्येतस्य भवाम्भोधेः पारदृश्वा, चन्दनतरुरिव द्विषत उपकर्त्तुश्च सममेव वासयिता, तृणमणिलोष्टकाञ्चनानि समानि पश्यन्, प्रावृषं विहाय शेषानष्टौ मासान् ग्रामे रजनीमेकामधिनगरे पञ्चरात्रं निवसन् क्रमेण ग्रामानुग्रामं व्यजरीहरीत्। सदा सर्वत्र प्रतिबन्धराहितोऽभूद् भगवान्। प्रतिबन्धो हि द्रव्यक्षेत्रकालभावभेदाच्चतुर्धा वर्त्तते। तत्राप्याद्यः सचित्ताऽचित्ततदुभयभेदात् त्रिधाऽस्ति। तत्र मातापितृपुत्रादिः सचित्तः, आभूषणप्रमुखोऽचित्तः, सालङ्कृतवनितादिस्तदुभयः १, कस्मिँश्चिद् ग्रामे, नगरे, कानने, धान्यादिनिष्पादनस्थानके क्षेत्रे, धान्यानां निर्बुसीकरणस्थानके खले, गृहेऽङ्गणे व्योमनि वा नैकस्मिन्नपि प्रतिबध्योऽभूत्प्रभुः २. शतकमलदलभेदनयोग्येऽतिसूक्ष्मकाले, असंख्यसमयात्मिकायामावलिकायां, श्वासोच्छ्वासे, सप्तोच्छ्वासमिते स्तोके, घटिकाषष्ठभागात्मके क्षणे, सप्तस्तोकप्रमिते लवे, सप्तसप्ततिलवमिते मुहूर्त्ते, त्रिंशन्मुहूर्त्तात्मकेऽहोरात्रे, पञ्चदशाहोरात्रलक्षणे पक्षे, पक्षद्वयात्मके मासे, द्विमासात्मके ऋतौ, ऋतुत्रयात्मकेऽयने, अयनद्वयात्मके वत्सरे, एतेषु, इतरस्मिन् वा दीर्घकाले कार्य्ये खल्वेतदिति प्रतिबन्धो नाऽऽसीद् भगवतः ३, क्रोधलोभमानमायाहासत्रासरागद्वेषकलहाऽसद्भाषणपैशुन्यस्त्रीरमण–मोहनीयकर्मोदयजनितमानसोद्वेगलक्षणाऽरति–मोहनीयोद्भूतचित्ताह्लादलक्षणरति–मृषाकापट्यवित्रिधदुःखनिदानभूतमिथ्यात्वलक्षणेषु भगवान् प्रतिबध्यो नाभूद्भावतः कदाचिदपि ४। गमनागमनयोरीर्यायां, भाषायाम्, द्वाचत्वारिंशद्दोषवर्जिताऽऽहारग्रहणात्मिकायामेषणायां समितौ सावधानं आसीत्प्रभुः। इत्थं

विहरमाणः प्रभुरनुपमज्ञानदर्शनचारित्रधारी कामिनीपशुपण्डकादिरहितवसतिविहारी, अनुत्तरपराक्रमी, निरुपमाऽऽर्जवः, अनुपमं म्रदिमानं दधानः, स्तोकोपधित्वाद् द्रव्यतो गौरवत्रयत्यागाद्भावतश्चानुत्तरं लघिमानं बिभ्राणः, निरुपमक्रोधाऽसद्भावः, अनुत्तरलोभत्यागः, अनुत्तरसन्तोषः, मनोगुप्त्यादिना निरुपमः। अनुपमाऽदूषितचारित्रपरिपालनेन, सुविहितद्वादशविधतपसा, समुचितमोक्षफलेन, रत्नत्रयरूपनिर्वाणमार्गेण स्वाऽऽत्मानं भावयन् द्वादशसमा व्यत्यैत्। तत्र भगवदाराधिततपः संख्यानमेवम्—

| | | | |
|---|---|---|---|
| षण्मासक्षपणम् | १ | पक्षक्षपणानि | ७२ |
| पञ्चदिनोने षण्मासक्षपणे | २ | षष्टभक्ताः | २२९ |
| चतुर्मासक्षपणानि | ९ | अष्टमभक्ताः | १२ |
| त्रिमासक्षपणे | २ | दिनद्वयमाना भद्रप्रतिमा | १ |
| सार्धद्विमासक्षपणे | २ | चतुर्दिनप्रमाणा महाभद्रप्रतिमा | १ |
| द्विमासक्षपणानि | ६ | दशदिवसद्वयसी सर्वतोभद्रप्रतिमा | १ |
| सार्धमासक्षपणे | २ | तेषां पारणादिवसानि | ३४९ |
| मासक्षपणानि | १२ | | |

अकरोच्चैतत्सकलं जलमप्यपीयमानः, कदाचिदपि नित्यभक्तश्चतुर्थभक्तं वा नाऽचर्कः। एतावन्ति तपांसि भगवान्महावीरः प्रव्रज्यादिनाच्छाद्मस्थ्यावधि व्यदाधेत्।

६० भगवतः केवलोत्पत्तिर्गणधरादिस्थापना च—

अथ त्रयोदशे वर्षे, ग्रीष्मर्त्तौ, वैशाखे मासि, सितपक्षे, दशम्यां तिथौ, पूर्वगायां छायायां सत्यां, वर्त्तमानायाञ्च पाश्चात्यपौरुष्याम्प्रमाणप्राप्तायां सुव्रतनामके दिवसे, विजयावहे मुहूर्त्ते, जृम्भिकानगराद्बहिः, ऋजुवालुकानदीतीरे, व्यन्तरालयान्नातिदूरे नातिसमीपे श्यामाककौटु-

म्भिकस्य क्षेत्रे शालविटपिनस्तले गोदोहनाऽऽसनयाऽऽतापनां कुर्वतो निर्जलमुपोषणद्वयं विदधतश्चन्द्रमसायुक्त उत्तराफल्गुनीनक्षत्रे, शुक्लध्यानीयाऽऽद्यभागद्वयं ध्यायतः प्रभोर्महावीरस्याऽनन्ते निरुपमे निर्बाधे, निरावरणेऽखण्डे. केवलवरज्ञानदर्शने समुत्पेदाते । समुत्पन्ने च केवलज्ञाने महावीरो ह्यर्हञ्जातः, अभूच्चाऽशोकत्वनिर्ममत्वप्रातिहार्यादिगुणोदयात्पोपूज्यतमःसुराऽसुरनरेन्द्राणाम् । स च सर्वदर्शी सर्ववेत्ता केवली भगवान् सुराऽसुराभ्यां सहितस्य समस्तलोकस्य कृत्स्नं पर्यायमवेदीत् । साक्षात्कृतवाँश्च सर्वजीवानां भवान्तरादागमनं, भविष्यन्तीं भवान्तरीयां गतिं, स्थितिमायुः, च्युतिमुत्पत्तिं, तेषां सर्वेषां मानसीं वृत्तिञ्च याथातथ्येन । एवं विदितवेदितव्यः परापरज्ञः प्रभुः समेषां भुक्तं पीतं कृतं कारितं चोरितं सेवितं व्यक्तमव्यक्तं साक्षादपश्यत् करामलकवत् । त्रिलोक्यामेतस्यामबाधितं त्रैकालिकमशेषं साक्षात्कुर्वाणो जघन्यतः सुराणां कोट्या सेव्यमानः समेषां जीवादीनामजीवानां धर्मास्तिकायादीनाञ्च पर्यायान् विदन् वीरविभुर्विजहराञ्चकार । अथ भगवतो महावीरस्य केवलवरज्ञाने समुत्पन्ने चतुःषष्टीन्द्रा आसनचलनात्तद्विदित्वा, युगपदेव ते सर्वे दीक्षामहामहमिव तन्महोत्सवविधित्सया तत्राऽऽययुः । विधाय च महामहं नगराद्बहिः समवसरणं व्यरीरचत् । तत्र समवसरणे मिलिताय सुराऽसुरसंघाय स्वर्णसिंहासने समासीनः प्रभुः क्षणं धर्मदेशनामदात् । परन्तूषरभूमौ बीजवाप इव भागवती देशना मुधैवाऽजनिष्ट, नैकोऽपि व्रतनियमादिकं जग्राह । प्रभुरपि तत्र लाभाऽभावेन देशनावैफल्यं जानन् केवलं तीर्थङ्करमर्यादापरिपालनायैव क्षणमुपादिशत् । तदैव विहरमाणो विभुर्द्वादशयोजनान्तराले मध्यमायामपापायां पुर्यां महासेनवनमाजगाम । रचितं देवैस्तत्र कमनीयतरं समवसरणम् ।

तदा तस्मिन् ग्रामे याजयतः सोमिलनाम्नो विप्रस्य वेश्मनि

समाहूता याजयितारो वैदिकाः कर्मठाश्चतुर्दशविद्यानिष्णाताः सदर्पा जगदेक एव विद्वांसो वयमिति मन्तारः स्वं सर्वज्ञमानिनो मुख्या— इन्द्रभूतिः १, अग्निभूतिः २, वायुभूतिः ३, व्यक्तः ४, सुधर्मा ५, मण्डितः ६, मौर्यपुत्रः ७, अकम्पितः ८, अचलभ्राता ९, मेतार्यः १०, प्रभासः ११; एकादशैते समागुः। तत्राऽऽद्यास्त्रयः सोदरा गौतमगोत्रीया वर्त्तन्ते। एतेषां त्रयाणामेकैकस्य पार्श्वे पञ्चशतमध्येतारो वर्त्तन्ते। तुर्यपञ्चमयोः पार्श्वेप्येतावन्तः शिष्याः सन्ति। मण्डितमौर्यपुत्रौ भ्रातरौ स्तः, एतयोरन्तेवासिनां संख्या सार्धशतत्रयी वर्त्तते। शेषाश्चत्वारो वाडवाश्छात्राणां शतत्रयमध्यापयन्ति। एते सकला एकैकस्मिन् संशयाना अपि सर्वज्ञमानित्वाऽस्वर्वगर्वहानिशङ्कया मिथः कदापि नैव परीपृच्छयन्ते। इत्थमेते चतुश्चत्वारिंशच्छतशिष्यवृन्दैर्निषेव्यमाणास्तत्रोपतस्थिरे।

अन्ये चोपाध्यायपदभाजः शङ्कर, शिवङ्करेश्वर, महेश्वर, धनेश्वर, शुभङ्कर, सीमङ्कर, क्षेमङ्कर, करुणाकरप्रभृतयः। द्विवेदिनो—महादेव, शिवदेव, रामदेव, वामदेव, कामदेव, सहदेव, हरदेव, वासुदेव, श्रीदेव, बलदेव, धनदेव, सोमदेवादयः। त्रिवेदिनो—हरिशर्माऽग्निशर्म, महाशर्म, देवशर्म, नरशर्म, सोमशर्म, सूरशर्म, राजशर्म, गुणशर्म, जयशर्म, नागशर्म, विष्णुशर्म, शिवशर्म, धनशर्मप्रभृतयः। चतुर्वेदिनो— हरिहर, नरहर, नारायण, नीलकण्ठ, कालकण्ठ, वैकुण्ठ, श्रीकण्ठ, मुरारि, हरिराम, जगन्नाथ, विश्वनाथ, श्रीराम, रामकृष्ण, शुकदेव, चन्द्रदेव, स्वयम्भुवादयः। शुक्लयजुर्वेदीयाः कमलाकर, दिवाकर, प्रभाकर, यशस्कर, शोभाकर, गुणाकर, रत्नाकर, श्यामदास, रामदास, गोकुलदास, कृष्णदास, देवीदास, हरदास, द्वारकादासेत्यादयः। व्यासोपनामानः श्रीपति, उमापति, गणपति, प्रजापति, विद्यापति, भूपति, महीपति, लक्ष्मीपति, गङ्गापति, पृथ्वीपति, देवपति, दानवपति,



चरमजिनपतेः श्रीमहावीरस्वामिनः समवसरणम् , मगधाधिपस्य श्रीश्रेणिकभूपस्याऽऽगमनञ्च ।

आनंद प्रेस–भावनगर.

धनपतिप्रभृतयः । जोसीत्युपनामकाः खिमायत, भीमायत, रामायत, प्रभायित, सोमायित, धनायित, कर्मायित, धर्मायित, देवायित, सूरायित, गुणायितेत्यादयः । पण्डिताः नागार्जुन, गोवर्द्धन, गुणवर्द्धन, विष्णु, मुकुन्द, गोविन्दाऽऽनन्द, परमानन्दोद्धव, माधव, केशव, पुरुषोत्तम, नरोत्तम, कृष्णेत्यादयः । एते सर्वे याजमानिकस्वर्गीयफलसाधनाय तत्र यज्ञे यथा विहितानि कर्माणि कुर्वाणा आसन् ।

तत्रैवावसरे श्रीवीरप्रभुः समवसरणे स्वर्णसिंहासनासीनः प्राङ्मुखः पयोवाहध्वनिविजित्वर्या गिरा मिथ्यात्वपङ्कं दूरीकुर्वन्नुपदिशन्नासीत्, तच्छ्रोतुमौत्सुक्येन वैमानिकाः सुरा दुन्दुभीन्नादयन्तो गगनादवतरन्ति स्म । देवदुन्दुभीरवमाकर्णयन्तः सकलास्ते विप्रा अजरीहृष्यन्त, वावदाञ्चक्रुश्च— अहो ! धन्या वयम्, मन्त्रेषु च कियती शक्तिः, यान्मन्त्रानस्मदुच्चारितानाकर्ण्य प्रत्यागच्छन्ति देवाः । अथ चाण्डालपाटकं विमुच्याऽन्येन पथा यथोत्तमा वर्णा व्रजेयुस्तथा ब्रह्मयज्ञं विहाय, श्रीवीरविभोः समवसरणेऽहमहमिकया सत्वरं गत्वा, प्रथमं सर्वज्ञं महावीरं वन्दिष्य इति मिथो वदन्तः समाजग्मुः । तदेन्द्रभूतिर्मनस्यमर्षमानीय तत्रस्थान् विप्रानाख्यत्—इदमत्यद्भुतं जातं तत्पश्यत, यन्मर्त्यानामज्ञानितया तेषु भ्रान्तिः सम्भाव्यते; परन्तु देवा ज्ञातारो भूत्वापीदृशीं भ्रान्तिमापुः । यदेनं यज्ञमण्डपं पश्यन्तोऽपि कुत्राप्यन्यत्र व्रजन्ति । जगत्यधुना मत्तोऽधिकः सर्वज्ञः को वरीवर्त्यन्यः ? यत्पार्श्वे सुरा एते यान्ति । कश्चिदपरो जगाद—नहि नहि, नगराद्बहिः कश्चिन्महाधूर्त्तः समागतो महताडम्बरेण सन्तिष्ठते, ऐन्द्रजालिक इव लोकानशेषान् वञ्चयति ख्यापयति चाऽहं सर्वज्ञोऽस्मीति, सर्वेषां त्रैकालिकं मानसिकं वाचिकं कायिकञ्च सर्वं कार्यं जानामि । अत एते सुरा असुरा नराश्च तद्दर्शनवन्दनादिविधित्सया आयान्ति । इति श्रुत्वा कुप्यन्निन्द्रभूतिर्जगौ—अरे ! ईदृक्कोऽस्ति यो हि सर्वज्ञं मामजानन्निजसर्वज्ञत्वं प्रचिख्या-

पयिषति ? सम्भावयामि चैनं महाधूर्त्तम् । धूर्त्तो हि मतिविकलाञ्जनानेव वञ्चयते, अयन्तु विपुलमतिकान् देवानपि गर्धयते । यथा काकास्तीर्थोदकं विहायाऽपूतं जलं पिपासन्ति, मक्षिकाः सुरभिचन्दनं हित्वा दुर्गन्धि सिषेविषन्ते, उष्ट्राः सत्तरून् विवर्ज्य कण्टकिनस्तरून् बुभुक्षन्ते, कोला वा परमान्नं त्यक्त्वा वर्चो जिघत्सन्ति, कौशिका वा सूर्यालोकं त्यक्त्वा तमसा पेप्रीयन्ते, तथैते भ्रान्ततमा देवा अपि मां सर्वज्ञं यज्ञं वा विसुच्य तस्य धूर्त्ततमस्यान्तिकं वव्रजुः । परन्तु मादृशे सर्वज्ञे पश्यति सति यदसौ सर्वज्ञतां प्रथयँल्लोकान् प्रतारयति तदहं कथं सहेयम् ? किञ्च, महीयसां सैव नैसर्गिकी प्रकृतिर्भवति, यया धूर्त्ततमानीदृशाञ्जनान्मूढानञ्जसा शिक्षयन्त्येव । ईदृशानामीदृशालीकसर्वज्ञतागर्वापघातमपि मत्तोऽन्यः कोऽपि नैव करिष्यति, अत एवाचिरादहमेव तदीयमशेषं गर्वं भङ्ज्यां तर्ह्येव समीहितं मे सेत्स्यति । यथा खलु गगने द्वौ सूर्यौ नोदितः, गुहायामेकस्यामुभौ मृगेन्द्रौ न निवसतः, एकस्मिन् कोशे युगपत्कृपाणद्वयी न प्रवेष्टुमर्हति; तथैव सर्वज्ञस्य ममाऽग्रे सोऽपि सर्वज्ञीभूय नैव स्थातुमर्हत्यत्र । स हि वैदेशिकः केवलमैन्द्रजालिकीमेव विद्यां जानानः पूजां लिप्सति, छलयति च मूर्खाञ्जनान् । अहन्तु सर्वासु विद्यासु नैपुण्यमधिगतोऽस्मि । एवं मनसि यावद्विमृशति तावद्भगवन्तमभिवन्द्य परावर्त्तमानान् कियतः सुरानालोक्य पृष्टवानिन्द्रभूतिः—भवन्तो यदन्तिकं गतवन्तः, तस्मिन् कीदृशी सर्वज्ञता वरीवृत्यते ? देवाः समूचिरे—रे ! तदीयां सर्वज्ञतां सहस्रमुखैरपि वक्तुमशक्यामेव विद्धि । परमेतन्नो महदाश्चर्यं भाति यद्भवान् स्वं सर्वज्ञं मन्वानोऽपि नो वेत्ति, यन्नः परीपृच्छ्यसे स कीदृशोऽस्ति । स हि सर्वेषां मानसं भावं त्रैकालिकं याथातथ्येन किलाचष्टे । त्वन्त्वेतावदपि नो जानासि, तर्हि सूर्येण सह खद्योत इव तेन सह मुधा स्पर्धमानः कथं नो तात्रपीषि ?। एतच्छ्रुत्वा स निरचिनोत्—नूनमेष कोऽपि मायिकोऽस्ति,

तत्र मामायान्तं विलोक्य नूनमेव पलायनं मौनं वा भक्ष्यति । यतः—खद्योतश्चन्द्रमा वा तावदेव व्योम्नि प्रकाशते यावत् सहस्रांशुर्नोदयते। योऽग्निर्भूधराननेकान् भस्मसादकरोत्, तस्याग्नेः पुरस्तात्तरोः कियती शक्तिः ?। अथवा यत्र नद्यां महादन्तिनो निमग्ना अभूवँस्तस्यां कीटादीनां का गणना ? तथैव येन मया निर्जिता गौडा देशान्तरमशिश्रियन्, सदसि पराजिता गुर्जरीयाः कोविदा अद्यापि मद्भीत्या तात्रस्यन्ते, मरीमराश्चक्रुश्च पण्डितसमज्यायां निर्युक्तीकृता मालवीयाः प्रज्ञावन्तः, तैलङ्गाँश्च विद्वत्तमानकरवं पराजितान् गतगर्वान्, अनीनशश्च लाटीयान् विपश्चिद्वरान्, अधिसभं दत्ततरैर्द्राविडैरपि महीयसीं व्रीडामनीनयम् । एवं प्रतिदेशं ग्रामं ग्रामं वादिभैक्षं कामयमानः सर्वत्र तद्दौर्लभ्यमेव व्यलोकि । ईदृशस्य ममाऽग्रे कोऽयं विवदमानः सर्वज्ञत्वाभिमानं प्रकाशयते ? तमहं पश्येयम् ।

गन्तुमनसं तमिन्द्रभूतिं तदनुजोऽग्निभूतिर्व्याजहार—बान्धव ! तमैन्द्रजालिकप्रायं कीटकल्पं वादिनं विजेतुं किं जिगमिषसि, जित्वापि तं कां प्रतिष्ठां लप्स्यसे ? अतस्त्वं मागाः, मामेव प्रेषय, अहमेक एव तत्र गत्वा तूर्णं विजित्यागमिष्यामि । को नाम विद्वान् कमलोत्पाटनाय देवद्विपेन्द्रं प्रहिणुयात् ? इत्याकर्ण्य न्यगददिन्द्रभूतिः, त्वदुक्तिः साधीयसी किलौचित्यं वहति । यद्यपि मदीयशिष्य एव तं विजेतुं पर्याप्तो वर्त्तते, तथापि वादिनो नाम श्रावं श्रावं मन एव मामतितरां त्वरयति । नूनमेष मे तथा जज्ञे यथा पीलयतस्तिलान् कोऽप्येकतिलो हीयते, पच्यमानानां मुद्गानां मध्ये यथैको लुठ्यते, भुञ्जानस्य जनस्य मुखादेकः कणः पतति; तथैव सकलं महीतलं विजयमानस्य ममाप्यसौ सर्वज्ञाभासः काप्यवशिष्टः । साम्प्रतमभिमुखमायातो जगज्जयिष्णुना प्रभविष्णुना मया कथं सह्येत ? यावदसौ मया नो जयिष्यते तावत्त्रस्मिञ्जगज्जयिष्णुतामपि नैव मन्ये । अतएवाधुना खल्वेनं नो जेष्यामि

तर्हि निःशेषमहीतलप्रसृतं जगज्जयोद्भूतं प्रभूतमतिविशदं सुयशोऽपि मे प्रणशिष्यत्येव । अतो मयाऽसौ वादं कृत्वा निर्जित्य क्षिप्रं गतगर्वः करणीय एव, इत्यवधार्य कृतद्वादशाङ्गतिलकः सौवर्णं यज्ञोपवीतं बिभ्राणः पीताम्बरवसनः कियद्भिः पुस्तककरैः कैश्चिद्धृतपाणिकमण्डलुभिः कियद्भिः कुशहस्तैः पञ्चशतान्तेवासिभिः—सरस्वतीकण्ठाभरण !, वादिविजयलक्ष्मीशरण !, वादिमदगञ्जन !, वादिमुखभञ्जन !, वादिगजसिंह !, विज्ञाताऽशेषपुराण !, वादिकदलीकृपाण !, कुमतध्वान्तनभोमणे !, विजितवादिवृन्द !, वादिगरुडगोविन्द !, वादीन्द्रकुम्भमुद्गर !, वादिघूकदिवाकर !, वादिजलधिघटप्रभव !, वादिगोधूमघरट्ट !, वादिकन्दकुद्दाल !, वादिमहीरुहकरीन्द्र !, षड्भाषावल्लीमूल !, परवादिमस्तकशूल !, वादिशिरः फाल !, सरस्वतीभाण्डागार !, चतुर्दशविद्यालङ्कार !, वादियुद्धमल्ल !, ज्ञानरत्नाकर !, वादिहृदयशल्य !, विकटधीधनाऽग्रेसर !, बहुराजसमाजमुकुट !, महाकाव्यरचनाकर !, विजिताऽनेकवाद !, वादिकंसमुरारे !, इत्यादिबिरुदावलीगानेन दिङ्मण्डलं मुखरी कुर्वद्भिरन्वीयमानः स वीरं प्रति चचाल । मार्गे च गच्छन्नेवं चिन्तयति—ध्रुवममुना मौर्ख्यमकारि, यन्मुधा सर्वज्ञाटोपेन मामचुक्रुधत् । तन्मन्ये ! दीपे पिपतिषुः पतङ्गवदयमपि मुमूर्षाञ्चकार, इदानीमेव तत्फलं दर्शयिष्यामि; इत्थं विमृशन्नागत्य समवसरणस्य प्रथमं सोपानमारुरोह । तत्र स्थित्वा गढत्रयात्मकमलौकिकं समवसरणं दर्शं दर्शं नितरां विसिष्मिये । तत्राऽऽद्यं राजतं सौवर्णगोशीर्षैः सर्वतः सुशोभितं, द्वितीयं हेममयं रत्नमयानि गोशीर्षाणि, तृतीयं रत्नमयं मणिमयानि गोशीर्षाणि बिभ्रद्देदीप्यीति । विलसन्ति च चत्वारि द्वाराणि सतोरणान्येतत्समवसरणं योजनमात्रं भवति । मध्ये चाशोकतरू राजति, तदधस्ताद्दुपरिच्छत्रत्रयविभूषितं स्वर्णसिंहासनं स्थापितमस्ति । तत्र निषण्णं भगवन्तं महावीरं विलोक्याऽचिन्तयदिन्द्रभूतिः—अहो ! बहुदेशान् पर्य-

टता बहुविवदिषून् विजयमानेन मया कोऽपीदृशो वादी नाऽदर्शि काप्यशेषे महीतले । किं ब्रह्मा ? न हि स हि चतुर्मुखः सावित्रीं सहचरीं बिभर्त्ति कमण्डपाणिर्हंसेन च याति । नापि मुरारिः श्रिया विरहितत्वाच्छङ्खचक्रगदापद्मवनमालाद्युपकरणरहितत्वाच्च । कस्तर्हि कलाधरः ? सोऽपि न संभवति, तस्य हि पाक्षिकं क्षैण्यं पाक्षिकश्चौन्नत्यं तत्रापि लाञ्छनं वर्वर्त्ति, अयन्तु सदोन्नतः परिपूर्णकलः प्रेक्ष्यते । सहस्रांशुरपि न ? यतो ह्ययं ततोऽप्यधिकां दीप्तिं बिभ्राणोऽपि शीतलतमोऽस्ति । द्विलोचनत्वादिन्द्रोऽपि न भवितुमर्हति । नायमुदयगिरिः स हि निसर्गकाठिन्यं भरते, एतस्मिँस्तु मार्दवं दरीदृश्यते । अतो नूनममुना समस्तसद्गुणशालिना सर्वातिशायिना सकललोकबन्धुना सर्वपापापहारिणा षट्कायिकजीवपालिना जगच्छिवकारिणाऽनाथनाथेनाऽशरणशरणेन वर्द्धमाननाम्ना शोश्रूयमाणेन सर्वज्ञेन तीर्थङ्करेण भवितव्यम् । नानीदृशः कोऽप्यपरो भास्कराऽधिकतेजिष्ठश्चन्द्रादप्यधिकसौम्यः, सागरादप्यतिशयगम्भीरः, पृथ्व्या अप्यधिकः क्षमी, जगत्त्रये सम्भवति । नूनमेष मारविजित्वरीं तनुश्रियं वहमानः स्वीयप्रातिहार्यातिशयादिगुणगणाधारभूतस्तीर्थप्रवर्त्तनाय प्रवर्त्तमानो देवाधिदेवो श्रीमहावीरजिनवरो भगवानेवास्ति । हन्त ! नूनमकारि मया मौर्ख्यम्, यदनेन सर्वज्ञेन सुरासुरैरप्यजय्येन सत्रा प्रतिपन्थितामवहम् । उपतस्थे च सम्प्रति मे व्याघ्रदुस्तटी न्यायः । को वोपायः सकलभूतलव्यापात्मप्रतिष्ठापालनाय खल्वालम्बनीयः । मृगेन्द्राऽग्रे शृगालस्येवाऽमुष्याऽग्रे मम कियती शक्तिः ? को नाम धीरोऽस्ति यः सर्वज्ञेनाऽमुना सत्रा वादं कर्त्तुं समर्थो भवेत् । अत्रान्तरेऽन्यदप्यदृष्टपूर्वं महाश्चर्यकरं भगवतो माहात्म्यं सोऽपश्यत्—एकतः शाश्वतमपि वैरं विमुच्य मृगी सिंहीसुतं स्पृशति, अन्यतः गौर्व्याघ्रीपोतं वात्सल्यधिया मृशति, मार्जारी हंसीसूनुम्, मयूरी भोगिनमेवं यस्य गिरा पशवोऽपि त्यक्तविरोधा मिथो मैत्रीं भा-

वयन्ति । इत्थं चिन्तयन्तं तमिन्द्रभूतिं भगवानेवमाकारयत्—गौतम ! सुखेन समायातोऽसि ? इति गोत्रोल्लेखपूर्वमाह्वानं प्रभुणा कृतं निशम्य मनस्यचिन्तयत्—यदसौ मामके नामगोत्रे कथमवेदीत् ?, नाऽसौ प्राङ्मिलितो मया कदापि । अथवा जगति प्रख्यातिमन्मामकं नाम को वा नो जानाति ? यदहं केनापि क्वाप्यज्ञातो नास्मि किन्तु सूर्यांशुवत्सर्वत्र प्रथितोऽस्मि । परमित्थमाह्वानमपि मां प्रतारयितुमेवाऽकारि, नास्म्यहं तथा ज्ञानविकलो येन केवलं मधुरवचसैव तत्पारवश्यं व्रजेयम् । चेदसौ मे मानसं संशयं विद्यान्निराकुर्याच्च तदैव तं सर्वज्ञं वेदिष्यामि प्रसत्स्यामि च, वैपरीत्ये तु विवदिष्याम्येव । विवदितुमशक्नुवन्मामनुकूलयितुं सुमधुरया गिरा खल्वयमभाषिष्ट, यदसौ मया सार्धं वादं न कुर्यात्, परमहन्तु करिष्याम्येव वादम् । अथ विवदितुमुत्सुकमिन्द्रभूतिमुद्दीक्ष्य प्रभुर्मथ्यमानक्षीरसागरीयं वा वैधात्रं वा पयोवाहीयं ध्वनिमनुकुर्वता नादेनैवमाख्यत्—भोरिन्द्रभूते ! " विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवाऽनुविनश्यति, न प्रेत्य संज्ञाऽस्तीति " त्वमेवमेतद्दगर्थं जानासि—यद् विज्ञानघनो गमनाऽऽगमनादिक्रियावानयमात्मा पृथ्व्यप्तेजोवाय्वाकाकाशेभ्यो भूतेभ्यः समुत्थाय प्रादुर्भूय तान्येव पञ्चभूतान्येवानुपश्चाद्विनश्यति, तेष्वेव विलयं प्रयाति जले बुद्बुदवत् । अतएव पञ्चभूतातिरिक्तः कोऽप्यात्मा नैवास्ति यो लोकान्तरं प्रेत्य मृत्वा गच्छेत् । 'अतो विज्ञानशब्दस्य त्वदभिमतोऽर्थो नास्ति किन्तु विज्ञानं ज्ञानदर्शनोपयोगस्तन्मयत्वाज्जीवोऽसौ विज्ञानघनतामञ्चति । अयमात्मा पञ्चभूताऽतिरिक्तः प्रेत्य च लोकान्तरं याति भुङ्क्ते चाऽवश्यं कृतशुभाऽशुभकर्मफलानि, अतएव जातमात्रस्यापि बालस्य स्तन्यपाने प्रवृत्तिः सङ्गच्छते । किञ्चायमात्मा ज्ञानमयोऽकोपनो धर्माऽधर्माश्रयः' इत्यादि शतश आगमा जीवस्य भूतातिरिक्तत्वं प्रतिपादयन्ति । इत्थं भगवद्वचसा विच्छिन्नसंशयः प्रवव्राजेन्द्रभूतिः । तदनु वादिप्रकाण्डा

अतिदृष्टा अग्निभूत्यादयः सर्वे क्रमेण विवदितुमागता भगवता च ते सकला अपि निःसंशयीकृत्य दीक्षिताश्चतुश्चत्वारिंशाच्छिष्यवर्गैः सार्धम्, चक्रिरे च गणधराः। तेभ्यो गणधरेभ्यः प्रथमं 'उप्पण्णेइ वा' उत्पद्यते जीवः पदमेकं भगवानदात्, तदवधार्य शङ्काऽजायत—यदेतेषां समेषां जगति समावेशः कथम्भवतीति द्वितीयं पदमदित 'विगमेइ वा' उत्पद्य विनश्यति, पुनः शशङ्किरे—विनश्यन्ति चेज्जगतः शून्यता स्यादिति तृतीयं पदमददादिष्ट 'धुवेइ वा' ध्रुवमिदं जगदस्ति, एतेन ते विदाश्चक्रुर्यदत्र कियन्तो जायन्ते, कियन्तश्च म्रियन्ते तदपि जगदिदं शून्यत्वं नोपैति, भवति च त्रैकालिकसत्तावत्। इत्थं त्रिपदीमापद्य मुहूर्त्तेनैव द्वादशाङ्गीं रचयाञ्चक्रुस्ते गणधराः। तदवसरे शक्रः स्वयं रत्नमयस्थाले दिव्यं वासक्षेपं निधाय भगवतः पार्श्वे समाययौ। ततः प्रभूरत्नमयसिंहासनादुत्थाय तच्चूर्णं मुष्टिमादाय गौतमप्रमुखेष्वेकादशसु गणधरेषु किञ्चिदवनतेषु तिष्ठत्सु शक्रादिदेवेन्द्रेषु गीतनृत्यवाद्यादिकं निवार्य, मौनमाश्रित्य शृण्वत्सु प्रथमं गौतमस्य द्रव्यगुणपर्यायैस्तीर्थमनुजानामीति भणित्वा तन्मूर्धनि दिव्यं वासं क्षिप्त्वा, परेषामपि मूर्धसु क्रमशो वासमक्षिपत्, ततो देवेन्द्रादयोऽपि तेषामुपरि वासचूर्णगन्धपुष्पाणि ववृषुः। अस्मिन्नवसरे भगवद्देशनां श्रावं श्रावं प्रतिबुद्धा सा चन्दनबाला महता महेन भगवत्पार्श्वे दीक्षिता जाता। तत्पश्चाद्बहवः पुमांसः स्त्रियश्च दीक्षामादिषत। बभूवुश्च बह्व्यः श्राविकाः श्रावकाश्च भूयांसः। इत्थं द्वितीये समवसरणे भगवान्महावीरश्चतुर्धात्मकं श्रीसंघमतिष्ठिपत्।

६१ गौतमस्याष्टापदोपरिगमनं, तापसानां दीक्षणञ्च—

अथ गौतमस्वामी रूपे संस्थानादौ च बहूत्कृष्ट आसीत्। अयं हि षष्ठाऽष्टमादिविविधतपांसि विदधत् संप्राप्ततेजोलेश्याद्यष्टाविंशतिल-

ब्धिकश्चतुर्दशपूर्वधरश्चतुर्ज्ञानधरः श्रुतकेवली बभूव । अमुष्य हस्तेन ये ये दीक्षितास्तेषां सर्वेषां केवलज्ञानमुदपद्यत, स्वयन्तु भगवति वीरे दृढरागित्वात्तन्नाप्नोत् । अतएव महतीं चिन्तामकरोत्—यन्मे समुत्पत्स्यते केवलज्ञानं न वेति । तस्येदृशीं मानसीं चिन्तामवगत्य प्रभुर्देशनां ददान एवमवादीत्—यो हि स्वलब्धियोगादष्टापदगिरिशिखरोपरि चटित्वा, जिनेन्द्रचतुर्विंशतिमभिवन्देत स हि तस्मिन्नेव भवे मोक्षमधिगच्छेत् इति श्रुत्वा पृथ्वीतलाद् द्वात्रिंशत्क्रोशोच्चमष्टापदमहीधरशिखरं सूर्यकिरणालम्बनेन गौतमो लब्ध्या चटितवान् । तत्र चतुर्विंशतिजिनान्नत्वा ‘ जगच्चिन्तामणि ’ स्तवनेन तत्कालरचितेन स्तुत्वा, श्रीवज्रस्वामिजीवं तिर्यग्जृम्भकाख्यं सामानिकदेवं पुण्डरीकाध्ययनेन प्रतिबोध्य नीचैरवातरत् । तत्र त्र्यधिकपञ्चदशशततापसाश्चतुर्थषष्ठाऽष्टमादितपांसि कन्दमूलफलादिना पारयन्त एकं वर्षं व्यत्यैषुः । त उपरिष्टादधस्तादवतरन्तं गौतममालोकमाना मनसि दध्युः—चेद्वयमेतस्य शिष्यतां नयेम तर्हि सुखेनाष्टापदशिखरमारुह्य देववन्दनं कुर्याम, इति निश्चित्य श्रीगौतमस्य चरणयोः सर्वे निपेतुः । गौतमोऽपि तानशेषान् योग्यान् विदित्वा, प्रतिबोध्य दीक्षां ददौ । ततस्तानशेषानात्मलब्ध्याऽष्टापदोपरि नीत्वा देवाभिवन्दनं कारयित्वा पुनस्तत्रैवाऽऽनीय तानवोचत—यूयं पारणं चिकीर्षथ ? तेऽजल्पन्—स्वामिन् ! अस्ति नस्तादृशीच्छा । ततो गौतमः कुतश्चित् सपादशेटकमितं पायसमेकस्मिन् पात्रे लात्वा तानुवाच—भोः ! सत्वरमुत्तिष्ठत, पारणं कुरुत । तदा स्तोकं तदालोक्य सर्वे चिन्तितुं लग्नाः—अहो ! ! ! एकस्याऽप्यपर्याप्तेनेयता पायसेन किमेष नः सर्वेषां नयनयोरञ्जनं विधित्सति ? भाले तिलकं वा चिकीर्षति ? गौतमेन पुनरुक्तं—भोः ! तूर्णमागम्यतां, भुज्यतां त्वरया । ततस्ते सर्वे समागत्य पङ्क्तिशः समासत । ततस्तेषां मनःशङ्कानिवृत्त्यर्थं पात्रमङ्गुष्ठेन स्पृष्ट्वाऽक्षीणलब्ध्या तदक्षयं कृत्वा सर्वांस्तावतैव पायसेन सोऽती-

तृपत् । स्वयमपि पारणमकरोत् । तदवसरे एकोत्तरपञ्चशतशिष्याणाम-
श्नतां गौतमीयगुणगणाचिन्तनात्केवलज्ञानमुदपादि, एकोत्तरपञ्चश-
तानां प्रभोः समवसरणदर्शनात्तत्क्षणमेव केवलज्ञानमुदपद्यत, अवशिष्टै-
कोत्तरपञ्चशतानान्तु श्रीवीरमुखाऽवलोकनात्तदुत्पेदे । इत्थं सर्वे ते केव-
लिनो बभूवुः, ततस्ते वीरजिनमभिवन्द्य केवलिनां परिषदि गन्तुमलगत् ।
तदा गौतमस्तानवादीत्—भोः ! यूयं छद्मस्थाः, अतः केवलिनां संसदि
नोपाविशत । इति गौतमोक्तं निशम्य प्रभुरुवाच—गौतम ! त्वमेतान्
केवलिनः कथमवजानासि ? सकला अप्येते कैवल्यमापेदिरे । गौतमो
मनसि विषसाद—यदेते मामकाः शिष्याः केवलिनो जज्ञिरे ममाद्यावधि-
नोत्पन्नम्, इति विषीदन्तं गौतमं भगवाञ्जगौ—मा खिद्यस्व, अन्ते
चावयोरेकैव स्थाने शाश्वती स्थितिर्भविष्यतीति विद्धि ।

६२ भगवतश्चतुर्मासंख्यानं, मोक्षगमनश्च—

अथ भगवान्महावीरजिनो यत्र यत्र प्रावृट्कालिकीश्चतुर्मासीमक-
रोत्, तेषां नामान्येवम्—अस्थिग्रामे १, चम्पापृष्ठचम्पयोः ३, विशालान्ति-
कवाणिज्यग्रामे १२, राजगृहासन्ननालिन्दाख्यपाटके ( शाखानगरे ) १४,
मिथिलायां ६, भद्रिकायाम् २, आलम्भिकायाम् १, श्रावस्त्याम् १,
वज्रभूम्याख्यानार्यदेशे प्रणीतभूमौ १, मध्यमाऽपापायाम् १ तत्र हस्ति-
पालस्य राज्ञो लेखक( कारकून )शालायां महावीरविभुरन्तिमं चतु-
र्मासकं प्रावृषेण्यं न्यवसत् । सा नगरी प्रागपापा इति ख्यातिमभजत,
भगवतो निर्वाणाद्देवा पापा इति जगदुः । अथ कार्त्तिककृष्णाऽमावा-
स्यायां रात्रौ प्रच्छिन्नजन्मजरामरणकारणकर्मकः, सिद्धो, बुद्धो, भवग्रा-
हिकर्ममुक्तः, सकलदुःखान्तकृत्सर्वदुःखविनिर्मुक्तश्चन्द्रनाम्निवत्सरे, प्री-
तिवर्धने मासे, नन्दिवर्द्धने पक्षे, अग्निवेश्यदिवसे—उपशमाऽपरनामके,
देवानन्दानाम्न्यां रजन्यामर्चाख्ये लवे, मुहूर्त्तनाम्नि प्राणे, सिद्धाख्य-
स्तोके, नागाख्ये तृतीये करणे, सर्वार्थसिद्धमुहूर्त्ते, स्वातीनक्षत्रे, चन्द्र-

योगमुपागते, भगवान्महावीरो मोक्षमुपागतवान् । तत्र निशायां स्वर्गाद्देवानामवतरणेन कियताञ्च देवानामूर्ध्वगमनेन महानुद्योत आसीत्, तथा देवदेवीनां गमागमाभ्यां महानप्याकाशः सङ्कीर्णतामापत्, अवोभूवींच तेषामव्यक्तनादेन मुखरितप्रायः ।

६३ निर्वृते भगवति गौतमस्य शोकः, केवलोत्पत्तिश्च—

तस्यामेव रजन्यामनगारस्य गौतमस्य भगवदनुरागपाशे विच्छिन्ने कैवल्यमुत्पेदे । तदित्थम्—स्वस्यान्तिमं समयं जानानो भगवान्महावीरस्तद्दिने मयि गौतमस्य गाढोऽनुरागो निवर्त्ततामुत्पद्यताञ्च समुज्ज्वलं कैवल्यम्, इति हेतुना देवशर्माणं प्रतिबोधयितुं तदासन्नग्रामे गौतमं प्राहिणोत् । सोऽपि तत्र गत्वा तं प्रतिबोध्य रात्रौ तत्रैवाऽतिष्ठत् । प्रभाते च ततो निवर्त्तमानः पथि कियतो देवाञ्छून्यचित्तानालोक्याऽवधिना च वीरनिर्वाणं ज्ञात्वा क्षणं वज्राहत इव मूर्च्छामापत् । ततः कथञ्चिच्चैतन्यमापद्य मोहादेवं विललाप—भगवन् ! त्रिभुवनभासनभास्करे त्वयि निर्वाणमुपगते कामं प्रसरतु नाम जगत्यामेतस्यां मिथ्यात्वतमःस्तोमः । गर्जन्तु च कुतीर्थिघूका अभयाः । दुर्भिक्ष–दुर्व्यसन–दुर्मति–द्वेषादिका राक्षसाः परितः श्लिष्यन्तु लोकान् । नाथ ! त्वया विना नूनमिदं जगद्राहुणा ग्रस्ते निशीथिनीपतौ व्योममण्डलमिव, वायुनाऽपहृते दीपे भवनमिव हतशोभमजायत । हन्त ! कमहं क्रमयुगलपीठे प्रणिपतन्, पाप्रच्छिष्यामि संशयान् को वा मां गौतमगौतमेति नामग्राहं मधुरया गिराऽऽकारयिता । हा !!! वीर ! ! किमकारि सर्ववेदिना त्वया ?, यन्मामीदृशेऽवसरेऽत्याक्षीः । दयासिन्धो ! मया किमपराद्धम् ?, किं बालवत्तव वसनाञ्चलमग्रहीष्यम् ?, अथवा कैवल्यस्य किञ्चिदंशममार्गयिष्यम् ?, किमु मोक्षमार्गे सङ्कीर्णताऽभविष्यत् ?, वा कश्चित्ते भारोऽभविष्यत् ? यन्मां प्रतार्य यातोऽसि ? । प्रभो ! छद्मस्था अपि प्रान्तसमये पुत्रशिष्यमित्रादिकं दूरादप्याहूय पार्श्वे स्थापयन्ति

त्वन्तु सर्ववित्सर्वदर्शी तथापि तत्काले मां पृथगकरोः । किमु मामकीं त्वयि प्रीतिं कृत्रिमामवेदीः ?, किमु तवाऽहमसुखकरोऽभूवम् ?, को वा हेतुः यन्मां व्यस्मार्षीः । प्रभो ! त्वां विना को मे दुःखं भङ्क्ष्यति ?, त्वामेकं विना समवसरणस्यापि सुषमा व्यलीयत । विभो ! विना वारि मीन इव त्वां विना चतुर्धाऽसौ सङ्घः शोच्यतां व्रजिष्यति । इत्थं शोशुच्यमानस्य गौतमस्य वीर वीर इति जपतो वी इति मुख एवाऽतिष्ठत् । ततो गौतमेन ज्ञातम्—यद्वीतरागा हि प्रकृत्यैव नीरागा जायन्तेऽतोत्र ममैव दोषः । नूनं मौर्ख्यमेवाऽकरवम्—यत्पुरैव मया श्रुतोपयोगो नाऽदायि । अतो ममैकपाक्षिकं स्नेहं धिगस्तु । अहो ! मोहस्य महिमा बलीयानस्ति यो मादृशामपि पीडामीदृशीमकरोत्, स हि परेषां कियतीं पीडां कुर्यात् । अहो ! मोहवशान्मया पुरैतन्न विमृष्टं यदसौ वीतरागो गतस्नेही वर्त्तते, अमुष्मिन् कृतोऽपि रागः प्रान्ते क्लेशमेव विधास्यति । अलमिदानीमियताऽनुतापेन, रे जीव ! त्वं कोऽसि ?, प्रभुर्वीरः कोऽस्ति ?, उभयोरन्तरं नास्ति, परमार्थे त्वैक्यमेवास्ति यस्मादयमात्मा ज्ञानदर्शनचारित्रमयः शाश्वत एक एवास्ति, अन्यत्सर्वमनित्यमेवास्ति । जगति कस्यापि कोऽपि नैवास्ति, इति समतां भावयतो गौतमस्य केवलज्ञानमुत्पेदे । प्रभाते च शक्रादयस्तदर्थं महामहं विदधिरे । अत्रैवमाचक्षते कवयः—गौतमस्याऽहङ्कृतिः खलु प्रतिबोधकरी, रागश्च गुरुभक्तिकरः, विषादः कैवल्योत्पादकरोऽभूदित्यद्भुतम् । अयं सुधर्मस्वामिनं चिरायुषं विदित्वा प्रभोः पट्टे न्यवीविशत् । ततो द्वादशाब्दान् कैवल्यपर्यायं परिपाल्य जन्मतो द्वानवत्यब्दायुरुपभुज्य मोक्षमगमत् । गौतमस्वामी यान् यान् निजपाणिनाऽदीक्षयत्, ते सर्वे तस्मिन्नेव भवे मोक्षमापुः ।

६४ दीपमालिकापर्वोत्पत्तिः—

अथ यस्यां रजन्यां भगवान्महावीरो मोक्षमाप तस्यामेव तामि-

स्नायां काशिदेशीया नवमल्लकीजातीयाः कोशलदेशीया नवलिच्छवीजातीया राज्ञश्चेटकस्य भगवन्मातुलस्य सामन्ता अष्टादशराजा भगवद्वन्दनार्थे तत्राऽऽययुः। ते सकलास्तस्मिन्नमावास्यादिवसे पौषधोपवासं कुर्वाणास्तत्रोपविष्टा आसन्। ते भगवतो निर्वाणात्कैवल्यलक्षणभावोद्योते याते द्रव्योद्योतोऽस्माभिः कर्त्तव्य इति धिया दीपमाला अकुर्वन्। अतएव हेतोः प्रत्यब्दं तस्याममावस्यायां दीपमालोत्सवं लोकाः प्रकुर्वन्ति, यदस्यामेव भगवानक्षय्यं सुखमाप्तवानत एषा तिथिः कार्त्तिककृष्णपक्षीया सर्वेषां श्रेयस्करी मङ्गलमयी महापर्वरूपा जज्ञे। कार्त्तिकशुक्लप्रतिपदि च गौतमस्य केवलज्ञानमुत्पन्नं तत्रापि शक्रादिदेवैर्महामहश्चक्रे। अतएव लोके तद्दिने गवादीनां क्रीडनं प्रावर्त्तत। अस्यामेव तिथ्यां नन्दिवर्धनो भगवतो ज्येष्ठबन्धुर्वीरनिर्वाणं निशम्य शोशोचाश्चकार। तच्छोकापनोदनाय तद्भगिनी सुदर्शनाभिधाना शोकाकुलं नन्दिवर्धनमामन्त्र्य, निजवेश्मनि सम्भोज्य विशोकमकरोत्, तत्प्रभृति लोके सा भ्रातृद्वितीयेति नाम्ना ख्यातिमागात्।

६५ भगवच्छवस्य सुरेन्द्रकृताग्निसंस्कारः—

अथ तस्यामेव निशायामष्टाशीतिमहाग्रहाणां[1] क्षुद्रः क्रूरतरस्त्रिंशत्तमो भस्मराशिनामा महाग्रह एकर्क्षे द्विसहस्राब्दस्थितिकः श्रमणस्य भगवतो वीरस्य जन्मर्क्षोत्तरफल्गुन्यामागात्। अमुष्मिन्महाग्रहे भगवजन्मनक्षत्रं संक्रान्ते निर्ग्रन्थानां श्रमणानां साध्वीनाञ्चोत्तरोत्तरं वन्दनादिसत्कारो नो वर्धिष्यते, ततएव कारणाच्छक्रो भगवन्तमित्थं व्यजिज्ञपत—प्रभो! भवन्तो मोक्षं व्रजन्ति, इतश्च तव सन्ततीरयं भस्मराशि-

( १ ) अङ्गारकः १, लोहिताक्षः २, शनैश्वरः ३, आधुनिकः ४, प्राधुनिकः ५, कणः ६, कणकः ७, कणकणकः ८, कणवितानकः ९, कणसन्तानकः १०, सोमः ११, सहितः १२, आश्वासनः १३, कायोपगः १४, कर्बुरकः १५, अजकरकः १६, दुन्दुभकः १७, शङ्खः १८, शङ्खनाभः १९, शङ्खवर्णाभः २०, कंसः २१, कंसनाभः २२, कंसवर्णाभः

ग्रहो महाक्रूराकारो द्विसहस्राब्दीं यावत् क्लेशयिष्यतितमाम्, इति हेतोः क्षणमप्यायुरेधयत तथासत्ययं महाग्रहो निर्गमिष्यति, भविष्यति च भवतां सन्ततिषु शातमिति शक्रोदितं श्रुत्वा प्रभुरवादीत्—शक्र ! यदूचिवान् भवान् कालत्रयेऽपि पुरा केनापि तन्नाऽकारि एकसमयमप्यायुर्वर्धयितुं नार्होऽस्मि, तर्हि तदधिकं कथं वर्धयेयम् ?, यदत्रुट्यत्तदेधयितुं कोऽपि नैव प्रभवेत् । भवितव्यं रोद्धुमपि कोऽपि नैवेष्टे, अतो मच्छिष्याणामेवमेव भाव्यस्ति यावदस्य दुर्ग्रहस्य द्विसहस्राब्दीं स्थितिरस्ति । तदनन्तरं निर्ग्रन्थाः साध्व्यश्च महतीं महतीं पूजां लप्स्यन्ते धर्मश्चोदेष्यते । आह्लादिष्यते च चतुर्धा संघः । भाव्यस्य प्रतीकारः केनापि कर्त्तुं नैव शक्यते, इत्यवधार्य तावान् कालः कथमपि धर्माराधनेन सर्वैर्याप्यतामित्येव प्रान्ते भगवानिन्द्रमुवाच । तस्यामेव रात्रौ तत्र त्रीन्द्रिया अतिसूक्ष्माः कुन्थवो जीवा उदबोभूयन्त, नोद्ध्रियेरन्, न वा समुत्थाप्य पृथक् क्रियेरन् न वा छद्मस्थसाधुभिः साध्वीभिस्तिष्ठन्त्यस्ता दृश्येरन्, केवलं धावमाना एव विलोक्येरन् । याश्च विलोक्य बहुभिर्निर्ग्रन्थादिभिर्भक्तपानादिचतुर्विधाहारं प्रत्याख्याय निरशनमकारि । तदा शिष्या अपृच्छन्—प्रभो ! ईदृगुपसर्गः कथमुदपादि ?, प्रभुरुवाच—

---

२३, नीलः २४, नीलावभासः २५, रूपी २६, रूपावभासः २७, विकालकः २८, भस्मः २९, भस्मराशिः ३०, तिलः ३१, तिलपुष्पः ३२, दक. ३३, दकवर्णः ३४, कार्य. ३५, वन्ध्यः ३६, इन्द्राग्नि ३७, धूमकेतुः ३८, हरिः ३९, पिङ्गलः ४०, बुधः ४१, शुक्रः ४२, बृहस्पतिः ४३, राहुः ४४, अगस्तिः ४५, माणवकः ४६, कामस्पर्शः ४७, धुरः ४८, प्रमुखः ४९, विकटः ५०, विसन्धिकल्पः ५१, प्रकल्पः ५२, जटाभः ५३, अरुणः ५४, अग्निः ५५, कालः ५६, महाकालः ५७, स्वस्तिक. ५८, सौवस्तिकः ५९, वर्धमानः ६०, प्रलम्बः ६१, नित्यालोकः ६२, नित्योद्योतः ६३, स्वयंप्रभः ६४, अवभासः, ६५, श्रेयस्करः ६६, क्षेमङ्करः ६७, आभङ्करः ६८, प्रभङ्करः ६९, अरजाः ७०, विरजाः ७१, अशोकः ७२, वीतशोकः ७३, विततः ७४, विवस्त्रः ७५, विशालः ७६, शालः ७७, सुव्रतः ७८, अनिवृतिः ७९, एकजटी ८०, द्विजटी ८१, करः ८२, करकः ८३, राजा ८४, अर्गलः ८५, पुष्पः ८६, भावः ८७, केतुः ८८ इत्यष्टाशीतिमहाग्रहाः ।

सत्यं जानीत यद्द्यारभ्य चारित्रवतां महानेव क्लेशः संभविष्यति, संयमाऽवनं सर्वथा दुराराध्यमेव भविता, क्षितेर्जीवाकुलत्वात्तद्योग्यक्षेत्राऽसत्त्वात् ।

अथाऽसौ भगवान्महावीरो गार्हस्थ्ये त्रिंशदब्दान्, छाद्मस्थ्ये समधिकानि द्वादशवर्षाणि, किञ्चिदूनानि त्रिंशद्वर्षाणि केवलिपर्याये, द्विचत्वारिंशदब्दाँश्चारित्रपर्याये चैवं द्विसप्ततिवर्षात्मकं सकलमायुः परिपाल्य, वेदनीयायुर्नामगोत्रेषु चतुर्षु भवग्राहिकर्मसु प्रक्षीणेषु, अस्यामेवावसर्पिण्यां दुःषमसुषमानामके चतुर्थारके बहुव्यतिक्रान्ते सति सार्धाष्टमासाधिकवर्षत्रयावशेषे सति मध्यमायां पापापुर्यां हस्तिपालक्षितिपतेर्लेखकसभायामेकाक्येव नहीतरजिनेन्द्रवत्सपरिवारः षष्ठेन भक्तेन निर्जलेन शशाङ्के च स्वात्या सह सङ्गच्छमाने चतुर्घटिकावशिष्टरजन्यां पद्मासनाऽऽसीनः पञ्चपञ्चाशदध्ययनानि कल्याणफलविपाकानि, तावन्ति पापफलविपाकानि, षट्त्रिंशच्चाऽपृष्टोत्तराण्यध्ययनानि व्याहृत्य प्रधानमेकं मरुदेवाध्ययनं प्ररूपयन्मोक्षं ययौ । जातिजननमरणजरादिलक्षणं महाबन्धनं छित्वा सिद्धोऽभवत्, बुद्धो बभूव, मुक्तोऽभून्निःशेषकर्माणि विधूय सर्वदुःखादमुचत् । तदवसरे स्वासनस्पन्दनादिन्द्रादयो भगवतो महावीरस्य निर्वाणकल्याणकं विदित्वा तत्राऽऽगताः । ततश्चमरेन्द्रा गोशीर्षचन्दनैश्चितां रचयाञ्चक्रुः । अग्निकुमाराः सुरा अग्निमाक्षिपन्, वायुकुमारा वायुमुत्पाद्य वह्निमुद्दीप्य भगवच्छवमदीदहन्, ततो मेघकुमारा जलमभिवृष्य चिताग्निं निरवापयन् भस्माऽस्थीनि समादाय क्षीरोदधौ चिक्षिपुः । ततो भगवत ऊर्ध्वदंष्ट्राः सौधर्मेन्द्रः, अधस्तनीस्ताश्चमरेन्द्रो गृहीत्वा स्व स्वसभायां रत्नमये करण्डके च निधाय प्रत्यहं पूजयामासतुः ।

६६ भगवतः परिवारसंख्यानम्—

अथ भगवतो महावीरस्याऽन्तेसदां गौतमादीनां मानं चतुर्दशस-

हस्रम्, आर्यिकाश्चन्दनबालाद्याः षट्त्रिंशत्सहस्रमासन्, शङ्खशतकादीनां श्रावकाणामुत्कृष्टा सम्पत्तिरेकोनषष्टिसहस्राऽधिकशतसाहस्री किलाऽऽसीत् । सुलसारेवतीप्रभृतीनां श्राविकाणां सम्पदा त्रीणि लक्षाण्यष्टादशसहस्राणि चाऽभूत्, तत्र सुलसा नागसार्थवाहपत्नी द्वात्रिंशत्पुत्रप्रसूः, रेवती च प्रभवे बीजोरापाकौषधदात्री बभूव । असर्वज्ञानामपि सर्वज्ञकल्पानां जिनवत्सदर्थप्ररूपकाणां द्वादशाङ्गीनिर्मातॄणां श्रुतकेवलीनां चतुर्दशपूर्वधारिणामुत्कृष्टा सम्पदा शतत्रयी । आमर्षौषध्यादिलब्धिमतामवधिज्ञानवतां सम्पत् त्रयोदशशतप्रमाणा बभूव । केवलज्ञानवतां सम्पदा सप्तशती बभूव, आसंश्च वैक्रियलब्धिमन्तोऽदेवा अपि देवर्द्धिविकुर्वणासमर्थाः सप्तशतानि । सार्धद्वयद्वीपेषु द्वयोः समुद्रयोश्च स्थितानां संज्ञिपञ्चेन्द्रियाणां पर्याप्तकानां मनोगतभाववेदिनो विपुलमतयो मुनयः पञ्चशतमासन्, तत्र विपुलमतिका द्रव्यतः क्षेत्रतः कालतो भावतश्च सार्धद्व्यङ्गुलाधिकमनुष्यक्षेत्रीयसंज्ञिपञ्चेन्द्रियाणां मानसं पदार्थं जानन्ति, अन्ये तु सामान्यतो घटपटादिस्थूलपदार्थमेव विदन्ति । अभूवंश्च चतुःशतानि दैव्यां मानुष्यामासुर्यां समज्यायामजय्या वादिनो मुनयः । शिष्याणां सप्तशती मोक्षमगात्, आर्यिकाणान्तु चतुर्दशशतानि सिद्धिमापुः । अनुत्तरविमानोत्पन्ना मानवीं तनुमापद्य संयमं परिपाल्य सिद्धिगन्तारो मुनयोऽष्टौ शतान्यभूवन् । भगवतो वीरस्याऽन्तकृद्भूमिर्द्विधाऽजायत, तत्रैका युगान्तकृदपरा पर्यायान्तकृत् । तत्र युगानि कालमानविशेषास्तानि च क्रमवर्त्तीनि तत्साधर्म्याद्र ये क्रमवर्त्तिनो गुरुशिष्यप्रशिष्यादिरूपास्तत्प्रमाणा युगान्तकृद्भूमिर्ज्ञेया । भगवतो हि यत्केवलज्ञानप्रापणसमयः स एव पर्याय उच्यते, एनं समाश्रित्य याऽन्तकृद्भूमिः सा पर्यायान्तकृद्भूमिर्ज्ञातव्या । तत्रा-

ऽऽद्या श्रीवीरमारभ्य जम्बूस्वामिपर्यन्ता त्रैपुरुषीह्यासीत्, वीरस्य कैवल्यासादनानन्तरं चतुर्वर्षेभ्यः परं यो मोक्षमार्गः प्रववृते, साऽन्त्या ।

६७ श्रीवीरपित्रादेरायुर्मानम्—

भगवत्पितुः सिद्धार्थभूपस्य सप्ताशीतिवर्षाणि, जनन्यास्त्रिशलायाः पञ्चनवतिः, पाठभेदेन पञ्चाऽशीतिर्वा । एतदग्रजन्मनो नन्दिवर्धनस्याऽष्टानवत्यब्दानि, दुहितुः प्रियदर्शनायाः पञ्चनवतिहायनाः । भगवतः स्वसुः सुदर्शनायाः पञ्चनवतिवर्षाणि, पितृव्यस्य सुपार्श्वाभिधस्य नवतिवर्षाणि । भगवत्पितामह–प्रसेनजितश्चाऽष्टानवत्यायुः, ऋषभदत्तो भूसुरश्च शतायुः, देवानन्दा च पञ्चाधिकशतवर्षा । इत्थं प्राच्याऽऽदर्शेपूपलभ्यते ।

इति श्रीवीरजिनशासनस्फारशृङ्गारहार–सुविहितसूरिपुरन्दरनन्दनवनाऽऽरामविहारि–शिथिलाऽऽचारप्रचारतमोहारि—जैनाचार्य—भट्टारक-श्रीमद्विजयराजेन्द्रसूरीश्वरसङ्कलितायां 'श्रीकल्पसूत्रार्थप्रबोधिनी' नाम्न्यां टीकायां षष्ठं व्याख्यानं समाप्तम् ।

## अथ सप्तमं व्याख्यानं प्रारभ्यते ।

६८ श्रीपार्श्वनाथविभोः पञ्चकल्याणकदर्शनम्—

अथ तस्मिन् काले पुरुषोत्तमः श्रीपार्श्वनाथप्रभुः प्राणतनामके दशमदेवलोके विंशतिसागरोपमायुर्भुक्त्वा, ततश्च्युत्वाऽस्मिञ्जम्बूद्वीपे भरतक्षेत्रे वाराणसीनगरे क्षितिपतेरश्वसेनस्य राज्ञ्या वामाख्याया गर्भे चैत्रकृष्णचतुर्थ्यां मध्यरात्रे विशाखर्क्षे चन्द्रयोगे दिव्यं शरीरमाहारञ्च विहाय किलाऽवततार । अस्य हि पञ्चकल्याणकं विशाखायामभूत्—

१ विशाखायां च्युतः, २ विशाखायां जातः, ३ विशाखायां प्रव्रजितः, ४ विशाखायां केवलज्ञानम्, ५ विशाखायामेव निर्वाणम् ।

६६ श्रीपार्श्वनाथस्य भवपरिगणनम्--

अमुष्य भगवतः पार्श्वनाथजिनस्य प्राच्यान् दश भवान् दर्शयति— एतस्मिञ्जम्बूद्वीपे भरतक्षेत्रे पोतनपुरनगरेऽरविन्दनामा क्षितिपोऽस्ति । तस्य विश्वभूतिनामा पुरोहितो वर्त्तते, स्त्री चाऽनुद्धरीनाम्नी विद्यते, पुत्रौ च कमठमरुभूतिनामानौ । एतयोर्मातापित्रोरनुक्रमेण मृतयो राजा कमठं पौरोहित्यपदे न्ययुनक्, परमेष मौर्ख्याद्दुर्व्यसनी तस्य भार्या च वरुणाभिधाना । अपरं मरुभूतिस्तु सरलः सदाचारी धर्मात्मा, पत्नी चैतस्य वसुन्धरा नाम्नी महारूपवती चञ्चलाऽऽसीत् । अथैकदा कमठ एनामालोक्य तद्रूपलावण्यादिना विमोहितो रिरंसया द्वित्रिवारं सप्रेमतामाजुहाव । सापि कमठोपरि बाढमनुरागमूहे । कमठस्तस्यै मनोनुकूलं वसनाऽऽभरणं दत्त्वा जातानुरागामेनां भोक्तुमलगत् । एतद् गर्हिताचारं कथञ्चिद्विदित्वा भर्त्तारमाख्यद्वरुणा—स्वामिन् ! ईदृशं जुगुप्सितं कर्म मा कृथाः । नोचेन्महाँस्ते लोके सर्वत्रोपहासो जनिष्यते, देवरश्च किं कथयिष्यति ?, इत्थं वारितोऽपि स यदा न न्यवर्त्तत, तदा वरुणा तयोर्गर्हिताऽऽचारं मरुभूतिं सूचितवती । मरुभूतिश्च दध्यौ—यावदहं चक्षुषा न पश्यामि तावदेतदुक्त्यैव कथमेतच्छ्रद्दधानि ?, यतो हि स्त्रियो मत्सरत्वादप्यन्यामपवदन्ते, इत्यवधार्य ग्रामान्तरगमनव्याजेन गृहादचलत् । सायंकाले च तापसवेषं धृत्वा सदनमागत्य तस्थौ । रात्रौ च तयोर्दुराचारं स्वैरमालुलोके । जाते च प्रभाते तत्स्वरूपं राजानमचकथत् । ततः प्रकुपितो राजा चौरमिव कमठं निगृह्य शिरोमुण्डनादिना विडम्बयित्वा, गर्दभोपरि समारोप्य नगरे चतुष्पथादौ भ्रामयित्वा देशान्निष्काशयामास । मरुभूतिश्च तत्पदे नियुक्तवान् । कमठश्च बहुदुःखमनुभूय कस्यचित्तापसस्य पार्श्वे दीक्षां ललौ । द्वादशाब्दीं तपस्यित्वाऽनेकदेशान् भ्रामं भ्रामं पुनः पोतनपुराद्बहिरेकस्य गिरेरुपरि समागत्य तस्थौ । अत्रापि तपस्यन्तमालोक्य बहवः पौरा भोजनवसनादिकमर्प-

यामासुः प्रशशंसुश्च । लोकमुखात्तत्प्रशंसां निशम्य मरुभूतिर्व्यचिन्तयत्—असौ मे बन्धुर्मामकेनैव दोषेण तापसीभूय दुःखमनुभवति, अतोऽहं तत्र गत्वा स्वापराधं क्षमयाणि चेद्वरमिति निश्चित्य विविधं सरसमाहारं लात्वा तत्राऽऽगत्य कमठस्य पादयोः पतित्वा मरुभूतिः स्वापराधं क्षमयित्वा पश्चात्परावर्त्तत, तदवसरे तदुपरि कमठो महतीं शिलाममुञ्चत्, तच्छिलापातेन मरुभूतिस्तत्कालमेव पञ्चतामाञ्चदिति प्रथमो मरुभूतिभवः ।

तत्रार्त्तध्यानान्मृत्वा द्वितीयभवे विन्ध्याचलवने मरुभूतिजीवः सुजातनामा हस्ती बभूव । कमठोऽपि दुष्कर्मयोगादेकदा नीचैरवातरन् पतित्वाऽऽर्त्तध्यानान्मृत्वा तत्रैव कुर्कुटजातीयसरीसृपो जज्ञे । इतश्चैकदाऽरविन्दो राजा सायङ्काले पञ्चवर्णं पयोदमालोक्य सञ्जातवैराग्यादीक्षां लात्वा पठित्वा चैकादशाङ्गीं, तप्त्वा च घोराणि तपांस्येकाक्येव विहरन्नेकदा सागरचन्द्रसार्थवाहसंघेन सहाष्टापदसम्मेतशिखरादियात्रायै गच्छँस्तत्रैव विन्ध्याटव्यामागत्य सरस्तीरे ससंघस्तस्थौ । तावत्तत्र यो मरुभूतिजीवो हस्ती बभूव स निजकरिण्यादिपरिवारैः सह पयःपातुमागात् । स हि कोपात्संघमुपद्रोतुमलगत् । ततस्तद्भीत्या सर्वे लोकाः पलायिषत । मुनिस्तु कायोत्सर्गेण तत्रैवाऽतिष्ठदेनमपि हन्तुं स हस्ती वेगेनाऽधावत्, परन्तु मुनेस्तपःप्रभावाद्धन्तुं नाऽशकत् । तदा स मुनिमालोक्य जातिस्मृतिं लेभे, तेन प्राक्तनमात्मभवमुदीक्ष्य करेण मुनेश्चरणौ जग्राह । मुनिरपि प्रत्यबोधयत्, तेन स सम्यक्त्वमापेदे । इतरेऽपि बहवो लोकास्तदुपदेशेन प्रतिबोधमीयुः । ततो हस्ती मुनिं नमस्कृत्य जलं पीत्वा स्वस्थानमाययौ । मुनिरपि ततो विहृत्याऽनुसार्थवाहं गत्वा यात्रां विधाय, निरतिचारं संयमं परिपाल्य मृत्वा शुभगतिमापत् । एकदा ग्रीष्मर्त्तौ मध्याह्नसमये मरुभूतिजीवहस्ती तृषार्त्तः सरसि पयःपातुं प्रविशन् पङ्के निमग्नः । तत्र कुर्कुटनामा व्यालोऽपि

तृषाकुलः पयःपानाय समागात् । तन्मरुभूतिजीवहास्तिनं विलोक्य प्राग्वैरमनुस्मृत्य तदुपरि चटित्वा तन्मस्तकमदशत् । तेनाऽसह्यगरलव्याप्ताङ्गः शुभध्यानेन ममारेति द्वितीयो भवः ।

मृत्वा चाऽष्टमे देवलोके देवो जातः । कुर्कुटोऽपि तस्य दन्तिनः पतनात्पीलितो मृत्वा पञ्चमं नरकं ययाविति तृतीयो भवः । चतुर्थभवे मरुभूतिजीवोऽष्टमदेवलोकाच्च्युत्वाऽस्मिञ्जम्बूद्वीपे पूर्वमहाविदेहे सुकच्छनामविजये वैताढ्यगिरेर्दक्षिणश्रेण्यां तिलवननगरे विद्युतगतिराजस्य राज्याः कनकवत्याः कुक्षौ पुत्रत्वेनोत्पन्नः । मातापितरौ करणवेग इत्याख्यां दध्राते । यौवने च वयसि सुरूपया रूपाख्यया कन्यया पित्रा महता महेन विवाहितः पैतृकं राज्यमन्वशात् । अथैकदा रूपया सह गवाक्षे सुखाऽऽसीनः सायन्तनं वैवर्ण्यमालोक्य, वैराग्यादात्तदीक्षो वैताढ्यगिरौ हिमशिलोपरि कायोत्सर्गेणाऽतिष्ठत् । तत्रैव पञ्चमनरकादुद्धृतः सर्पीभूतः प्राग्वैरानुसन्धानेनैनं ददंश, तद्दष्टः स ममारेति चतुर्थो भवः । ततो द्वादशे देवलोके स साधुर्देवोऽजायत, सर्पोऽपि पञ्चमे नरके जातः, इति पञ्चमो भवः ।

ततश्च्युतो मरुभूतिजीवोऽस्मिञ्जम्बूद्वीपे पश्चिममहाविदेहे गन्धिलावतीविजये शुभङ्करनगरे राज्ञो वज्रवीर्यस्य लक्ष्मीवतीराज्याः कुक्ष्युद्भूतः पुत्रोऽभवत् । मातापितृभ्यां वज्रनाभ इति नाम दध्रे । स हि वैषयिकं सुखं भुञ्जानः पैतृकं राज्यमनुशासत्तारुण्ये वयस्येव नगरोद्याने समायातस्य क्षेमङ्करतीर्थपतेर्देशनां श्रुत्वा जगन्मिथ्या मत्वा तत्पार्श्वे दीक्षां गृहीत्वा, चैकादशाङ्गीमधीत्य जंघाचारणादिलब्धिबलेन तत्र सुकच्छविजयासन्ननिर्ज्वलनगिरेरुपरि कायोत्सर्गेण तस्थौ । तत्रैव भ्रान्ताऽनेकभवः कमठजीवोऽपि पञ्चमनरकादुद्धृतः कुरङ्गनामा भिल्लोऽभवत् । स भिल्लः निजस्थानाद्बहिराखेटं चिकीर्षुस्तत्राऽऽगतः, साधुमवलोक्याऽपशकुनं मत्वा कोपाज्ज्वलन् पूर्वभववैरस्मृत्या बाणमेकं तदुपरि निरास्थत्,

तैन मर्मणि निहतः साधुस्तत्कालमेव व्यसुरभूदिति षष्ठो भवः । ततो मुनिर्मध्यमग्रैवेयके देवत्वेनोत्पेदे । वनेचरोऽपि मुनिहत्यापातकात्सप्तमे नरके जात इति सप्तमो भवः ।

मध्यमग्रैवेयकाच्च्युतो मरुभूतिजीवो जम्बूद्वीपे पूर्वमहाविदेहे शुभङ्करविजये पुराणपुरनगरे कुशलवासुदेवस्य सुदर्शनाराज्ञ्या गर्भजो मातृदृष्टचतुर्दशस्वप्नसूचितः सुवर्णबाहुनामा सूनुरजायत । अयं योग्ये वयसि पित्रा परिणायिताः सुरूपा बह्व्यः कन्यास्ताभिः सार्धं गार्हस्थ्यं सुखमनुभवँश्चक्रवर्त्तिपदं लेभे । ततः षट्खण्डान्यसाधयत्, चिरं चक्रवर्त्तिसाम्राज्यमभुङ्क्त । वार्धक्ये च तीर्थङ्करदेशनां श्रुत्वा विषयवैमुख्यं नीत्वा विंशतिस्थानकतप आराध्य तीर्थङ्करगोत्रमबध्नात् । अयमेकदा निर्जनवने कायोत्सर्गेण तस्थिवान् । कमठजीवोऽपि सप्तमनरके मध्यमायुः पूरयित्वा च्युतस्तत्रैव क्षीरगुहायां सिंहत्वेनोत्पन्नः । सुवर्णबाहुमुनिं विलोक्य प्राग्भवीयं द्वेष्यं ज्ञात्वा कोपाद्विददारेत्यष्टमो भवः ।

विदीर्यमाणो मुनिः शुभध्यानेन विपद्य दशमे प्राणतस्वर्गे समुत्पेदे । सिंहोऽपि मृत्वा तुरीयं नरकं गतः, इति नवमो भवः ।

कमठजीवश्चतुर्थनरकान्निर्गत्य कस्यचिदेकस्य निर्धनविप्रस्य पुत्रो जातः, शैशव एव मातापितरौ विपन्नावभूताम्, ततो भृशं दुःखमनुभवँल्लोकैरन्नपानवसनादिना परिपुष्यमाणः क्रमेण यौवनमापन्नः स्त्रियमलभमानोऽमर्षात्तापसीं दीक्षां गृहीत्वा, पञ्चाग्नितपः कृत्वा सर्वत्रलोके पञ्चाग्नितापी कमठनाम्ना पप्रथे ।

७० भगवतो जन्मोद्वाहश्च—

भगवान् श्रीपार्श्वनाथो दशमदेवलोकाच्च्युत्वा चैत्रकृष्णचतुर्थ्यां वा-

---

१ चतुर्दशाप्यमून् स्वप्नान्, या पश्येत् किञ्चिदस्फुटान् ।
सा प्रभो ? प्रमदा सूते, नन्दनं चक्रवर्त्तिनम् ॥ वासुपूज्यचरित्रे ।

राणसीनगर्यामश्वसेननरपतेर्वामाराज्ञ्या गर्भेऽवतीर्य पौषकृष्णदशम्या-मजायत । अत्र भगवति गर्भगते मातुश्चतुर्दशमहास्वप्नावलोकनतत्फ-लकथनजननमहोत्सवादिकं सुरकृतं श्रीमहावीरवद्वगन्तव्यम्, नवरं यदास्मिन् गर्भस्थे माता पार्श्वे सर्पन्तं कृष्णसर्पमदर्शत्, अतः पिता 'पार्श्व-नाथ' इत्यभिधामकरोत् । इत्थं पञ्चधात्रीभिर्लाल्यमानः शुक्लपक्षे च-न्द्रमा इव वरीवृध्यमानः पितरौ चाऽसीममानन्दयन् क्रमशो यौवनं वयः प्राप्य नवहस्तशरीरप्रमाणः परमां सुषमां व्यधत्त । तत्रावसरे कुशस्थलनरेशस्य म्लेच्छैरवरुद्धस्य प्रसेनजितो नृपस्य साहाय्यदानाय प्रयान्तं पितरं निवार्य स्वयं पार्श्वनाथस्तत्र गन्तुं समुद्यतोऽभवत् । तदा सुरनायकः स्वरथं सारथिञ्च प्रैषयत् । तमारुह्य पार्श्वकुमारो व्यो-ममार्गेण तत्रागत्य, लीलयैव सकलं म्लेच्छकुलं शरैर्व्याकुलीकृत्य का-न्दिशीकाँश्च विधायाऽनीनशत् । ततो राजा प्रसेनजिन्महता महेन पा-र्श्वकुमारं स्वभवनमनैषीत् । तत्र नवनीरदश्यामं नवहस्ताकृतिकं युवानं वसूत्तरसहस्रलक्षणलक्षितं मारविजित्वरीं वपुःश्रियं वहन्तं मनोहरं पा-र्श्वकुमारमवलोक्य, प्रसेनजितः पुत्री प्रभावती महारूपवती पितरमब्र-वीत्—पितः ! माममुना पार्श्वकुमारेण विवाहय ! यन्मामकं मनः कम-प्यन्यं न वृणीते । यद्यपि पार्श्वकुमारस्य तां परिणेतुमाकाङ्क्षा नासीत्, तथापि प्रसेनजिद्राजा भूयस्या प्रार्थनया प्रभावतीं पुत्रीं महामहेन पार्श्व-प्रभुणा सह परिणायितवान् । तया सत्रा प्रभुः स्वसदनमागात्, तत्र च सुखमनुभवन्नासीत् ।

७१ कमठीयपञ्चाग्नेरहेरुद्धरणम्, भगवतो दीक्षाऽऽदानञ्च—

एकदा वाराणसीनगराद्बहिः कमठतापस आगात् । एनं पञ्चाग्नि-तापिनमर्चितुं बहवः पौराः पुष्पादिपाणयस्तत्र यातुं लग्नाः । गवाक्षा-सीनः प्रभुरनुचरान् पप्रच्छ—भोः ! एते लोका अद्य क्व यान्ति ? । अनु-चरा ऊचुः—स्वामिन् ! कश्चिदेको दरिद्रो विप्रः शैशवे मात्रा पित्रा च

वियुक्तः कमठनामा तापसो यथारुचिभूमौ पर्यटन्नत्राऽऽगतोऽस्ति । तमेवाऽभ्यर्चितुं सर्वे लोका यान्ति । तच्छ्रुत्वा पार्श्वकुमारोऽपि तत्र गत्वा ज्वलत्काष्ठान्तर्दन्दह्यमानं सर्पमवधिना विलोक्य तमुवाच—तपस्विन्! जीवदयां विना तपस्यन्मुधा कथं सहसे किलेदृशं कष्टम् ?, यतः—धर्मस्य मूलं दया वर्त्तते, मूलं विना शाखादिवत्तां विना जपादिधर्मः कथमपि नैव फलतीति सत्यमवेहि । भगवतोक्तं निशम्य प्रकुपितस्तापसोऽजल्पत्—भवादृशा राजपुत्रा गजतुरगादिरमणमेव विदन्ति, धर्मन्तु तपोधना मादृशा एव जानन्ति, अतस्त्वं धर्मविषये किमपि मा वादीः । प्रभुणा तदैवाग्निकुण्डात्तत्काष्ठं वाहिरानीय कुठारेण विदार्य सन्तापाकुलितो म्रियमाणः फणी दर्शितः । स फणी भगवदादिष्टपुरुषमुखतो नमस्कारमन्त्राञ्छ्रुत्वा तत्कालं व्यसुर्भूत्वा धरणेन्द्रो जातः । एतत्सर्वं प्रभुणा स्वयमकारि दयानिधित्वादिति क्वचित्पुस्तके दृश्यते । तदा सर्वैरहो ! कीदृगयं ज्ञानी वर्त्तते यददृश्यमपि विवेद, इत्थं स्तूयमानः प्रभुः स्वसदनमायातः । कमठन्तु सर्वे लोका भृशं निनिन्दुर्यदयं मूर्खोऽस्ति, इत्याद्यवर्णवादं श्रावं श्रावं तापसो ललज्जे । ततो मानभ्रष्टः कमठोऽन्यत्र गत्वा चिरं मिथ्यातपस्तप्त्वा मृत्वा भवनपतौ मेघमाली नामा देवो जातः ।

अथैकदा वसन्तर्त्तौ भगवान् प्रभावत्या सह वनं क्रीडितुमागात् । तत्रैकस्मिन् प्रासादे सुखासीनो विभुर्नेमिनाथो भगवान् सहजन्यैर्गच्छन् राजीमतीमतिरूपवतीं त्यक्त्वा दीक्षामादितेति चित्रे विलोक्य वैराग्यमाप्नोत् । ततः सत्यसन्धं महाबलवन्तं सर्वजीवदयावन्तं विनयवन्तं त्रिंशत्समा भुक्तसांसारिकसौख्यं श्रीपार्श्वनाथं समागता लोकान्तिकदेवा इष्टगिरा प्रत्यबोधयन्—भगवन् ! जय जय तूर्णं तीर्थं प्रवर्त्तय ! कल्याणशालिन् ! प्रबुध्यस्व प्रबुध्यस्व । प्रागेव भगवान् गार्हस्थ्येऽवधि-

ज्ञानेन दीक्षासमयं ज्ञात्वा वार्षिकं दानं प्रारेभे । एतस्य दानप्रमाणादिकं श्रीवीरदानवदवगन्तव्यम् । इत्थमाब्दिकं दानं दत्त्वा पौषकृष्णैकादश्यां प्रथमे प्रहरे देवैर्नरैश्चोह्यमानायां विशालाख्यायां शिबिकायामासीनः श्रीवीरविभुरिव महताडम्बरेण सुराऽसुरनरपरिषदाऽनुगम्यमानमार्गः प्रभुर्वाराणस्या नगर्या मध्यपथेन निर्गच्छन्नाश्रमपदाभिधानोद्यानेऽशोकवृक्षस्याऽधस्तादागात् । तत्राऽऽगतो भगवाञ्छिबिकाया अवतीर्य स्वहस्तेनैव सर्वाऽऽभरणादीन्युत्तार्य पञ्चमौष्टिकं लोचमकरोत् । आराधिताऽष्टमतपा विशाखर्क्षे चन्द्रयोगे गृहीतैकदेवदूष्यवसनः पुरुषाणां त्रिशत्या प्राव्राजीत् । इत्थं श्रामण्यं नीतो भगवान् पार्श्वनाथस्त्र्यशीतिदिनानि व्युत्सृष्टकायस्तस्थौ । तत्र सासहीति देवकृतमानवकृततिर्यक्कृतान् अनुकूलान् प्रतिकूलाँश्चोपसर्गान् । प्रभुरष्टमतपःपारणं कोपटाख्यसन्निवेशे धन्नाभिधस्य सद्मनि परमान्नेन व्यधत्त, जज्ञिरे च तत्र पञ्चदिव्यानि, द्वादशकोटिदीनारवृष्टिरप्यभूत् ।

७२ कलिकुण्डतीर्थस्थापना—

अथैकदा श्रीपार्श्वनाथो विचरन् कादम्बरीकाननमागत्य कलिङ्गिरगिरेरधस्तात्कुण्डसरस्तीरे कायं व्युत्सृजन्नतिष्ठत् । तत्र महीधरनामा दन्ती जलं पिपासुरागात्, स हि भगवन्तमुदीक्ष्य जातिस्मृतिज्ञानमासाद्य प्राग्भवानपश्यत्—यदहं पूर्वजन्मनि हेमलनामा कुलपुत्र आसम्, मां वामनमालोक्य सर्वे लोका उपहसन्ति स्म । तेन मे महान् खेदोऽभूत्, तत एकदा मां विषण्णमालोक्य सुप्रतिष्ठनामा कश्चित्सखा गुर्वन्तिकमनैषीत् । तत्र च श्रावकधर्मानुररीकृतवानहम् । प्रान्ते च स्वस्मिन् वामनत्वं लोकानामुपहासास्पदत्वान्निन्दन्निदानमकुर्वि—यद् भवान्तरे स्यान्मे महाकाय इति । तेनैव निदानेनाऽस्मिन्भवे हस्तिशरीरं नीतोऽस्मि । अतो भगवन्तं करधृतकमलजलधारया स्नपयन्नानर्च ।

इति दन्तिनो वृत्तं निशम्य चम्पानगरीपतिः करकण्डुराजा प्रभुं वन्दितुं यावत्तत्राऽऽगात्, तावत्प्रभुस्ततो व्यहरत। तत्र प्रभुमनवलोक्य मनसि महादुःखमकरोत्। तद्दुःखमवधिप्रयोगेण विदित्वा सुरनायकस्तत्राऽऽगत्य, नवहस्तप्रमाणां प्रभोः प्रतिमां प्रकटयामास। ताञ्च प्रतिमामपूजयद्राजा, अचीकरच्च तत्रैकं विशालं मन्दिरम्। अपप्रथच्च तत्र 'कलिकुण्ड' नामा तीर्थः, गजश्च व्यन्तरो भूत्वा तन्मन्दिराधिष्ठाता जज्ञे।

७३ कुक्कुटेश्वरतीर्थस्थापना—

एकदा श्रीपार्श्वनाथस्वामिनं कायोत्सर्गे तस्थिवांसं विलोक्य राजपुरनगराधिपतिरीश्वरराजो जातिस्मृतिज्ञानं लब्ध्वा मुमूर्च्छ। बहूपचारैर्लब्धचेतनं राजानं मन्त्री पप्रच्छ—कथमकाले तवेदृशी मूर्च्छाऽजायत?, राजोवाच—श्रूयताम्, अहमेनं पार्श्वप्रभुमवलोक्य प्राग्भवानपश्यम्, यदहं पूर्वजन्मनि वसन्तपुरे कुष्ठरोगग्रस्तो ब्राह्मण आसम्। एकदा तदार्त्तः सन् गङ्गायां पतित्वा मर्त्तुकामस्तस्तीरमागाम्, तावत्तत्र कुतश्चिदागतश्चारणमुनिस्तथा मर्त्तुमुद्यतं मां निवार्य प्रत्यवोधयत्। तदुपदेशात्प्रतिबुद्धः सम्यक्त्ववासनावासितान्तःकरणः प्रत्यहं जिनमन्दिरे दर्शनार्थं यातुमलगम्। एकदा मन्दिरे मामवलोक्य पुष्कलनामा श्रावक उवाच—भोः! मन्दिरे कथमायासि?, तदनु स तत्रस्थमेकं मुनिमपृच्छत्—अयं कुष्ठी मन्दिरे समेति तत्र दोषो लगति न वा?। मुनिरूचे—दूरतः प्रभोर्नमने कापि बाधा नास्ति, स्पर्शे दोषोऽस्ति। एष कुष्ठी विप्रोऽग्रिमे भवे राजपुरनगर ईश्वरनामा राजा भविष्यति। तत्र कायमुत्सृजन्तं पार्श्वनाथमुदीक्ष्य जातिस्मृतिं लप्स्यते। स एवाऽहं राजा जातोऽस्मि। तत्र राजा परया भक्त्या मन्दिरं निर्माप्य पार्श्वनाथमतिष्ठिपत्स एव 'कुक्कुटेश्वर' तीर्थः पप्रथे।

७४ मेघमालिसुरकृतोपसर्गः—

अथैकदा विहरमाणो विभुः कस्यचिन्नगरस्य समीपे तापसाश्रम-निकटे वटवृक्षस्याधः कूपपार्श्वे कायोत्सर्गेण तस्थौ। तत्र प्राग्भवीयो वैरी मेघमालीदेवः कमठजीवोऽवधिना भगवन्तं ज्ञात्वा, प्राग्वैरमनुस्मृत्य क्रुधाकुलः प्रथमं वेतालरूपेण प्रभुं भीषयामास। ततः सिंहरूपेण, वृश्चिकरूपेण, सर्परूपेण, मत्तद्विपेन्द्ररूपेण रूपान्तरेण च बहूनुपसर्गान्सह्यानकरोत्, परन्तु भगवान्मनागपि नैवाऽबिभेत्। ततोऽधिकं क्रुध्यन् घोरं जगर्जे, विद्युत्पातेन सह कल्पान्तक्षमं प्रचण्डं वातमवीवहत्, तदुत्क्षिप्तधूलिपटलेन गगनमण्डलमाच्छन्नमभूत्। ततः सधूलिं मुसलधारां वृष्टिमकार्षीत्, ब्रह्माण्डभाण्डं स्फोटयन्निव घोरारवं व्यतानीच्च। तेन नदीपूर इव सर्वत्र जलौघस्तथा ववृधे यथा भगवानाकण्ठं निरमज्जत्, तथापि प्रभुः किञ्चिदपि नो तत्रास। अत्रान्तरे धरणेन्द्र आसनकम्पनाद् भगवदुपसर्गं ज्ञात्वा, पद्मावत्याग्रमहिषीभिः सत्रा तत्रागत्य भगवच्छिरसि फणाटोपलक्षणं छत्रं न्यधत्त। चरणयोरधस्तात्कमलरचनामकृत। इत्थं जलबाधावरोधमुभाभ्यां प्रयत्नाभ्यां कृत्वा स्वयं प्रभोरग्रे सहेन्द्राणीभिर्नाटकं कर्त्तुमारेभे। परन्तु तादृशीं जगल्लयकरीं वारिधारां भगवदुपरि पतन्तीं कृतप्रयासस्य वैफल्यं चावलोक्य धरणेन्द्रो दध्यौ—अहो! कथमेष मेघः प्रलयकाल इव चिरमेवं वर्षति मामको यत्नो वा कथमव्राजीद्वैयर्थ्यम्?, एवं वितर्कयन्नवधिप्रयोगेण मेघमालिदेवकृतमुपसर्गं विदित्वा चोकुप्यमानस्तमेवं वक्तुमारेभे—रे पापिष्ठ! दुष्ट!! अधमाधम!!! त्वया किमकारि यत् त्रिजगत्पूज्यस्य भगवत उपरि दुःसहानीदृशानुपसर्गानकृथाः?। भगवांस्तु त्वदुपरि परोपकृतिमकरोत्, त्वन्तु तत्स्थाने ईदृशं कष्टमकृथाः। अयं स्वयमतुलां शक्तिं बिभ्रदपि दयाम्बुधित्वात्सर्वं सासहीति स्म। अहन्तु तन्न सहिष्ये, अधुनैव त्वां तत्फलं दर्शयामि, तिष्ठ, तिष्ठ, मत्तश्छुटित्वा क्व यास्यसीत्युदीर्य तदुपरि वज्ररत्नमाक्षिपत्।

तदा भयभ्रान्तः स मेघमाली स्वस्त्रियासहाऽनन्यशरणः प्रभोश्चरणयोः पतित्वा, त्रायस्व, त्रायस्वेति भाषमाणः क्षमस्व मेऽज्ञानकृतमपराधम्, पुनर्नेदृशं विधास्यामि कदापि । धरणेन्द्रोऽजल्पत्—रे! त्वं भगवन्तं शरणी कृतवानतस्त्वां स्वधर्मिवात्सल्यधिया कृतागसमपि मुञ्चामि । ततो दश-जन्मकृतं वैरं क्षमयित्वा नाटकं विधाय कमठजीवः प्रभुं नमस्कृत्य स्व-स्थानं यातः । धरणेन्द्रोऽपि स्वामिनमभिवन्द्य स्वस्थानमागात् । त्रीणि दिनानि भगवन्मौलौ धरणेन्द्रस्थापितमहिच्छत्रं यदस्थादतः सा नगरी सर्वत्र 'अहिच्छत्रा' इति प्रख्यातिमगात् ।

७५ प्रभोः केवलज्ञानं, तत्परिवारसंख्यानञ्च—

अथ विहरमाणः प्रभुः पञ्चसमिति–त्रिगुप्तिभ्यां सहितः, त्र्यशीति दिवसान् व्यत्यैत् । चतुरशीतितमदिने चैत्रकृष्णचतुर्थ्यां विशाखर्क्षे प्रथमे यामे धातकीतरोस्तले षष्ठेन भक्तेन निर्जलेन वर्त्तमानस्य ध्याना-न्तरिकायां तिष्ठतः पार्श्वनाथस्याऽव्याघातमनावरणं सूर्यवदुज्ज्वलं केवल-ज्ञानं केवलदर्शनञ्चोत्पेदे । तेन समस्तचराऽचरस्य भवादिकं विजानन् परिपश्यँश्च व्यवहिताऽव्यवहितं करामलकवद्विचचार । अमुष्याऽष्टौ[1] शुभा-ऽऽर्यघोष–विशिष्ट–ब्रह्मचारि–सोम–श्रीधर–वीरभद्रयशस्वीतिमुख्या गण-धरा आसन् १, साधवश्चोत्कृष्टाः षोडशसहस्रसंख्याका आर्यदत्तप्रभृतय आसन् २, पुष्पचूलाप्रमुखाः साध्व्यश्चोत्कृष्टा अष्टात्रिंशत्सहस्रमासन् ३, सुव्रतादयः श्रावकाश्चतुष्षष्टिसहस्राधिकलक्षप्रमाणा बभूवुः ४, सुनन्दा-प्रमुखाः श्राविकाश्च सप्तत्रिंशतिसहस्राधिकत्रिलक्षप्रमिता आसन् ५, अ-केवलिनोऽपि तत्तौल्यवन्तः श्रुतकेवलिनश्चतुर्दशपूर्वधराः सार्धत्रिशतमा-सन् ६, अवधिज्ञानवन्तो मुनयश्चतुर्दशशतम् ७, केवलज्ञानिनः श्रमणाः सहस्रम् ८, वैक्रियलब्धिमन्तो मुनय एकादशशतम् ९, ऋजुमतिका मनः-

---

१ आवश्यके च ते दशोक्ताः, परन्तु तेषां द्वयोरल्पायुष्ट्वादत्राऽष्टावेवोच्यन्ते, स्थानाङ्गटीकायामेवमेवोक्तत्वादिति ।

पर्यवज्ञानवन्तो मुनयः षट्शतम् १०, सिद्धाः श्रमणाः सहस्रम् ११, संयत्यश्च सिद्धा द्विसहस्रम् १२, विपुलमतयो मुनयः सार्धसप्तशतम् १३, वादिनश्च मुनयः षट्शतम् १४, अनुत्तरविमानगा एकावतारिणो मुनयो द्वादशशतमासन् १५ इति परिवारः । श्रीपार्श्वविभोर्मुक्तिगामिनां मर्यादा द्विधा जज्ञे—युगान्तकृद्भूमिः पर्यायान्तकृद्भूमिश्च । तत्र पार्श्वनाथादारभ्य चतुःपुरुषीं यावन्मुक्तिमार्गश्चचाल प्रवाहरूपेण । भगवतः केवलज्ञानोत्पत्तेः पश्चात् त्रिवर्षानन्तरं सिद्धिगमनारम्भः प्रावर्त्तत ।

७६ प्रभोर्निर्वाणकथनम्—

इत्थं श्रीपार्श्वजिनो गार्हस्थ्ये त्रिंशत्समाः, छाद्मस्थ्ये त्र्यशीत्यहोरात्रान्, कैवल्यपर्याये किञ्चिदूनसप्तत्यब्दान्, श्रामण्ये च परिपूर्णसप्ततिवर्षाणि परिपाल्य सकलं शतमायुः पूरयित्वा, वेदनीयाऽऽयुर्नामगोत्रानुबन्धिकर्मक्षये जाते सत्यस्यामेवाऽवसर्पिण्यां दुष्षमसुषमारके बह्वतिक्रान्ते श्रावणशुक्लाष्टम्यां सम्मेतशैलशिखरोपरि विशाखर्क्षे चन्द्रयोगयुक्ते कृतमासिकानशनो निर्जल आत्मना चतुस्त्रिंशत्तमः, आश्रितशैलेशीयोगः कायोत्सर्गे तिष्ठन् प्रलम्बितभुजद्वयः पूर्वाह्णवेलायां मोक्षं ययौ, सर्वदुःखाद्विमुक्तोऽभवत् । इति पार्श्वनाथविभोश्चरित्रम् ।

७७ नेमिनाथस्य जन्म, शैशवे सुरकृतबलपरीक्षा च—

अथ द्वाविंशतितमस्तीर्थङ्करः श्रीअरिष्टनेमिश्च्यवन—जनन—प्रव्रजन—कैवल्योत्पादन—मोक्षाऽऽसादनरूपाणीमानि पञ्चकल्याणकानि चित्रायां तारकायामेव लब्धवान्, अतः पञ्चचित्रोऽप्यजायत इति संक्षिप्तवाचना ।

विशिष्टा यथा—तस्मिन् काले अर्हन्नेमिनाथः प्रभुरपराजिताख्यविमानाद् द्वात्रिंशत्सागरोपमायुष्काच्च्युत्वाऽस्मिञ्जम्बूद्वीपे भरतक्षेत्रे शौरीपुर्यां समुद्रविजयस्य राज्ञः पत्न्याः शिवादेव्या गर्भे कार्त्तिककृष्णद्वादश्यां चित्रानक्षत्रे चन्द्रयोगयुक्तेऽवततार । तदा तन्माता चतुर्दशमहा-

स्वप्नानालुलोके। ततः सार्धसप्तदिनाधिकनवमासीं मातुर्गर्भे स्थित्वा श्रावणशुक्लपञ्चम्यां चित्रर्क्षे चन्द्रमसायुक्ते भगवान् नेमिनाथः प्रादुरासीत्। भगवति गर्भस्थे माता रिष्टरत्नमयं नेमिं (चक्रधारां-रथप्रधिं) स्वप्नेऽद्राक्षीत्, अतएव पित्राऽरिष्टनेमिरित्यभिधाऽकारि। तत्र रिष्टशब्दोऽमङ्गलवाची तद्दोषपरिहारित्वान्नास्ति रिष्टममङ्गलमस्मादित्यन्वर्थमरिष्टनेमीति नाम कृतवान्। लोकानां रिष्टभञ्जनाच्च तन्नाम्ना सर्वत्र ख्यातिमगात्। अत्रापि स्वप्नादिनामकरणान्तं वीरवदेवाऽवगन्तव्यम्।

शैशवे चैनं प्रभुमिन्द्राणी समागत्य भृशमरीरमत्। यदा यदा प्रभोर्बुभुक्षाऽजायत तदा तदा सुरसञ्चारितसुधामयमङ्गुष्ठमेव चुचूष, मातुः स्तनौ नैव पपौ। इत्थं वरीवृध्यमानो नवनीरदच्छविर्मदनमूर्त्तितोऽप्यधिकां कान्तिं बभार। अथैकदा पालनायां रममाण आसीदरिष्टनेमिः। तत्रावसरे सुरनायकः सदसि प्रभोर्बलं प्रशशंस। तदश्रद्दधानः कश्चिदल्पधीः सुरस्तत्राऽऽगत्य भगवन्तमुत्पाट्य व्योम्नि सपादलक्षयोजनमितं दूरं निनाय। इयद्दूरं नीयमानः प्रभुस्तन्मायां विदित्वा किञ्चिन्मात्रमात्मबलमदर्शयत्, तेनैवाऽधस्तान्निपतन् धरान्तः शतयोजनानि गत्वा तस्थौ। तदा शक्रेन्द्रस्तत्राऽऽगत्य दयया तममूमुचत्। भगवन्तञ्च तस्यामेव पालनायां स्थापयित्वा वन्दनं स्तवनञ्च विधाय स्वस्थानमायातः।

७८ यदुवंशोत्पत्तिः—

यदुवंशे भगवतोऽवतीर्णत्वात्तदन्वयमाचष्टे—युग्मजाताभ्यां हरिहरिणीभ्यां सूनुरश्वनामाऽभूत्, तत्पुत्रो वसुराजोऽभवत्तत्रैवान्वये यदुरभूत्। तत्पुत्रः शूरः, तस्य द्वौ पुत्रौ शौरि-सुवीरनामानौ बभूवतुः, असौ शौरये मथुराराज्यं प्रदाय सुवीरं यौवराज्ये संस्थाप्य प्राव्राजीत्। ततः शौरीराजा सुवीराय मथुराराज्यं दत्त्वा कुशावर्त्तदेशमागत्य शौरीपुरनामकं नवं नगरं निर्माय तत्र राज्यं कर्त्तुमलगत्। तत्र शौरे राज्ञोऽन्धकवृष्णिनामा पुत्रो बभूव। सुवीरस्य भोजकवृष्णिनामा पुत्रो जज्ञे, तत्पुत्र उग्रसेनोऽजायत, तस्मै राज्यं दत्त्वा भोजकवृष्णिः प्रवव्राज। अन्धकवृष्णेश्च दश पुत्रा अभूवन्—समुद्रविजयः १, अक्षोभः २, स्तमितः ३, सागरः ४, हिमवन्तः ५, अचलः

६, धरणः ७, पूरणः ८, अभिचन्द्रः ६, वसुदेवः १०; एते दशार्हा उच्यन्ते । पुत्र्यौ च द्वे कुन्ती–माद्री नाम्न्यौ जज्ञाते । तयोः कुन्तीं पाण्डवे माद्रीञ्च दमघोषाय ददौ । एषा माद्री शिशुपालं पुत्रमजीजनत्, तं कृष्णो जघान । मृते चास्मिन्नन्धकवृष्णिर्दीक्षां ललौ । मथुराराज्यमुग्रसेनः शशास । तस्याऽऽसीद्धारणी नाम्नी राज्ञी । शौरीपुरे च राजा समुद्रविजयस्तत्पत्नी शिवादेवी नेमिकुमारं प्रासूयत । सकला राजकुमाराः सहैव तिष्ठन्ति स्म । अन्यदा नगराद्बहिरुद्याने कश्चिन्मासोपवासी तापस आगात् । तस्यैष नियमः—यन्मासाभ्यन्तरे स्वयमागत्य पारणार्थं निमन्त्रयेत, तस्यैवौकसि मासान्ते पारयितव्यमितरेषां सदने नेति । यदि निमन्त्रयिता निमन्त्र्य तद्दिने तदन्तिकमेत्य तं नाऽऽकारयेत्, केनापि हेतुना विस्मरेत्तर्हि प्रथममासक्षपणस्य पारणमकृत्वैव पुनर्मासक्षपणं करणीयम् । इत्थं भूतं तमेकदा क्रीडार्थं वनं गत उग्रसेनो राजा निमंत्र्य गृहमायातः, पारणादिवसे च तदाह्वानं विसस्मार । सन्ध्यापर्यन्तं तदाहूतिं प्रतीक्षमाणस्तापसः पुनर्द्वितीयं मासक्षपणं प्रारेभे । कियद्दिवसानन्तरं पुनरेकदा तत्स्थानं गतो राजा तं तापसमालोक्य सस्मार—यन्मयैष निमन्त्र्यापि न भोजित इति महाऽनुचितमभूत् । एवमनुतप्य पुनस्तं द्वितीयपारणार्थं निमन्त्रयामास । परन्तु गृहाऽऽगतो राजा द्वितीयमासिकपारणादिवसेऽपि विस्मृत्या तं नाजूहवत् । तृतीयमासेऽपि पुरेव तं निमन्त्र्य तद्दिने तद्गवेषणं नाकरोत् । तदा तापसश्चुकोप—यन्मामसौ त्रिवारं निमन्त्र्याप्येकवारमपि नाऽभोजयदतोऽहं कृतैतत्तपःप्रभावाद्भवान्तरे दुर्धियोऽमुष्य राज्ञः क्लेशकारी स्यामिति निदानं कृत्वा प्राणमजहात् । स एव मृत्वा क्षितिपतेरुग्रसेनस्य भार्याया धारण्या गर्भेऽवततार । ततस्तृतीये मासे राज्ञ्या दोहदो जज्ञे—यदहं राज्ञो बुक्कामांसमश्नीयाम् । तदपूर्त्या राज्ञ्या देहे कार्श्यमैधिष्ट । ततो राजा तत्कारणं पप्रच्छ, तदा राज्ञी निजदोहदमाख्यत् । तन्निशम्य चिन्ताकुलो राजा प्रधानोक्तयुक्त्या तं दोहदमपारीत् । राज्ञी तद्दुष्टगर्भनिपातनाय बहुधा प्रायतत परन्तु भाव्यप्राबल्यान्नाऽपतत् । ततो नवमा-

---

१ श्रीऋषभदेवसूनुकुरुराजेन निजनाम्ना वासिते कुरुदेशे तत्कुलजा बहवो राजानो जज्ञिरे । ततस्तदन्वयजो हस्तिराजो हस्तिनापुरं निर्माय न्यवसत् । तदनन्तरं तत्र सुभूमचक्री बभूव । तदन्वये शन्तनुरभूत्तस्य द्वे भार्ये । विद्याधरपुत्री गङ्गा गाङ्गेयं पुत्रमसोष्ट स एव 'भीष्मपितामहः' कथ्यते । द्वितीया सत्यवती चित्राङ्गद–विचित्रवीर्याख्यौ पुत्रौ प्रसूतवती । प्रान्ते शन्तनुश्चित्राङ्गदाय राज्यं दत्त्वा व्यपद्यत, एनमेकदा रणे नीलाङ्गदो जघान । तदनु विचित्रवीर्यो राजाऽभूत् । एतस्याऽम्बिकाऽम्बालिकाऽम्बाख्यास्तिस्रः पत्न्यो जातास्तासु प्रथमा धृतराष्ट्रमसूयत, स च गान्धार्याद्यष्टपत्नीषु दुर्योधनादिशतपुत्राञ्जनयामास । द्वितीया पाण्डुं प्रासोष्ट । पाण्डुश्च कुन्त्यां युधिष्ठिर–भीमार्जुनान्, माद्र्यां नकुल–सहदेवौ चोदपादयदेते पञ्चापि पाण्डवाः कथ्यन्ते, इति पाण्डवानामुत्पत्तिः ।

स्याः पूर्तौ जातं पुत्रं कांस्यिकमञ्जूषायां क्षिप्त्वा, तत्र नामाङ्कितां मुद्रिकामपि निधाय पिधाय च तां यमुनायां प्रावाहयत् । सैव पेटिका वहन्ती शौरीपुरे समायाता । तदवसरे घृततैलादिकं विक्रीणानः सुभद्रवणिक् स्नानं विदधत्तां पेटिकामानीय समुद्घाट्य, तदन्तर्नामाङ्कितां मुद्रिकां दिव्यं बालकञ्चावलोक्य गृहं समानीय भार्यायै ददौ । उवाच च लोकान्—यन्मे भार्याया गूढगर्भायाः पुत्रो जातस्तस्य 'कंस' इति नाम दध्रे । स हि क्रमेण वृद्धिमापन्नः परेषां शिशूंस्ताडयामास । तेन बहुलोकैः प्रत्यहमुपालब्धः सुभद्रो दध्यौ—यदहं साधारणोऽस्मि, अयन्तु राजपुत्रो वर्त्तते लोकानुपद्रवति च भृशमतो मे बहवो लोका वैरायन्ते । मदालये नैष निर्वोढुमर्हतीति विचिन्त्य तं बालं वसुदेवाय समर्पयामास । सोऽपि प्रेम्णा वसुदेवं सेवितुं लग्नः, वसुदेवोऽपि कंसं कृपादृशा पश्यन्नासीत् ।

तत्रावसरे वसुराजान्वये जयद्रथभूपतेः सुतुर्जरासन्धप्रतिवासुदेवः खण्डत्रयशासिता राजगृहे राज्यं कुर्वन्नास्ते । सकला यादवा अपि तदादेशं सहर्षं वहन्ते । स जरासन्ध एकदा पत्रं लिखित्वा दूतहस्तेन समुद्रविजयाय प्रैषीत्—यद्वैताढ्यनगासन्ने सिंहपुरे सिंहनामा पल्लीपती राजाऽस्ति, तं जीवन्तमेव बद्ध्वा मत्पार्श्वे य आनयिष्यति तस्मै जीवयशानाम्नीं स्वपुत्रीं तदभिमतं नगरञ्चैकं प्रदातास्मि । तत्पत्रं वाचयित्वा समुद्रविजयस्तत्र गन्तुं चमूं सज्जयितुमादिशत्, तदा वसुदेवस्तं प्रयियासन्तं निवार्य कंसेन सह ससैन्यस्तत्र गत्वा तेन सह चिरं युद्ध्वा कंसस्तं सिंहपल्लीपतिं बद्ध्वा वसुदेवाय समार्पयत् । इतश्च वसुदेवे प्रयाते समुद्रविजयः कोष्ठकनैमित्तिकमपृच्छत्—जीवयशा वसुदेवयोर्मेलापकः सम्यग् वर्त्तते नवेति ? । सोऽवक् जीवयशा परिणीता सती वोढुः पितुश्च कुलं चयं करिष्यति तत्र संशयं मा कृथाः । तन्निशम्य महतीं चिन्तामापत्—यदसौ विजित्य सिंहं समेष्यति चेदवश्यमस्मै दास्यति जीवयशापुत्रीं जरासन्धः । इत्थं यावदासीच्चिन्तान्तुरस्तावद्वसुदेवोऽपि कृतकृत्यस्तत्रागत्यामिलत् । चिन्तितं समुद्रविजयमपृच्छत्—राजन् ! का ते चिन्ता, यथा विलक्षो दृश्यसे ?, समुद्रविजयो रहसि नैमित्तिकोक्तं सकलं वसुदेवमबोधयत् । वसुदेवोऽवदत्—मा भैषीः, यदमुं सिंहं नाहमबध्नाम् किन्तु कंसो बबन्ध । समुद्रविजयो मनस्येवमचिन्तयत्—यदस्मिन् वणिक्पुत्रे तादृग्बलं मरौ कल्पतरुरिव नैव सम्भवति । ततएव शीघ्रं सुभद्रवणिजं समाकार्य पप्रच्छ—भोः ! तवायमात्मजोऽन्यो वाऽस्तीति सत्यं कथय ? तन्निशम्य स सर्वं निवेद्य तां मुद्रिकाञ्च राज्ञे दत्तवान् । ततो मुद्रिकां कंसाय प्रदाय बद्धवानीतसिंहेन सह कंसं जरासन्धपार्श्वे प्रैषीत् । सोऽपि प्रतिज्ञापूर्त्यै कंसेन निजपुत्रीं जीवयशां परिणायितवान् । परिणीय कंसो मथुराराज्यमयाचत । जरासन्धः ससैन्यं तद्राज्यं तस्मा अदात् । ततः कंसः ससैन्यः सभार्यो मथुरा-

मागत्य स्वपितरमुग्रसेनं जीवन्तमेव पक्षिणमिव काष्ठपिञ्जरे निक्षिप्य मथुराराज्यं शाशितुमलगत् । तदा पितरं पिञ्जरे दुःखमनुभवन्तं विलोक्य कंसस्य लघुभ्रान्धवोऽतिमुक्तको वैराग्याद्दीक्षां ललौ ।

प्राग्जन्मनि वसुदेवजीवः क्वचिद्ग्रामे नन्दिषेणनामा काककृष्णो मार्जारनयनो लम्बोदरः करिदन्तुरः करभोष्ठः कपिकर्णोऽवनाटस्त्र्यस्रकपालः कुलपुत्र आसीत् । एतस्य मातापितरौ प्रथमवयस्येव ममृतुः । मातुलौकस्येव ववृधे, यौवने च भीषणं कुरूपमेनं विलोक्य कोऽप्येतस्मै कन्यां प्रदातुं नाऽचीकमत । सर्वाः स्त्रियः पुमांसश्च निन्दन्ति स्म, तेनाऽतिचिन्तातुरो जातः । मातुलोऽवदत्—चिन्तां मा कृथाः, सन्ति मे सप्त दुहितरः, तास्वेकां ते दास्यामि । तच्छ्रुत्वा पुत्र्य ऊचिरे-पितरौ ! वयं सप्तापि भगिन्यः सुखेन कृतान्तसदनं व्रजिष्यामः, परमेनं नैव वोढारं करिष्यामः । तदुक्तिं श्रुत्वा मृत्युरेव मे श्रेयान्, इति निश्चित्यैकदा मुमूर्षुर्नन्दिषेणः कस्यचित्पर्वतस्य शिखरमारुह्य पतितुं यावदैच्छत्, तावत्तत्रैको मुनिः पतनान्निवार्य जगाद—इत्थमात्मघातेन भवान्तरेऽपि विविधं दुःखमेवाऽनुभविष्यसि, अतो मा म्रियस्व, धर्ममाराधय एष समाराधितः कुरूपमपि माराधिकरूपं कुरुते, रङ्कमपि राजानं करोति, किमधिकं ब्रवीमि ?, चिन्तामणिमिव धर्मं जानीहि, स एव सर्वं समीहितं दातास्तीतिसाधुवचसा प्रतिबुद्धो भूत्वा दीक्षां लात्वा साधुवैयावृत्यकरणमभ्यग्रहीत् । ततो मासं क्षपयन्नपि साधूनां वैयावृत्यं यथावदकरोन्मनागपि मनसि ग्लानिं नाप्नोत् । अथैकदा सुरनायकः सदस्येनं प्राशंसीत्—यदधुना मर्त्ये नन्दिषेणमुनिरिव साधुवैयावृत्यकारी कश्चिदपरो नैवास्ति । तत्राऽविश्रम्भमाणः कश्चिद्देवस्तत्परीक्षायै तत्रागत्यैकमतीसाररुजार्त्तं साधुं विकुर्व्य ग्रामाद्बहिरतिष्ठिपत् । ततो मुन्यन्तररूपेण नन्दिषेणान्तिकमागत्य जगाद—भोः ! ग्रामाद्बहिरेको मुनिरतीसारग्रस्तस्तिष्ठति, को जानाति रोगाच्छुटिष्यति मरिष्यति वेति ? । तन्निशम्य मासक्षपणपारणं विहाय तदीयं वैयावृत्यं चिकीर्षन्नगरे प्रासुकं वारि प्रतिसदनं गवेषयन् सुरमायया क्वाप्यलभमानोऽपि पश्चात्तापं कुर्वन् प्रान्ते चैकत्र गृहे प्रासुकजलं लब्ध्वा तदन्तिकमागात् । तमागतं विलोक्य रुजार्त्तः साधुः कोपात्तदानीतं वारि पादेन नीचैर्निपात्योचे—रे मूर्ख ! इयता विलम्बेन कथमागतोऽसि ?, इत्थं भर्त्सितोऽपि नन्दिषेणस्तं निजस्कन्धे धृत्वा नगरं प्रति चचाल । मार्गे च स मुनिर्देवमायया विष्ठां तदुपर्यकरोत् तया च तदङ्गं व्यानशे । तदापि विकृतिमनयन्तं नन्दिषेणमुदीक्ष्य नितरां प्रसद्य सुररूपेण प्रत्यक्षीभूय, सर्वं सुरेशसभाजातं वृत्तं विज्ञप्य निजापराधं क्षमयित्वा स्वस्थानमाययौ । इत्थं द्वादशवर्षसहस्रं[1] संयमं परिपाल्य प्रान्ते निरशनमकरोत् । तदवसरे कश्चिच्चक्रवर्त्ती सभार्यस्तं

१ ग्रन्थांतरे पञ्चपञ्चाशत्सहस्राऽब्दीं चारित्रं पर्यपालयदित्यभिहितम् ।

वन्दितुमागात्। तदा तद्राज्ञीमालोक्य परभवे स्यामहं स्त्रीणां प्रेयानिति कृतनिदानो मृत्वा देवलोकं ययौ। ततश्च्युत्वाऽत्र जन्मनि वसुदेवोऽजायत। पूर्वजन्मनि निदानकरणादिह मारविजित्वरं रूपं लब्ध्वा सर्वासां सीमंतनीनां मनोरमो बभूवान्। यदाऽसौ कुत्रापि व्रजति तस्यां वेलायां शौरीपुरे समस्ताः कामिन्यः सर्वाणि गेहकार्याणि विसृज्य मदनोपममेनं वसुदेवमुदीक्षन्ते। निजपतीन् स्तनन्धयानप्यगणयन्त्यस्तमेव कामयमाना अनुगच्छन्ति। कियतीनाञ्च सदनेषु द्वारोद्घाटनाच्चौरा आगत्य धनानि चोरयितुं लग्नाः। ततः सर्वे पौरा ऐकमत्यं कृत्वा राजानं समुद्रविजयं व्यजिज्ञपन्—राजन्! यदाऽसौ वसुदेवकुमारो नगरे प्रयाति तदा तद्रूपविमोहिता नः स्त्रियः सदनद्वारमुद्घाट्य बलात्तमेवाऽनुगच्छन्ति, तेन स्तेनाः प्रविश्य लुण्टन्ति, एनमुपद्रवं सत्वरं निवारय! नोचेन्नगरान्तरं गन्तुमादिश। तन्निशम्य राजा जगाद—यूयं यात, यथा वोऽयमुपद्रवः शाम्येत्, तथाऽहं विधास्यामि। ततो लोकाः स्वसदनमागुस्तदनु वसुदेवोऽपि समागात्, तदा राजा वसुदेवमङ्के निधाय जगाद—बन्धो! अद्यश्वस्तवाङ्गे कार्श्यमधिकं दृश्यते, तेनाऽनुमीयते त्वमधिकं बहिः पर्यटितुं व्रजसि। काले विकाले वाऽवसरमापन्नः कश्चित्त्वां छलयित्वा विरूपमापादयिष्यति। वयं राजानः, विपक्षाश्च बहुलाः सन्ति। अतस्त्वां हितं शास्मि—यदद्य प्रभृति गृहाराम एव रमस्व, बहीरन्तुं मागाः, इति नृपोक्तिं श्रुत्वा तथाऽस्त्विति निगद्य स्वभवनमाजगाम। ततः प्रभृति वसुदेवः कुत्राप्यन्यत्र क्रीडायै नागात्, गृहाराम एव चिक्रीड। एकदा ग्रीष्मर्त्तौ शिवादेवी नृपान्तिकं चेट्या हस्तेन घृष्टं सुरभिकर्पूरादिमिश्रितं चन्दनमङ्गविलेपनाय प्रैषीत्। तद्वीक्ष्य किमिति पृष्ट्वा वसुदेवस्तत्करादादाय स्वाङ्गं विलिलेप। कुपिता दासी तमूचे—रे किमकारि यद्राज्ञा विलेप्यमासीत्तत्कथं न्यलेपि?, अमुना कुलचर्येणैव राजा कारागारे त्वामचैप्सीत्। तदाकर्ण्य दासीं पाप्रच्छाञ्चकार—किमुक्तम्?, तदा दासी पौरोक्तं सकलं वृत्तमाचष्ट। ततो वसुदेवश्चेखिद्यमानः पौरेभ्यः क्षितिपतये च चोकुप्यमानोऽर्धरात्रे चैकाक्येव गृहान्निर्गत्य, पश्चाद्राजा लोका वा गवेषणादि नो कुर्युर्मद्दर्शनाशामपि जह्युरिति धिया नगराद्बहिश्चितां प्रज्वाल्य, द्वारकपाटे शोणितेन 'भोः! भोः! नागरिकाः! शृणुत, अहं हि युष्माकं ज्येष्ठभ्रातुश्च निर्बाधहेतवे चितायां भस्मसाद्भवामीत्यालिख्य निरगच्छत्। प्रगे च लोकास्तान्यक्षराणि चिताञ्चावलोक्य राजानं व्यजिज्ञपन्। तन्निशम्य शोशुच्यमानः समुद्रविजयस्तत्रागत्य वसुदेवाक्षराणि विदित्वा मर्त्तुकामोऽभवत्। परन्तु लोकैः प्रधानादिभिः प्रतिबोधितो मरणाद्वारितोऽपि शोकार्णवे निमज्जन् कथमपि राज्यं करोति स्म।

इतश्च वसुदेवो ग्रामाद् ग्रामान्तरं पर्यटन् प्राग्भवनिदानयोगादतिसुन्दराः कचिद्दश, क्वचिद्विंशतीः, क्वचिच्च पञ्चशतीरेवं विद्याधरराज–नरराज–महेभ्यवर्यादीनां द्वासप्ततिसहस्रकन्या उपायंस्त, विद्या अपि बह्वीर्जग्राह। तत्रावसरे रोहकाख्यः क्षितिपतिः

स्वदुहितृ रोहिण्याः स्वयम्वरमहं प्रारेभे । तत्र च जरासन्धप्रमुखा राजानः समागुः, समुद्रविजयादयो यदुवंशीयाः क्षितिपा अप्यागुः । तदवसरे रोहिणीप्रज्ञप्तिप्रभृतिविद्याधिष्ठात्र्यो देव्यः स्वप्ने वसुदेवमूचिरे—' भोः ! रोहिण्याः स्वयम्वरे याहि । तत्र गत्वा रोहिणीमपि कन्यां परिणीय, निद्रां जहाहि, प्रभाते जातेऽवश्यं तत्र कन्यका द्वयं लभस्व ' इत्थं निगद्य ता देवता रोहिण्याः पार्श्वं गत्वा तामूचुः—' वत्से ! जागृहि, त्वया खलु श्वः स्वयम्वरे समस्तराजन्यगणं विहाय कुब्जो मार्दङ्गिको वरणीयः ' इति कथयित्वा देव्यस्तिरोदधत । ततः प्रभाते राजकुमारी रोहिणी षोडशशृङ्गारसज्जिता, वयस्याभिः परिवृता, करकमलतले वरमालां दधाना, रतेरपि ह्रीपदमादधाना तत्र मण्डपे समायाता । सर्वे सभ्यास्तस्याः कमनीयं रूपं साभिलाषं द्रष्टुं लग्नाः । सतीमतल्लिका रोहिणी पुरःसरन्त्या प्रतिहारिण्या संश्रावितगुणग्रामादीन् नृपालवृन्दानशेषान् समुज्झन्ती कुलदेव्युक्तं मनसा स्मरन्ती कुब्जमार्दङ्गिकरूपेण समायातं मृदङ्गं वादयन्तं वसुदेवं तया वरमालया वव्रे । तेन नरीनृत्यमानः कण्ठाऽवलम्बिवरमालः कुब्जोऽवादीत्—' एतेभ्यः सकलेभ्यो भाग्यभागस्मि, यदेतान् राजन्यान् वर्जयन्ती यं राजकन्या मह्यमेव वरमालामददत । ' तन्निशम्य प्रकुपिताः सर्वे परस्परमूचुः—' भोः ! इयं कन्यामतिशून्यैवानुमीयते, यतः सर्वानेतान् राजन्याननादृत्य कुब्जमेनं ववार । ' कियन्तः समूचिरे—' अलमिदानीं कन्यानिन्दनादिना, सर्वैरेष एव कुब्जो हन्तव्यः ! ' ततस्तान् हन्तुकामान् राजन्याँल्लीलयैव कियतां श्मश्रुणी कियतां शिरांसि छिन्दन् कुब्जो जिगाय । तदा जरासन्धेन प्रकुपितेन प्रेरितः समुद्रविजय उत्थाय कोदण्डरवेण लोकान् बिभीषयन् योद्धुं तत्रागात् । तमवलोक्य ' बन्धुना सह न योद्धव्यम् ' इत्यवधार्य ' वसुदेवस्त्वां प्रणमतीति सूचनार्थं स्वर्णाक्षराङ्कितमिषुं तदधिचरणमस्त्राक्षीत् । तद्वाचनेन विस्मयमानस्य समुद्रविजयस्य चरणयोस्तूर्णमागत्य निजरूपेण वसुदेवो दण्डवन्न्यपसत् । तमुपलभ्य प्रहृष्टमनसां सर्वेषां तेषां कोपः शशाम । ततो महामहेन रोहिणीमुद्वाह्य प्राक् परिणीता द्वासप्ततिसहस्रपत्नीरानीय समुद्रविजयादिना सह विमानारूढो वसुदेवः शौरीपुरमाययौ ।

अथ स्नेहातिशयान्महताऽऽग्रहेण वसुदेवं मथुरां नीतवान् कंसराजः । तत्रैकदा वसुदेवेन परिणयार्थं देवकराजपुत्री देवकी समायाता । तया सह रममाणा जीवयशा पैतृकाऽखर्वगर्वाद्दृप्ता सदोन्मत्तप्रायाऽऽसीत् । यदा देवक्या विवाहोत्सवाय मण्डपादिरचना प्रारभ्यत, तदा मधुपानेन प्रमत्ता जीवयशा निजस्कन्धे देवकीमारोप्य नरीनृताञ्चक्रे । तदैव कंसस्य कनीयानतिमुक्तकनामा भ्राता गृहीतदीक्षो गोचर्यै समाययौ । गृहागतमेनं मुनिमाश्लिष्य ' देवर ! स्ववसरे समेतोऽसि , त्वमपि काञ्चिदेकां युवतिं

परिणय ' इत्थमालपन्ती मुनेः कण्ठं नो मुमोच । तदा भीत्युत्पादनाय मुनिर्जगौ—रे दुर्मतिके ! यां स्कन्धे निधाय नरीनृत्यसे तस्या एव सप्तमो गर्भस्ते प्रियतमं हनिष्यतीति सत्यं जानीहि । वज्रोपमं मुनेर्वाक्यं श्रुत्वाऽतित्रस्ता तमहासीत् । मुनिस्ततोऽन्यत्र निरगात् । जीवयशा मनसि दध्यौ—मुनिना यदुक्तं तदलीकं नैव भवितुमर्हति, सत्यमेव भविष्यतीति निश्चित्य रहसि भर्त्तारमाख्यत् । कंसोऽपि तच्छ्रुत्वा हृदि चिन्ताकुलोऽभूत् ।
अथैकदाऽतितोषितो वसुदेवः कंसमाचष्ट—सखे ! अधुना त्वयाऽहं वशम्वदोऽकारि, अतो मां यद्याचिष्यसे तत्ते दातास्मि, इति मत्वा किमपि याचस्व । तन्निशम्य कंसोऽवदत्—यदि मे दित्सां वहसि तोतुष्यसे च तर्हि देवक्याः सप्तापि गर्भा देया, इतोऽन्यत्किमपि नैवाऽपेक्ष्यते । सरलस्वभावतया वसुदेवोऽपि दास्यामीति वचनं तस्मै ददौ । ततो गृहमागत्य देवक्या अग्रे तदुवाच । तदा देवकी वसुदेवमतिमुक्तकमुन्युक्तं प्रागवृत्तमाख्यत् । तेन पश्चात्तापे जायमानेऽपि सत्पुरुषोक्तेरपरावृत्तत्वात्तदसहत धीरतयैव वसुदेवः ।

अथ भद्दिलपुरे ' नाग 'नामा श्रावको निवसति द्वादशव्रतधारी । तत्पत्नी ' सुलसा ' वर्त्तते सा मृतवत्साऽस्ति । मृतानेव पुत्राञ्जनयति । ततः साष्टमतपसा हरिणैगमेषिणं देवमाराधयाञ्चक्रे । ततस्तृतीय उपवासे प्रत्यक्षीभूय स देवस्तामुवाच—भद्रे ! मामिदानीं केन हेतुना स्मृतवत्यसि ? । साऽवक्—मम सुताः सर्वे मृता एव जायन्ते, तानेव जीवयितुं स्मृतोऽसि । देवोऽवदत्—महाभागे ! येन यादृशमर्जितं प्राग्भवे तदिह जन्मनि तेन भोक्तव्यमेव, कस्यापि कर्म दूरीकर्त्तुं नाहं प्रभवामि । तव पुत्रसुखं नैवास्ति सत्यं जानीहि, तथापि तावकीं पुत्रयाञ्चां पूरयिष्यामीति कथयित्वाऽदृश्योऽभवत् । तदनु कर्मयोगादेकदैव देवकी सुलसा च गर्भं दधाते । उभे चैकस्यामेव वेलायां सुषुवाते, देवकी जीवन्तं पुत्रं सुलसा च मृतम् । ततो हरिणैगमेषी देवक्याः पुत्रं सुलसा पार्श्वे, सुलसायाश्च मृतं जातं पुत्रं देवकीसमीपे निनाय । ततो रक्षकाः पुरुषास्तं मृतं पुत्रमादाय कंसाय समापर्यन् । तं मृतडिम्भं कंसः शिलोपरि निपात्य जघान । इत्थं देवक्याः षट्पुत्राः सुलसापार्श्वे ववृधिरे, सुलसायाश्च तावतो मृतपुत्रान् देवकीपार्श्वतो गृहीत्वा कंसोऽवधीत् । देवकी प्राग्जन्मनि निजसपत्न्याः सप्तरत्नान्यचूचुरत्, तेन शोशुच्यमाना साऽरोरुद्यत । ततस्तस्या एकं रत्नं दत्तवती, तत् कर्मयोगादत्र जन्मनि देवक्या अपि षट्पुत्रा—अनीकयशा—अनन्तसेन—विजयसेन—निहतारि—देवयशा—शत्रुसेन इति नामानो हरिणैगमेषिणा सुलसा पार्श्वे मुक्ताः । ततो देवक्याः सप्तमे गर्भे सप्तभिर्महास्वप्नैः सूचितः पञ्चमदेवलोकाच्च्युतः पुरुषोत्तमः पुत्रोऽजायत । तत्र जननान्तरमेवाऽऽदातुमारक्षकाः पुरुषा राज्ञा कंसेन स्थापिता आसन् । तथापि वात्सल्याद्देवकी वसुदेवमुवाच—नाथ ! केनाप्युपायेनैष सप्तमो रक्षणीय इति सकरुणं श्रुत्वा तदवनोपायं चिन्तयन् ' गोकुले नन्दगोपपत्नी यशोदाऽधुनैव पुत्रीमसूयत तत्रैनं

नय ताञ्चाऽऽनय ' इति कुलदेव्या निगदितो वसुदेवो नवनीरदच्छविरित्वान्मात्रा कृष्णेति धृतनामानं शिशुं नीत्वा, देवमायया प्रसुप्तेष्वारत्तकेष्वभीः पुरद्वारमुद्घाट्य चलन्नुग्रसेनेन काष्ठपिञ्जरस्थेन पृष्टः—कोऽस्तीति ? । तमाख्यत्—पिञ्जरं भङ्क्त्वा यस्त्वां दुःखादस्मादुद्धरिष्यति स एव याति, इति निगद्य पुरश्चलित्वा यमुनामुत्तीर्य गोकुले यशोदायै कृष्णं दत्वा तस्या दारिकां च लात्वा देवक्यै ददौ । ततो जातकरोदनादिना जागरिता राजभटाः पप्रच्छुः—पुत्रः पुत्री वा ? इति पृष्टे वसुदेवे पुत्री जातेति निगदति सति तां गृहीत्वा कंसाय समार्पयन् । कंसोऽपि तां दारिकां छिन्ननासिकां विधाय पुनर्देवक्यै प्रत्यार्पयत् ।

अथ नन्दौकसि यशोदया निजौरस इव पाल्यमानः कृष्णः शशधर इव समेधमानः सुखमनुभवन्नासीत् । देवकी स्वपुत्रदर्शनसमुत्सुका सती कंसाद्बिभ्यती मासान्ते पक्षान्ते वा नवनवपर्वादिव्याजेन तत्र गत्वा कृष्णं पश्यति स्म । अकथयद् यशोदाम्—सखि ! तवाऽयं बालो ममप्रेयाँल्लगति । कृष्णोऽपि शैशवीं लीलां वितन्वन्, मातापितरौ मोदयन्, यशोदाया दधिक्षीरनवनीतादिपात्राणि भूमौ पातयन्, यशोदानन्दयोर्मनांसि समप्रीणात् । अथैकदा वसुदेवो देवकीमुवाच—प्रिये ! भूयो भूयो गोकुलं मागाः, दुर्धीः कंसो ज्ञास्यति चेत्, तर्हि कमप्युत्पातं विधास्यति, इति शिक्षयित्वा सप्ताऽष्टवर्षीयकृष्णस्य कलादिशिक्षणार्थं रौहिणेयं (बलभद्रं) तत्र गुप्त्या प्राहिणोत्, सोऽपि तत्र गुप्त्या तिष्ठँस्तमशिक्षयत् । यदा कृष्णश्चतुर्दशवर्षीयो जातस्तदुभौ बन्धू नीलपीतवसनौ बर्हापीडौ स्फुलमहः कानने गोपैः सह गाश्चारयन्तौ वादयन्तौ च मुरलीं सायं सदनमागच्छताम् । अत्रान्तरे साधोर्वचनमलीकमभून्नवेति शङ्कमानः कंसो नैमित्तिकं पृष्टवान्—यदस्ति मे कश्चित्कुत्रापि मारकः पुमान् ?, नैमित्तिको जगौ—साधुवाक्यं मृषा नैव भवितुमर्हति । योऽरिष्टनेमिनं दमयिता, कालियनाग—कौशिकतुरग—खर—मेष—चम्पोत्तरपद्मोत्तराख्यगज—मुष्टिचाणूरमल्लान् निहत्य ते शार्ङ्गमाक्रक्ष्यति स एव पुमान् ज्ञातव्यस्ते हन्ता । कंसस्ततस्तं विजिज्ञासुः सर्वत्र नगरे पटहवादनेनोद्घोषयामास—यः कोऽपि पुमाञ्छार्ङ्गं चापं नमयिष्यति स मे स्वसारं सत्यभामां परिणेष्यते । इति श्रुत्वा बहवो राजानस्तदन्ये च बलीयांसो जनास्तदाक्रष्टुं तत्राऽऽगताः । तत्र वसुदेवसूनुरनाधृष्टिनामाऽऽगच्छन् सूर्यास्ते जाते रात्रौ तत्रैव गोकुले तस्थौ । तमुपलक्ष्य रामस्तं भृशं सिषेवे । प्रभाते च मथुरामार्गं प्रदर्शयितुं तेन सह कृष्णं प्राहिणोद्बलरामः । कियद्दूरमागत्य तस्य रथोऽधिमार्गं वृक्षयोरन्तराले रुद्धो जातः । प्रयासे कृतेऽपि यदा पुरो रथो नाऽचलत्, तदा कृष्ण एकेनैव पादप्रहारेण तावुभौ वृक्षौ समुत्पाट्य दूरमक्षिपत् । जाते च मार्गे रथमग्रे चालितवान् । एतदाश्चर्यजनकं विलोक्य महाबलं विदित्वा रथमुपारोप्य मथुरामानिनाय । तत्र सदसि गत्वा शार्ङ्गं धनुराक्रष्टुं स्पृशन्नेवाऽपतत् । तदा सर्वे लोका जहसुः ।

तदुपहासमसहमानः कृष्णस्तदैव तच्चापमुत्थाप्य कर्णान्तमानम्य शरमायोजयत् । ततः पार्श्वस्था सत्यभामा कृष्णं वरमालापरिधापनेन वव्रे । तदा कुपितोऽनाधृष्टिमवादीद्वसुदेवः—'एनमत्र कथमनैषीः ?, याहि यथाऽऽनैष्ठास्तथैवं सदनं प्रापय ।' ततोऽनाधृष्टिर्व्यक्षतया कृष्णं गोकुलमानयत् ।

एतावन्ति दिवसानि कृष्णो बलभद्रं भ्रातास्तीति नो विवेद । इत्थं षोडशवर्षीयानभवत्कृष्णः । ततः कंसः कौशिकमश्वं खरं मेषञ्चारिष्टवृषभं गोकुले प्रैषीत् । ते तत्रागत्य भृशमुपद्रुद्रुवुः । एतान् व्यपीपदत्कृष्णः । तान्मृतानवगत्य चिन्ताकुलः कंसो मल्लानां युद्धोत्सवं प्रावर्तयत् । तत्र बहवो मल्लाः संस्कृता अभूवन् । तेषु मुष्टिकचाणूरमल्लौ महाबलवन्तौ सर्वैरजय्यौ स्तः । कंसः शुशोच—'यः पुरा शार्ङ्गं चापमाचकर्ष तमहं तदा सम्यङ् नाऽपश्यम् । अस्मिंश्च मल्लयुद्धे चेदागच्छेत्, तर्हि तन्निहत्य निश्चिन्तः स्याम्' इति ध्यायन्नेकत्र राजार्हमञ्चके निषसाद । अन्येऽपि भूयांसो राजवर्गाः श्रेष्ठिवर्गाश्च निषेदुः । अथ दिदृक्षया कृष्णो बलराममभाषत—त्वं मे गुरुरसि, अतोऽद्य मथुरायां जायमानं मल्लयुद्धमवलोकितुं मामनुजानीहि । रामोऽचिन्तयत्—नूनमेष तत्र व्रजिष्यति कदाचित्कंसेन सह युद्धं भवेदतः स्वबन्धुता बोधनीयेति विचार्य सह कृष्णेन यशोदामुवाच—अद्यावां मथुरां गमिष्यावो मल्लयुद्धदर्शनार्थमतस्तूर्णं स्नातुमुष्णोदकं देहि । सा श्रुत्वापि कार्यान्तरव्यग्रतया तदुक्तं नाऽकरोत् । तदा कुपितो रामस्तामब्रवीत्—यशोदे ! किं मे भ्रातुः कृष्णस्य पोषणकरणात्स्वामिनी जाता, दासत्वं व्यस्मार्षीः ?, यन्ममादेशमभाङ्क्षीरिति जल्पित्वा, बन्धो ! चल, अद्य यमुनायामेव स्नात्वा मथुरां गमिष्याव इति कृष्णमुवाच । तदा मातुरवज्ञया प्रकुप्यमानः कृष्णो बलेन सहाऽचलत् । मार्गे च तत्कोपोपशमनाय बलस्तमेवमाख्यातुमारेभे—बन्धो ! त्वं देवक्या जनितोऽसि यशोदया न, माञ्च वैमातृकं बन्धुमवेहि । मन्माता रोहिणी तव देवकी पितात्वेक एवास्ति । तवाग्रजान् षड् भ्रातॄञ्छिलोपरि निपातं निपातमहिनत् । अतएव जातमात्रं त्वां कंसभीत्या यशोदाऽन्तिके पिताऽमुञ्चत् । तदाकर्ण्य क्रुद्धः कृष्णः प्रतिज्ञामकरोत्—यदैव निजभ्रातृनिहन्तारमेनं कंसं हन्यां तर्ह्येव कृष्णेतिनाम लोके बिभृयाम् । ततो यमुनायां स्नातुम्प्राविशत्, तदैव कालियनामा महाकायो भोगीशो दष्टः । कृष्ण एनं गृहीत्वा नासिकां विद्ध्वा तदुपरि चटित्वा तुरङ्गमिव धावयन् व्यसुमकार्षीत् । तदाऽऽलोकमाना विस्मयाविष्टचेतसो लोका नगरे जजल्पुः—यदद्य नन्दकिशोरः कालियनागमवधीत् । परम्परया कंसोऽप्येनां वार्त्तामशृणोत् । तदनु स्नातानुलिप्तौ रामकृष्णौ पुरद्वारि समायातौ । तत्र चम्पोत्तरपद्मोत्तरनामानौ गजौ रुन्धानौ विलोक्य तौ ताभ्यां सह युद्ध्वा दन्तौ समुत्पाट्य मारितवन्तौ । ततो मल्लयुद्धस्थाने समागत्यैकं राजानं मञ्चकादधो निपात्य तत्र कृष्णः समासीनोऽभवत् । तत्रैव बलदेव आत्मकुटुम्बं कंसमप्यलक्षयत् ।

ततः कृष्णस्य चाणूरेण रामस्य मुष्टिकेन सह मल्लयुद्धं प्रावर्त्तिष्ट । चिरं युद्धलीलां दर्शयन्तौ रामकृष्णौ परैरजय्यौ महामल्लौ कृतान्ताऽतिथी चक्राते । 'सुभटाः ! यूयमेतौ निगृह्य सदसि तिलवद्यन्त्रे निपीलयत' इत्थमादिशन्तं कंसं भूमौ निपात्य कचग्राहं शिरश्चिच्छेद कृष्णः । मृत्वा च कंसो नरकमगमत् । ततः सर्वे यादवा मिलित्वा तमुग्रसेनं पिञ्जराद्बहिर्निष्कास्य राजसिंहासने प्रागिव समतिष्ठिपन् । विविदुश्च सर्वे सभ्या रामकृष्णौ वसुदेवपुत्रौ । तदनूग्रसेनो राजा षोडशवर्षीयसा कृष्णेन त्रिंशतवर्षीयसीं स्वपुत्रीं सत्यभामां पर्यणीनयत ।

अथ जरासन्धाद्बेभीयमाना यादवा जीवयशां कंसभार्यामपृच्छन्–कंसस्याऽग्निसंस्कारः कर्त्तव्योऽस्माभिर्न वा ?, तयोक्तम्–न हि रामकृष्णप्रमुखयादवैः सह धवस्यदाहं चिकीर्षामि । तदोवाच कृष्णः–रण्डे ! याहि यत्करणीयं तत्क्रियतां त्वया किं स्यात् ? । सा कुपिता पित्रन्तिकमागत्य रोरुद्यमानैवमुवाद—त्वयि जीवत्येव समुद्धता यादवास्ते जामातरं निहत्य मामीदृशीं दुर्दशां निन्युः । पितोवाच—'वत्से ! धीरा भव, तावुभावपि रामकृष्णौ मे महापराधिनौ वर्त्तेते । यद्येतौ स्वयमत्राऽऽनयिष्यन्ति ताभ्यामुचितं दण्डं दास्यामि तर्ह्येव यादवास्तत्र सुखेन निवत्स्यन्ति, नो चेन्मरिष्यन्त्येव सकलाः । ' इत्थं तामाश्वास्य जरासन्धो राजा सोमसामन्तं यादवाऽन्तिके प्रैषीत् । स हि तत्र गत्वा समुद्रविजयादीन् कथयितुमारेभे–'भो यादवाः ! शृणुत यदासीद्भाव्यं तदभूदेव, तत्तु मा शोचिष्ट । केवलं रामकृष्णौ मया सह तदन्तिके प्रेषयत, सर्वे यादवाः प्रागूवदिहैव सुखमनुभवत, चेदेतौ न प्रेषयिष्यथ तर्हि केऽपि भवन्तो नैव जीविष्यन्तीति सत्यं जानीत । दासयोस्तयोः कृते कुलक्षयं मा कुरुत । ' सोमोदितं श्रुत्वा समुद्रविजयोऽवदत्–'सोम ! त्वमज्ञ इव किमेवं भाषसे ?, किमेतौ परैरजय्यौ हननाय ते दद्याम् ? । ' आख्यद्रामः–'रे ! पितरं याचमानः पुत्रं कथं न वृणीयसे । साम्प्रतन्तु दुर्धियं कंसं हत्वा किलैकस्यैव बन्धुवधस्य वैरमशोधयम्, पश्चानां वैरशोधनं तु शिष्यत एव । अतस्त्वं जिजीविषसि चेत्तूर्णमितोऽपसर, नोचेदधुनैव त्वामपि तत्फलं दर्शयिष्यामि । इमां गिरमाकर्ण्य तात्रस्यमाणः सोमस्ततो निर्गत्य जरासन्धसमीपमागत्य सर्वमभ्यधात्तम् ।

अथ भीता यादवाः कोष्टिकनैमित्तिकमपृच्छन्–कस्यां दिशायां कस्मिँश्च स्थाने नो भविता विजयः, निरुपद्रवा च वसतिः ?, सोऽवदत्–तव कुले रामकृष्णावमू महापुरुषौ स्तः । नेमिनाथो भगवाँस्तीर्थकर्त्ताऽवतीर्णोऽस्ति, अतः सदैव सर्वत्र वः समृद्धिः सुखं विजयश्च जनिष्यत एवेति सत्यं जानीहि । परमधुनाऽत्र किञ्चिद्भयं वर्त्तते । अत इमां नगरीं त्यक्त्वा कृष्णं राजानं कृत्वा पश्चिमदिशायां सर्वे यात, मार्गे च यत्र सत्यभामेयं

युगलं प्रसूयेत तत्रैव वस्तव्यम् । तच्छ्रुत्वा एकादशकुलकोटियादवाः समुद्रविजयादयः शौरीपुरात्, मथुरात उग्रसेनप्रमुखाः सप्तकोटियादवाश्च निर्गत्य सौराष्ट्रदेशं प्रति चेलुः । इतश्च राजगृहनगरे सोमप्रमुखाद्यादवौद्धत्यं श्रुत्वा समुद्भूतप्रभूतकोपाद् यादवकुलजिहिंसया प्रयातुमुद्यतं पितरं जरासन्धं कालकुमारः प्रोचे—नूनमहं सकलयादवानुद्धतान् हनिष्यामि, करिष्यामि च स्वनाम किलाऽन्वर्थम् । चेदाकाशं व्रजिष्यन्ति तत्रापि निःश्रेणिकामारोप्य गत्वा कृतान्तातिथीन् विधास्यामि । पातालं जलं वा प्राविशँश्चेत् तत्रापि प्रविश्य सपरिवाराँस्तान् व्यसून् करिष्यामि । अग्नौ वा प्रवेक्ष्यन्ति चेत् तत्रापि प्रविश्य तेषामसूनादास्ये । इत्थं प्रतिज्ञाय पञ्चशतसहोदरसहितः सकलसुसज्जितचमूदलपरिवृतः कालकुमारश्चचाल । तदवसरे जीवयशा तस्मा आशिषं ददौ—'भ्रातः ! अग्रण्यस्त्वेव मृत्युं यादवान् हन्यादेव ।' ततो महोत्साही कालस्त्वरया व्रजन्नेक दिनमात्रमार्गान्तराले तस्थौ । तावत्तीर्थप्रवर्त्तकनेमीश्वररामकृष्णप्रमुखमहापुरुषाणां पुण्यपुञ्जयोगादाकृष्टा यादवकुलदेवी द्वयोः शिबिरान्तराले महागिरिं निर्माय, तन्मार्गे महतीमेकां चिताञ्च प्रदीप्य तत्समीपे वृद्धरमणीरूपेण रोदितुं लग्ना । तामेवं पप्रच्छ कालः—'त्वं कासि ?, कथमेवं रोरुद्यसे ?, को वा चितायामेतस्यामज्वलत् ? ।' वृद्धाऽवदत्—'वत्स ! कालकुमारात् त्रस्ताः सर्वे यादवाः सकलत्राश्चितायामेतस्यां प्राविक्षन् कोऽपि नाऽशिनद्, अतोऽहं तेषां कुलदेवी दुःखाद्रोदिमि ।' इत्थं कुलदेव्या छलितः कालकुमारः कियद्भिः सामन्तैर्भ्रातृभिश्च सहितः कृतप्रतिज्ञापूर्त्तये तस्यामेव चितायां निपातं निपातं भस्मसादजायत । अवशिष्टाः सामन्ताः परावर्त्तमाना राजगृहमागत्य यथाजातं सकलं जरासन्धं निवेदयाञ्चक्रुः ।

अथ यादवाः सर्वे निर्विघ्नाः सुखेन पश्चिमवार्द्धितीरमागुः । तत्र सत्यभामा पुत्रयुगलमजीजनत् । ततस्तत्रैव सर्वे यादवा नैमित्तिकोक्तवचसा तस्थुः, तदा श्रीकृष्णोऽष्टमतपसा सुस्थितदेवमाराध्य निवासार्थं भूमिमयाचत । सोऽपि प्रत्यक्षीभूय तमुवाच—दास्यामि ते शक्रादेशेनेत्युदीर्य शक्रान्तिकमागत्य कृष्णोक्तमवादील्लवणाधिपतिः । तदा शक्रप्रेषितः कुबेरः समागत्य दैर्घ्ये द्वादशयोजनप्रमाणां विस्तारत्वे नवयोजनप्रमाणां द्वारिकापुरीं निर्माय, तामभित औन्नत्येऽष्टादशहस्तप्रमाणम्, स्थौल्ये द्वादशहस्तमात्रम्, निम्नत्वे च नवहस्तप्रमाणं प्राकारं, तदुपरि रत्नमयीं गोशीर्षरचनां व्यदधात् । तद्बहिश्चतुर्दिक्षु वर्त्तुलां परिखां निर्ममौ । नगरान्तर्वापीकूपतटाकवाटिकारामादीन्निर्माय कृष्णनिवासाय सप्तभौम्यं कल्पतरुवनविभूषितं गृहारामसहितं दिव्यं मञ्जुलतरं सौधं निरमिनोत् । तत एकस्यां दिशि समुद्रविजयादिदशबन्धूनां पृथक् पृथक् सौधान् राजार्हान् । अपरस्मिन्भागे उग्रसेनप्रमुखानां धनधान्यवसनविभूषणादिसम्भृतान् प्रासादान्निर्माय, सर्वमेतद् दिनत्रयेण कृत्वा कृष्णं निवस्तुमादिश्य स्वस्थानमाययौ । ततः सर्वे

यादवाः सुखेन निवसन्तः पुत्रपौत्रादिपरिवारेण वर्धमानाः पञ्चाशदब्धा षट्पञ्चाशत्कोटिका अभूवन् । इतश्च कश्चिद्रत्नकम्बलव्यापारी राजगृहमागत्य जगाद—यदस्यां पुर्यामेकोऽपि क्रयविक्रयकारी धनाढ्यो व्यापारी नास्ति यो मदीयरत्नकम्बलं महार्घमेकमपि क्रीणीयाद् द्वारिकायां तु यादवाः सुखिनः सर्वर्द्धिसंपन्ना निवसन्ति । इति यादवानां प्रशंसां श्रुत्वा जरासन्धो राजा ' हं हो ! किमद्यापि मद्विपक्षा यादवा जीवन्त्येव ?, अत इदानीमेव तत्र गत्वा तान् विहन्याम् ' इति निश्चित्य चतुरङ्गयाऽमितया चम्वा सह राजगृहात्प्रयाणमकरोत् । इतश्च नारदो द्वारिकामागत्य तदागमनं कृष्णं व्यसूचयत् । तदा कृष्णोऽपि सकलयादवदलपरिवृतो महताडम्बरेण द्वारिकापुरीतो निर्गत्य पञ्चासराग्रामासन्नमागत्य तस्थिवान् । जरासन्धस्यापि चमूस्ततश्चतुर्योजनान्तरे शिबिरमकरोत् । कृष्णसेना गरुडव्यूहेन जरासन्धस्य चमूश्चक्रव्यूहेन तस्थौ । ततश्च प्रववृते सैन्ययोरुभयोर्घोरतरः सङ्ग्रामः । कतिलक्षसैन्यानि मग्नः । तत्र कृष्णं दुर्जेयं मत्वा जरासन्धो जरानामकं नाराचं कृष्णसैन्ये चिक्षेप, तेन सकलापि यादवीया सेना रुधिरमुद्वमन्ती मूर्च्छामापत् । तदा नेमीश्वरोपदेशात्कृष्णोऽष्टमं तपश्चक्रे, तेन धरणेन्द्र आगत्य कृष्णाय पार्श्वनाथस्याऽऽगामितीर्थकृतः प्रतिमामदात् । ततो माङ्गलिकं सुस्थितदेवार्पितं शङ्खं कृष्णो दध्मौ, प्रतिष्ठिपच्च तत्र धरणेन्द्रार्पितं श्रीपार्श्वनाथबिम्बम् । तत्स्नात्रजलेन निजसेनाङ्गं सिक्त्वा सज्जीकृतवान् । प्रान्ते कृष्णं हन्तुमुपायान्तरमलभमानो जरासन्धस्तदुपरि चक्ररत्नं मुमोच । स तदागत्य त्रिःपरिक्रम्य कृष्णपाणावतिष्ठत् । ततस्तदेव चक्रं जरासन्धोपरि निरस्यत्कृष्णस्तेन विच्छिन्नशिरा अभूज्जरासन्धः । तदवसरे देवदुन्दुभयो नेदुः, सुरकृताऽऽकाशवागाविरासीत्–' यदेष नवमो वासुदेवो जातः कृष्णः । ' तच्छ्रुत्वा सर्वे जरासन्धपक्षीयाः सैनिकाः समेत्य कृष्णचरणयोर्निपेतुर्भेजुश्च तदादेशम् । ततः सर्वे यादवाः सहर्षं द्वारिकामाययुः । तत्र द्वासप्ततिकुलकोटिमिता यादवा अन्तर्निवसन्ति, षष्टिकुलकोटियादवाश्च बहिर्निवसन्ति स्म । बलदेवप्रभृतयः पञ्चमहावीरा आसन् । उग्रसेनादयः षोडशसहस्रं राजानस्तत्र न्यवात्सुः । सार्धत्रिकोटिः प्रद्युम्नादिकुमाराणाम् । साम्बादिदुर्दान्तकुमाराः षोडशसहस्रम् । वीरसेनप्रमुखा एकविंशतिसहस्रं वीराः । महासेनप्रभृतयः षट्पञ्चाशत्सहस्रसंख्या बलवन्तो राजानः । रुक्मिणीप्रमुखा द्वात्रिंशत्सहस्रसंख्यका राज्यः । इत्थमतुलपरिवारपरिवृतः श्रीकृष्णस्तत्र द्वारिकायां राज्यसुखमनुभवन्नास्ते ।

---

अत्र केचिदाहुः—अष्टमे तपसि संस्थिते कृष्णे शक्रप्रेषितरथारूढो भगवान्नेमिनाथो युधि समागत्य शङ्खमधमत् । तन्नादेन वित्रस्ता समस्तापि वैपक्षी सेना कान्दिशीका ननाश ।

७९ सुरनिबद्धरामकृष्णयोर्नेमिनाथेन मोचनम्—

अथैकदा सौधर्मेन्द्रः स्वसभायां सकलदेवसमक्षं नेमिनाथस्य बलं तोष्टवाञ्चकार। तदश्रद्दधानो मिथ्यात्वी देवस्तदैव रैवतकाचलोपरि सुरन्धराभिधां नगरीं निर्माय मानवरूपेण निवसन् द्वारकातः समागतांल्लोकान् बाधितुमारभत। तदा महामानी अनाधृष्टिर्लोकबाधाकारिणं तं देवं निग्रहीतुं तत्राऽऽगात्। ततो जायमाने मिथो युद्धे स देवमायया-ऽनाधृष्टिं पराजित्य बद्ध्वा निजनगरं निनाय। एतां वार्त्तां श्रुत्वा समुद्रविजयादयः स्वयमेव तत्र गन्तुमुद्यता अभूवन्। तदवसरे रामकृष्णौ सर्वान्निवार्य तत्राऽऽयातौ। तावपि विजित्य निबध्य कारागारेऽतिष्ठिपत्सुरः। तेन द्वारिकायां सर्वत्र कोलाहलः प्रससार—'हं हो! रामकृष्णयोः पराजितयोः को नस्त्रायेत' सर्वे यादवाश्चिन्तातुराश्च बभूवुः। तदा सत्यभामाद्या नेमिनाथमूचिरे—देवर! 'त्वमनन्तबली श्रूयसे तदपि ते बान्धवान् कश्चिदरातिर्जित्वा बद्ध्वा कारागारेऽक्षिपत्। त्वं तादृशीं शक्तिं बिभ्रदपि निश्चिन्त एव तिष्ठसि, याहि पौरुषं दर्शय, बन्धून्मोचय।' इत्थमभ्यर्थितो नेमिनाथ एकाक्येव रथारूढस्तत्राऽऽगत्य विपक्षनगरीं परितः स्वरथं परिभ्राम्यन् गोशीर्षसहितं प्राकारं न्यपीपतत्। ततो देव एनं नेमिनाथं भापयितुं सिंहान् ससर्ज। तानभिमुखमागच्छतः श्रीनेमीश्वरो धनुषष्टङ्कारनादेन व्यलीलयत्। देवस्ततो ध्वान्तास्त्रममुचत्, तेन हि सकलं ध्वान्तमयमभूत्। तदपि प्रभुरुद्योतमयमिषुं विमुच्य वेभिदाञ्चकार। ततो मेघं वर्षयन्तं सुरं विलोक्य प्रभुः पवनमुदपीपदत्, तेन मेघाश्छिन्नाभिन्नतां ययुः। ततः सुरेण वह्निवर्षणे प्रारब्धे जलवर्षणमसीसृजत्प्रभुः। प्रान्ते भगवान् मोहमयं शरं ववर्ष, तेन सगणो देवो मुमूर्च्छ; तदा सौधर्मेन्द्रस्तत्राऽऽगात्। प्रभुमनुनीयमानोऽवदत्—'प्रभो! अमुना मौर्ख्यमकारि, तावकं बलमेष मन्दधीः कथं जानीयात्?' इति जल्पन्निन्द्रस्तं सुरं त्रातवान्। ततो लब्धचेतनो देवो महतोत्सवेन कृष्णादीन् द्वारिकामनयन्नेमिनाथमभिवन्द्य स्वस्थानमगमत्।

८० नेमिनाथकृष्णयोर्मिथो भुजनमनम्—

अथैकदा भगवान् वयस्यैः सह लीलां कुर्वन्नितस्ततः पर्यटन् कृष्णस्यायुधशालायां प्राविशत्। तत्र नानाशस्त्राऽस्त्राणि पश्यन्तं भगवन्तं बालं जानन्तो रक्षका ऊचुः—'त्वमधुना किशोरवया असि, अत एतेभ्यः पृथगेव तिष्ठ। यतस्तरुणैरेव पीतं तक्रं हितायते स्तनन्धयानान्तु पीतं विषायते।' तथाप्यरिष्टनेमिस्तद्वाक्यमगणयञ्छ्रीकृष्णस्य चक्रं कुम्भकारचक्रमिव चिरमबिभ्रमत्। शार्ङ्गं धनुः कमलनालमिवाऽनीनमत्। कौमोदिकीं गदामपि यष्टिमिव निजस्कन्धे धृतवान्। ततः शङ्खं पाञ्चजन्यनामकं दध्मौ। तेन गिरिशिखराणि तुत्रुटुः, सागरश्चुक्षुभे, गजाश्च मुक्तबन्धना बहिराययुः, लोका बाधिर्यं प्रापुः, नगर्याः प्राकारः पपात, वित्रस्ताः सर्वे यादवा मुमूर्च्छुः, रामकृष्णादयोऽपि क्षुब्धाः किमिदं किमिदमिति जल्पन्तो व्याकुला बभूवुः। कोऽयं?, इति पृष्टे लोका अवदन्—स्वामिन्! आयुधशालां प्रविष्टो नेमिः पाञ्चजन्यं धमन्नेवमकरोत्। तच्छ्रुत्वा चमत्कृतिं प्राप्तः कृष्णः समूचे—'बन्धो! आगम्यतामावामधुना बलपरीक्षणं कुर्वः, कस्य भुजयोः कियती शक्तिरिति विद्मः।' नेमिरुवाच—भूमिलुण्ठनादिखेलनेन बलपरीक्षा तु महतां पुंसां नैव प्राशस्त्यमर्हति, अत आवां मिथो भुजनमनक्रीडयैव बलं परीक्षयेव। इति नेमिकुमारोक्तिं कृष्णोऽपि मेने। ततः पुरुषोत्तमः स्वभुजं प्रसार्य 'मम भुजं नमय' इत्यवक्। ततो नेमिरेकयाऽङ्गुल्यैव कमलनालमिव कृष्णभुजं नमयाञ्चक्रे। तदनु नेमिर्निजबाहुं वितस्तार, तं धृत्वा कृष्णश्चिरं सर्वाङ्गबलदानेनापि शाखामाश्रित्य कपिरिव झूलनमकरोत्, तथापि मनागपि नमयितुं न प्राभवत्। तदा नेमिर्जगौ—'बन्धो! माता देवकी त्वया शैशवे पालनायामान्दोलनं सम्यङ् नो कारितवती, अतोऽद्य त्वां झूलयामि।' इत्युपहासितः कृष्णो दध्यौ—यदसौ बलीयानस्ति ग्रहीष्यति मे साम्राज्यम्। तदा 'भोः कृष्ण! किमेवं विषी-

दसि ?, चिन्तां मा कृथाः । एष नेमिराबालब्रह्मचारी द्वाविंशतितमस्तीर्थंकरो भविष्यति । अतुलां शक्तिं बिभ्रदपि तावकीं समृद्धिं मनसापि नैव स्पृहयिष्यते ' इत्याकाशवागाविरासीत् । तन्निशम्य स्वस्थीभूतः कृष्णः स्वस्थानमायातः ।

८१ गोपीकृतविवाहप्रार्थनं, तदुत्सवश्च—

अथैकदा त्रिंशद्वर्षीयं नेमिकुमारं संसारविमुखं दृष्ट्वा शिवादेवी सत्यभामादिगोपीरुवाच—यूयं वसन्तक्रीडनव्याजेन नेमिकुमारं वनं नीत्वा तथा प्रायतध्वं यथा झटित्यसौ रागीभूय कामपि कन्यामुद्वहेत। ततः सत्यभामाद्याः षोडशसहस्रगोप्यो मिलित्वा नेमिकुमारमभ्यर्थ्य सहस्राम्रवनं नीत्वा, विचित्रवचनास्ता नानाहावभावं दर्शयन्त्यः प्रार्थयितुं लग्नाः । तास्वेकाऽवदत्—भ्राता ते षोडशसहस्रं गोपिका उपयेमे, त्वमेकामपि वोढुं न शक्नोषि तत्र को हेतुः ? । द्वितीयोचे—विद्युच्चपलमिदं यौवनं वयः किं वृथा कुरुषे ?, कामपि मनोरमां परिणीय तारुण्यमदः सफलीकुरुष्व । तृतीयोचे—दारग्रहणमकुर्वञ्जनो मोक्षमपि लब्धुं नार्हति । ऋषभादयस्तीर्थङ्करा अपि प्रथमं विषयरसं पीत्वैव पश्चादात्तव्रता मोक्षं ययुः । त्वं किं तेभ्योऽप्यधिको बुभूषसि ?, यदुद्वाहादुपरमसे। सत्यभामा जगौ—सख्यः ! यदेष सर्वासां नः प्रार्थनं नोररीकुरुते तर्हि वसनं गृहीत्वा बलादपि स्वीकारयितव्यम् । लक्ष्मणा जगाद—सखि ! एवं मा कृथाः, एष पूज्यो वर्त्तते । तेन सह बलात्कारकरणं न शोभते । त्वं किमेनमभ्यर्थयसे, एतस्मिन् पौरुषमेव नास्ति । नोचेद्विरागीभूय मदुक्तिं नोपेक्षेत । परमेनं कथयामि भवान् कामपि कन्यां परिणयतु । तस्या भरणपोषणादिकं तु षोडशसहस्राणामस्माकमिव ते भ्रातैव करिष्यते । तव तस्यापि चिन्ता नोद्भविष्यति । इत्थं सोपहासं तासां वचः श्रुत्वा नेमिनाथो जहास । तदा ताः करतालिकां ददाना ऊचिरे—

सफलोऽस्माकं प्रयासः । करिष्यत्यसौ विवाहम् । तास्तद्देवाऽन्तिकमागत्य मातरं शिवादेवीं तत्सर्वमाचचाक्षिरे । ततो भगवतः पाणिग्रहाभिलाषं बुद्ध्वा पितरौ मुमुदाते । ततः शिवादेव्या प्रेरिताः कृष्णसमुद्रविजयादयो राजान उग्रसेनराजस्य सदनं गत्वा भगवदर्थं राजीमतीं कन्यां ययाचिरे । सोऽपि सहर्षं स्वीचकार । तदोभयत्र विवाहमहोत्सवः प्रववृते । सर्वां सामग्रीं सम्पादयितुं लग्नौ तयोर्मातापितरौ । भगवान् निःस्पृहीसन्नपि विनीतत्वान्मातापित्रोर्मनोरथमभञ्जन्नेव मौनमाधाय तस्थौ । ततो नैमित्तिकक्रोष्टुकदत्तलग्नदिवसे श्रावणशुक्लषष्ठ्यां तिथौ भगवन्मातापितरौ महताडम्बरेण महोत्साहेन जन्यं सज्जीकृत्य चेलतुः । तत्र षोडशसहस्रमिताश्छत्रधरा राजानः, ऐरावतानुकारिणो दन्तिनो द्वाचत्वारिंशल्लक्षम्, एतावन्तस्तुरगाः स्वर्णाभरणविभूषिताः, एतावत्संख्यान्विताः सुसज्जिता रथाः, अष्टचत्वारिंशत्कोटिपत्तयः शत्रुदलविघातकुशलाः, एकैकस्मादनुपमा अश्वा नवकोटयः, षण्णवतिकोटयो दीपकर्त्तारो नराः ( नापिताः ), नवकोटिमिता यष्टिधराः, अम्बरमुखराऽऽडम्बरकरणप्रवृत्तवाद्यमानवाद्यानामर्ककोटिः, साम्बप्रमुखा दुर्दान्ताः षष्टिसहस्रमिताः कुमाराः पारासिकजातीयतुरङ्गमारूढाः, अरिमर्दनप्रमुखाः पञ्चलक्षकुमारा बहोलीजातीयाऽश्वाऽऽरूढाः, प्रद्युम्नादयः कुमाराः पञ्चसप्ततिसहस्रमिता हयरेवाजातीयाऽश्वयायिनः, सप्तलक्षकुमारा वीरप्रमुखाः पानीपतजातीयतुरङ्गमाऽऽरोहिणः, सागरचन्द्रप्रभृतयो लक्षकुमाराः काम्बोजतुरगाऽऽरूढाः, अनाधृष्टिप्रमुखास्त्रयोदशलक्षकुमारा रेवाजातीयाऽश्वाऽऽरूढाः, पालकादयः सप्तलक्षकुमारा अष्टमङ्गलजातीयाऽश्वाऽऽरोहिणः, दण्डनेमिप्रमुखाः कुमारा अर्कलक्षमिता रेमङ्गलीजातीयाऽश्वाऽऽरूढाः, रथनेमिप्रमुखा नवलक्षकुमाराश्चन्द्रप्रभाजातीयाऽश्वाऽऽरोहिणः, महानेमिप्रमुखाः पञ्चदशलक्षमिताः कुमारा अग्निपन्थाजातीयतुरगाऽऽरूढाः, इत्थमेते यादवकुमारा भोगभ्रमराः

स्वधर्मतत्पराः परकान्तासहोदराः सत्यसन्धाः शरणागतवत्सलाः शौर्यौदार्यगाम्भीर्यचातुर्यादिगुणाधारा रणाङ्गणे धीराः प्रतिपक्षिहृदयभूमिदलनशीराः सर्वाङ्गीणसौरभ्यधराः केसराभोष्णीषधराः पृथुग्रीवभुजस्कन्धा वृहद्वक्त्राऽऽयतश्मश्रुशोभां वहन्तश्चेलुः । चतुरशीतिकोट्यः स्त्रियो मधुरं गायन्त्यः, षट्पञ्चाशत्कोटयो ध्वजिनः, अत्युच्चैर्विरुदावलीं पापठ्यमाना द्वादशकोटयो वन्दिनः, द्वादशकोटिमितशिबिकादियानानि, पञ्चदशलक्षं खच्चरा भारवाहिनः, त्रिलक्षं श्रीछत्रम्, रथा द्वाचत्वारिंशल्लक्षम्, कोटित्रयी चामराणाम्, अशीतिलक्षं नीशानम्, सप्ततिलक्षमानकानाम्, भेर्यश्च षण्णवतिकोटयो वाद्यमानाः, नवलक्षं मर्दलाः, यष्टिधारिणः पञ्चचत्वारिंशल्लक्षम्, षष्टिकोटिवैणाविकाः, प्रधानवर्गा नवतिकोटिमिताः । इत्थं वादित्रैर्जन्यैश्चानुगतः, सर्वौषधिमिश्रसुरभिवारिणा स्नपितः, मात्रा शुभगन्धाक्षतादिना वर्धापितः, शिरसि धृतनवकोट्यर्घमुकुटः, पञ्चाशत्कोटिकाङ्गदशोभितबाहुयुगलः, भानुकोटिमूल्यकरत्नाढ्यकुण्डलयुगलमण्डितकर्णयुगलः, अष्टचत्वारिंशत्कोट्यर्घरत्नजटिततिलकविभूषितभालः, पञ्चविंशतिकोटिलभ्यमुद्रिकासुशोभिताङ्गुलिकः, एतावत् ( २५ ) कोटिकनानारत्नजटितग्रीवाभरणः, आवर्द्धायिकसद्रत्नजटितशृङ्खलः, पञ्चाशत्कोटिकरत्नमयचम्पकलिकः, देवार्पिताऽमितार्घोष्णिग्धरः, पञ्चविंशतिकोटिनिर्मितरत्नजटितमणिबन्धाऽऽभरणः, एतावत् ( २५ ) कोटिकरत्नजटितचरणाऽऽभरणः, त्रिंशत्कोटिकसद्रत्नमयोपानहौ परिदधानः, षण्णवतिकोटिकरत्नाञ्चितश्रीफलकरः, परिधापितोचिताऽशेषवसनः, अञ्जनाञ्चितनयनः, सुसज्जितगजेन्द्राऽऽरूढश्चामराभ्यां वीज्यमानः, शिरसि धृतमेघानुकारिभासुरातपत्रो मूर्त्तिमान् पुष्पधन्वेव शोशुभ्यमानः, इन्द्रादिभिर्देवैः परिवृतः, वरराजो भगवान् नेमिनाथ इन्द्राणीप्रमुखसुरसुन्दरीषु सानन्दं जेगीयमानासु रम्भाद्यप्सरःसु नरीनृत्यमानासु सरस्वत्यां वीणां वादयन्त्यां कृष्णबलरामादिदशदाशार्हेषु प्रमोदभरेष्वनुगच्छत्सु मन्दं मन्दं व्रजन्नुग्रसेनसदनाऽभ्याशमाययौ ।

८२ राजीमत्या हर्षविषादकथनं, बद्धपशुमोचनश्च—

अथ गवाक्षाऽऽसीना सखीवृन्दसमन्विता सुसज्जिता राजीमती काञ्चित्सहचरीमपृच्छत्—'यो मे हरिष्यते कौमारं तं दर्शय ?,' समूचे सा—'स्वामिनि ! योऽसौ गजराजोपरि सुखाऽऽसीनो मदनमूर्त्तिरिव भासमानो नेमिकुमारः समागच्छति, तमेव भाविनं प्राणप्रियं जानीहि ।' ततो राजीमती तमवलोक्य दध्यौ—'महन्मे भाग्यं यदयं मां परिणेष्यते ।' तदा चन्द्रानना जगाद—एष वरो मारविजित्वरीं सुषमां धत्ते, परं श्यामोऽस्ति । मम सख्यास्तु गौर एवाऽनुरूपो वरो भवितुमर्हति । राजीमत्यूचे—सखि ! किमज्ञेव भाषसे ? । श्यामत्वे कियान् गुणो वर्त्तते तन्न वेत्सि ? । श्याम एव युवतीनां गौरवदनं बिन्दुरूपेण लोचने च कज्जलरूपेण मण्डयते किञ्च चित्रावल्ली कस्तूरी नवनीरदकचकषोपलप्रभृतयः श्यामा एव भवन्ति । अतो युवतीजनैः श्यामो नैव जात्वपि निन्दनीयः । केवलगौरस्तु लवणतुषाऽस्थितूलादयो भवन्ति, परमेते यात्रादौ शस्ता न भवन्ति । इत्थं सख्या विवदमाना लोचनाभ्यां वरं पिबन्ती राजीमती मनस्यमितमानन्दं बिभर्ति स्म । तदा तस्या दक्षिणाक्षि पस्पन्दे । तेन समीहितसिद्धावन्तरायः कश्चित्पतिष्यत्येवेति शङ्कमाना सखीमाचष्ट—'मम दक्षिणं नयनं पास्पन्दीति न जाने किं भविष्यति ? ।' सख्युवाच—हर्षस्थाने किमिदं विपरीतं भाषसे ? । तदवसर एव नेमिरपि तोरणे समागच्छन्नधिमार्गमेकत्रभवनवाटके निगृहीतान्मृगाऽजमेषशशकलावकुक्कुटतित्तिरसारसबककोकिलमीनादीन् रोरूयमाणान् विना वारि म्रियमाणान् पशुपक्षिगणान् लोकं लोकं प्रभुः करुणापरो जज्ञे । तदा चैको हरिणयुगलो मिथो विलपन्नेमिमेवमभ्यर्थयाञ्चक्रे—'प्रभो ! अस्माँस्त्रायस्व त्रायस्व, वयमपराधं विनैव वध्यभूमौ नीता अवश्यं करुणावरुणालयेन मोचनीयाः ।' प्रभुर्हस्तिपकमप्राक्षीत्—कथमेकत्रराशीकृता एते जीवा दृश्यन्ते ? । सोऽ-

वक्-स्वामिन् ! तवैव विवाहोत्सवे समागतानां जनानामशनार्थमेते घानिष्यन्ते । तच्छ्रुत्वा प्रभुर्जगाद्-धिग् धिगीदृशं नरकद्वारभूतं विवाहम्, नाऽहं चिकीरेतत् । तत्क्षणमेव गजादुत्तीर्य सर्वाञ्जीवान्मोचयित्वा रथमारुह्य परावर्त्तत । तदा समुद्रविजयकृष्णप्रमुखा यादवाः शिवादेवी च भगवन्तं निवर्त्तयितुं बह्वयतन्त, परं भगवान् न न्यवृतत् । अभ्यधाच्च-' सर्वे जीवा बन्धनादेव महादुःखमनुभवन्त्यतोऽहं महादुःखबन्धनहेतुभूतपुत्रकलत्रपितृमातृप्रमुखरागेऽतिष्ठन्नेव संसारममुमसारं जिहासामि, अतो यूयं निवर्त्तध्वम् ।

भगवत्परावर्त्तनवार्त्तां श्रुत्वैव विलपन्ती, हारं त्रोटयन्ती, वासांसि क्षिपन्ती, शिरोवक्षसी ताडयन्ती, कचकलापं किरन्ती, कङ्कणे च मणिबन्धतः समुत्तारयन्ती, सर्वाण्याभरणानि भञ्जती, निर्जले सरसि मत्सीव दुःखं नयन्ती राजीमती भूमौ पपात मुमूर्च्छ च । इत्थं विरहाग्निदग्धीकृतहृदया क्षणं रुदती, क्षणं पश्यन्ती, क्षणमाक्रन्दन्ती, क्षणं निःश्वसती, क्षणं मूर्च्छन्ती, क्षणं चेतन्ती, क्षणं कुप्यन्ती, क्षणमपश्यन्ती, राजीमती भगवन्तमुपालभत्-' यदुकुलकमलदिवाकर ! शरणागतवत्सल ! करुणासागर ! मामबलामसहायां यदकालेऽत्याक्षीस्तत्ते नैव घटते, जगति चराऽचरेषु दयां वितन्वन् मां विस्मरन् निर्लज्ज इव निजमनः शतखण्डतां किमिति नाऽऽपादयसि ?, ' एवं विलपन्तीं तां मातापित्रादिवर्गः कथयितुं लग्नः-' वत्से ! तव कापि गता नास्ति, स तु प्रथमत एव वैराग्यवानासीत् । विरागिणि रागकरणं कानने रोदनमिव वैफल्यमयते। अतस्तवेदृशी चिन्ता न घटते, पुनरनुरूपेण वरान्तरेण ते पाणिपीडनं कारयिष्यामि । ' गुर्वादेरुक्तिं श्रुत्वा राजीमत्यवदत्-मान्यतमाः ! यूयमेवं गर्हितं कथं ब्रूथ ?, अहन्तु नेमिनाथचरणमेव शरणमकरवम् । नूनमहं तन्नाम्नैव स्वां सुभगां वेद्मि । स मे पाणिं नाऽग्रहीच्चेदहमेव तत्पाणिकमलं स्वशिरसि धापयिष्यामि । वरान्तरवरणन्तु स्वप्नेऽपि

नैव चिकीर्षामि, इत्थं व्याहृत्य मनोरथशतैः कालं गमयन्ती शीलमवन्ती पित्रोकसि न्यवात्सीत्। एकदा राजीमतीं केनापि यत्नेनानुरागिणीं विधाय स्वीयभोगाभिलाषां पूर्णां करिष्यामि, इति धिया रथनेमिस्तां वैराग्यवासितहृदयामपि मधुरालापयोग्यवस्तुप्रदानादिनाऽनुकूलयितुमारभत। तदीयदुर्भावं विदित्वा तत्प्रतिबोधार्थं सैकदा शिखरिणीं निपीय तत्कालमागतं रथनेमिमालोक्य, तूर्णं मीढलफलप्रयोगेण वमित्वा तत्पातुं रथनेमिं समूचे। सोऽवक्-'सुलोचने! वान्तं कथं पीयेत?।' तदोक्तं तया-'यद्येवं मनुषे तर्हि भगवता नेमिनाथेन वान्तं मदङ्गमुपभोक्तुं वाञ्छन्मनागपि कथं न लज्जसे?, धिग् धिक् त्वामीदृशगर्हितं चिकीर्षन्तम्। रथनेमे! अकीर्त्तिं कामयमानस्य तव जीवितान्मरणमेव श्रेयो भविष्यति, इती तथ्यं जानीहि। अहं हि श्रीनेमीश्वरं विना कमप्यन्यं सुरेन्द्रमपि नैव कामये, तर्हि त्वादृशां का गणना?,' इति श्रुत्वा रथनेमिर्विलक्षतामगमत्।

८३ भगवतो दीक्षाऽऽदानं कैवल्योत्पत्तिश्च—

अथैकदा समागतैर्लौकान्तिकदेवैर्वीर इव धर्मप्रवर्त्तनाय प्रतिबोधितः स्वयमप्यवधिज्ञानेन तदवसरं जानन् वार्षिकं दानं दत्त्वा, भगवान्नेमिनाथः श्रावणशुक्लषष्ठीतिथौ प्रथमे प्रहरे उत्तरकुराख्यायां शिबिकायामासीनो रेवताचलोद्यानेऽशोकतरोस्तले समाययौ। तत्र शिबिकात उत्तीर्य निजपाणिनैव सर्वाभरणादीनि समुत्तार्य, पञ्चमुष्टिलुञ्चनानि च कृत्वा षष्ठभक्तेन निर्जलेन चित्रानक्षत्रे चन्द्रयोगसमुपागते शक्रार्पितमेकं देवदूष्यं वसनं गृहीत्वा सहस्रपुरुषैः सह प्रवव्राज। ततश्चतुष्पञ्चाशद्दिवसानि कायं व्युत्सृजन्नतिष्ठत्। पञ्चपञ्चाशत्तमदिने आश्विनकृष्णाऽमावास्यायां पश्चिमे प्रहरे रैवताचलोपरि वेतसीतरोस्तले चित्रानक्षत्रे चन्द्रयोगे विहितनिर्जलाष्टमतपसो भगवतः शुक्लध्यानं विद-

धतो नेमिनाथविभोरनन्तकेवलज्ञानदर्शने समुत्पेदाते । ततः समुत्पन्ने कैवल्ये देवैः समवसरणं व्यरचि रैवताचलोपरि सहस्राम्रवने । वनपालः समेत्य श्रीकृष्णं वर्धापितवान् । ततः कृष्णाद्याः सपरिवारा यादवा वन्दितुमाजग्मुः । राजीमत्यपि समायाता । तत्र भगवतो देशनां श्रुत्वा वरदत्ताख्यो राजा प्रतिबुध्य सहस्रद्वयपुरुषैः सह प्राव्राजीत् ।

८४ स्वस्य राजिमत्याः सह प्राक्तनभवकथनम्—

तदवसरे कृष्णोऽवादीत्—' प्रभो ! एषा राजीमती त्वयि कथमियन्तं मोहं बिभर्त्ति ? ' भगवानुवाच—कृष्ण ! मया सहैतस्या आष्टभविकः सम्बन्धो वर्त्तते । तथाहि—प्रथमभवे धननामाऽहमासं राजा, एषा धनवती नाम्नी राज्ञी ममाऽभूत् । द्वितीये चावां देवलोके देवावभूताम् । तृतीये ततश्च्युतोऽहं चित्रगतिनामा विद्याधरराजो बभूवान्, इयं मे रत्नवती नाम्नी राज्ञी बभूव । चतुर्थे द्वावपि तुरीयदेवलोकमगमाव । पञ्चमे ततश्च्युतोऽपराजितनामा राजाऽभूवम्, एषा प्रियमती नाम्नी मे भार्या जाता । षष्ठे चोभौ खल्वेकादशं देवलोकं प्राप्तौ । सप्तमे ततश्च्युत्वाहं शङ्खनामा राजा जज्ञिवान्, तत्रेयं सोमवत्याख्या राज्ञी मे बभूव । अष्टमे चावामुभावपराजिताख्याऽनुत्तरविमाने देवौ जातौ । ततश्च्युत्वा नवमेऽस्मिन् भवेऽहं नेमिर्जातोऽस्मि, इयञ्च राजीमती जातास्ति । इति राजीमत्या सह स्वस्य सम्बन्धं व्याहृत्य भगवानन्यत्र विजहार ।

८५ राजीमत्या दीक्षाऽऽदानं, रथनेमेः प्रबोधो, मोक्षगमनञ्च—

पुनरेकदा भगवान्नेमीश्वरो रैवताचलोपरि समवससार । तदा बह्वीभी राजकन्याभिः सह राजीमती दीक्षां ललौ । रथनेमिरपि दीक्षां जग्राह । एकदा रथनेमिर्द्वारिकातो गोचरीं लात्वा भगवदन्तिकमागच्छन्मार्गे वृष्टिभिया रैवताचलगुहान्तः प्रविश्यैकत्र कोणे समास्त । दैवा-

द्राजीमत्यपि तस्मिन्नेवाऽवसरे भगवन्तमभिवन्द्य परावर्त्तमाना जलक्लिन्नवसना सती मार्गासन्नत्वात्तस्यामेव गुहायामागत्य, निर्जनत्वान्निर्वसनीभूय वासांसि शोषयितुं लग्ना । तदा तदङ्गमनावृतं विलोक्य कामकिङ्करीभूय, त्यक्तव्रीडो रथनेमिस्तां भोगाय प्रार्थयितुं लग्नः । सा तु स्वाङ्गानि सङ्गोप्य तमवादीत्—भोः ! ' अहमुग्रसेनदुहितास्मि, त्वमपि समुद्रविजयसूनुरसि । आवयोर्निर्मलं विशालं प्रख्यातिमत्कुलं तन्मलिनं मा कृथाः, चित्तं सुस्थिरं कृत्वा निरतिचारं चारित्रं परिपालय, येनाऽसारमपारममुं भवसागरं तरिष्यसि । नोचेद्धडवनस्पतिरिव विषयवातचालितः पुनः पुनर्भवाम्बुधावेव पतिष्यसि । ' ईदृक्सारोपदेशं निशम्य प्रतिबुद्धो रथनेमिर्मनः स्थिरं कृत्वा भगवत्पार्श्वे तदालोच्य, निर्दोषं चारित्रं परिपाल्य ज्ञानावरणीयादिकर्माणि क्षपयित्वा कैवल्यभागभूत् । अथ राजीमती चतुःशताब्दीं सागारत्वे, वर्षमेकं छाद्मस्थ्ये, समाः पञ्चशतानि कैवल्ये, इत्थमेकोत्तरनवशतवर्षाणामायुर्भुक्त्वा श्रीनेमिनाथविभोः प्रागेव मोक्षमध्यगच्छत् । अत्रोत्प्रेक्षते कविः—भगवतः प्राक् सा यदगान्मोक्षं, तन्मन्ये या मुक्तिकुमारी भगवन्तमलोभयत ?, सा किं श्रिया मत्तोऽधिकेति दिदृक्षमाणेव ।

८६ श्रीनेमिनाथस्य परिवारसंख्यानं, मोक्षगमनञ्च--

भगवतोऽरिष्टनेमेरष्टादशगणधराः, वरदत्तप्रमुखाः साधवः १८०००, आर्ययक्षिणीप्रमुखाः साध्व्यः ४००००, नन्दप्रमुखाः श्रावकाः १६९०००, महासुव्रताप्रभृतिश्राविकाः ३३६०००, चतुर्दशपूर्वधराः साधवः ४००, अवधिज्ञानिनो मुनयः १५००, केवलज्ञानिनः १५००, वैक्रियलब्धिमन्तः १५००, विपुलमतयः १०००, वादिमुख्याः साधवः ८००, अनुत्तरविमानगा एकावतारिणः १६००, मोक्षं गता साधवः १५००, सिद्धिं

---

१ नेमीश्वरादष्टवर्षहीनाऽऽसीद्राजीमतीत्याचष्टे कश्चित् ।

गताः साध्व्यः ३०००, आसन् । अर्हतो भगवतोऽरिष्टनेमेरन्तकरीमर्यादा द्विधा जाता । तत्राऽऽद्या युगान्तकृद्भूमिरष्टमं पट्टधरं यावदासीत् । विभोः केवलज्ञानोत्पत्त्यनन्तरं वर्षद्वये कश्चिन्मुनिः सिद्धिमापदिति पर्यायान्तकृद्भूमिः । अथ भगवाँस्त्रीणि वर्षशतानि गृहे कुमारावस्थ आसीत्, चतुष्पञ्चाशद्दिवसाँश्छाद्मस्थ्यस्थो व्यत्यैत्, एतावद्दिनोनवर्षाणां सप्तशतीं केवलीभूय विश्वस्मिँञ्जनान् प्रत्यबूबुधत् । इत्थं सम्पूर्णं वर्षसहस्रमायुर्भुक्त्वा विधूताऽशेषचतुष्कर्मक एतस्यामवसर्पिण्याममुष्मिन् दुःषमसुषमानामके चतुर्थारके वह्नतीते आषाढशुक्लाष्टमीतिथौ चित्रानक्षत्रे चन्द्रयोगे मध्यरात्रे रैवताचलोपरि षट्त्रिंशदधिकपञ्चशतसाधुभिः सत्रा कृतमासिकाऽनशनपानः पद्मासनाऽऽसीनो नेमिनाथः सर्वदुःखविनिर्मुक्तोऽभूत्—मोक्षं गतः ।

८७ सर्वेषां तीर्थकृतामवान्तरकालः—

अथ सर्वेषां वाचने सौकर्यार्थं नृगिरैव सकलतीर्थङ्कराणां संक्षिप्तान्तरकालो दर्श्यते—

२३ श्रीवीरनिर्वाणथी अढीसो ( २५० ) वर्षे श्रीपार्श्वनाथ निर्वाण, तेवार पछी बार सो त्रीश ( १२३० ) वर्षे पुस्तक वाचनादि । २२ श्रीपार्श्वनाथ निर्वाणथी त्र्याशी हजार सात सो पचास वर्षे श्रीनेमिनाथ निर्वाण, तेवार पछी चोराशी हजार नव सो एंसी वर्षे पुस्तक वाचनादि । २१ श्रीनमिनिर्वाणथी पांच लाख वर्षे श्रीनेमिनिर्वाण, तेवार पछी चोराशी हजार नव सो एंसी वर्षे पुस्तक वाचनादि । २० श्रीमुनिसुव्रत निर्वाणथी छ लाख वर्षे श्रीनमिनिर्वाण, तेवार पछी पांच लाख चोराशी हजार नव सो एंसी वर्षे पुस्तक वाचनादि । १९ श्रीमल्लिनाथना निर्वाणथी चोपन लाख वर्षे श्रीमुनिसुव्रत निर्वाण, तेवार पछी इग्यारे लाख चोरासी हजार नव सो एंसी वर्षे पुस्तक वाचनादि । १८

श्रीअर निर्वाणथी कोटि हजार वर्षे श्रीमल्लि निर्वाण, तेवार पछी पांसठ लाख चोरासी हजार नव सो एंसी वर्षे पुस्तक वाचनादि । १७ श्रीकुन्थुनाथ निर्वाणथी कोटिहजार वर्षे न्यून पल्योपमना चोथे भागे श्रीअरनाथ निर्वाण, तेवार पछी कोटिहजार पेंसठ लाख चोरासी हजार नवसों एंसी वर्षे पुस्तक वाचनादि । १६ श्रीशान्तिनाथ निर्वाणथी अर्धा पल्योपमे श्रीकुन्थुनाथ निर्वाण, तेवार पछी पल्योपमनो चोथो भाग पेंसठ लाख चोरासी हजार नव सो एंसी वर्षे पुस्तक वाचनादि । १५ श्रीधर्मनाथ निर्वाणथी पोणा पल्योपमे न्यून त्रण सागरोपमे श्रीशान्तिनाथ निर्वाण, तेवार पछी पोणो पल्योपम पेंसठ लाख चोरासी हजार नव सो एंसी वर्षे पुस्तकवाचनादि । १४ श्रीअनन्तनाथ निर्वाणथी चार सागरोपमे श्रीधर्मनाथ निर्वाण, तेवार पछी त्रण सागरोपम पेंसठ लाख चोरासी हजार नवसो एंसी वर्षे पुस्तक वाचनादि । १३ श्रीविमलनाथ निर्वाणथी नव सागरोपमें श्रीअनन्तनाथ निर्वाण, तेवार पछी सात सागरोपम पेंसठ लाख चोरासी हजार नवसो एंसी वर्षे पुस्तक वाचनादि । १२ श्रीवासुपूज्य निर्वाणथी त्रीश सागरोपमें श्रीविमलनाथ निर्वाण, तेवार पछी सोल सागरोपम पेंसठ लाख चोरासी हजार नव सो एंसी वर्षे पुस्तक वाचनादि । ११ श्रीश्रेयांस निर्वाणथी चोपन सागरोपमे श्रीवासुपूज्य निर्वाण, तेवार पछी छेंतालीस सागरोपम पेंसठ लाख चोरासी हजार नव सो एंसी वर्षे पुस्तक वाचनादि । १० श्रीशीतलनाथ निर्वाणथी सो सागरोपमे छासठ लाख छवीस हजार वर्षे न्यून एक कोडी सागरोपमे श्रीश्रेयांस निर्वाण, तेवार पछी त्रण वर्ष साडा आठ मास अने बेतालीस हजार वर्ष न्यून छासठ लाख छवीस हजार वर्षे अधिक सो सागरोपम नव सो एंसी वर्षे पुस्तक वाचनादि । ९ श्रीसुविधिनाथ निर्वाणथी नव कोडी सागरोपमे श्रीशीतलनाथ निर्वाण, तेवार पछी बेतालीस हजार त्रण वर्ष साडा आठ मास न्यून

एक कोडी सागरोपमे श्रीवीरनिर्वाण, तेवार पछी नव सो एंसी वर्षे पुस्तक वाचनादि । ८ श्रीचन्द्रप्रभ निर्वाणथी नेवु कोडी सागरोपमे श्रीसुविधि- नाथ निर्वाण, तेवार पछी बेतालीस हजार त्रण वर्ष साडा आठ मास न्यून दश कोडी सागरोपमे वीरनिर्वाण, ते पछी नव सो एंसी वर्षे पुस्तक वाचनादि । ७ श्रीसुपार्श्व निर्वाणथी नव सो कोडी सागरोपमे श्रीच- न्द्रप्रभ निर्वाण, तेवार पछी बेतालीस हजार त्रण वर्ष साडा आठ मास न्यून सो कोडी सागरोपमे श्रीवीरनिर्वाण, तेवार पछी नव सो एंसी वर्षे पुस्तक वाचनादि । ६ श्रीपद्मप्रभ निर्वाणथी नव हजार कोडी सागरो- पमे श्रीसुपार्श्वनाथ निर्वाण, तेवार पछी बेतालीस हजार त्रण वर्ष साडा आठ मास न्यून एक हजार क्रोड सागरोपमे श्रीवीरनिर्वाण, तेवार पछी नव सो एंसी वर्षे पुस्तक वाचनादि । ५ श्रीसुमतिनाथ निर्वाणथी नेवुं हजार क्रोड सागरोपमे श्रीपद्मप्रभ निर्वाण, तेवार पछी बेतालीस हजार त्रण वर्ष साडा आठ मास न्यून दश हजार क्रोड सागरोपमे श्रीवीर- निर्वाण, तेवार पछी नव सो एंसी वर्षे पुस्तक वाचनादि । ४ श्रीअभिन- न्दन निर्वाणथी नव लाख क्रोड सागरोपमे श्रीसुमतिनाथ निर्वाण तेवार पछी बेतालीस हजार त्रण वर्ष साडा आठ मास न्यून एक लाख क्रोड सागरोपमे श्रीवीरनिर्वाण, तेवार पछी नव सो एंसी वर्षे पुस्तक वाचनादि । ३ श्रीसंभवनाथ निर्वाणथी दश लाख कोडी सागरोपमे श्रीअभिनन्दन निर्वाण, तेवार पछी बेतालीस हजार त्रण वर्ष साडा आठ मास न्यून दश लाख कोडी सागरोपमे श्रीवीरनिर्वाण, तेवार पछी नव सो एंसी वर्षे पुस्तक वाचनादि । २ श्रीअजितनाथ निर्वाणथी त्रीश लाख कोडी सागरोपमे श्रीसंभवनाथ निर्वाण, तेवार पछी बेतालीस हजार त्रण वर्ष साडा आठ मास न्यून वीश लाख कोडी सागरोपमे श्रीवीरनिर्वाण, तेवार पछी नव सो एंसी वर्षे पुस्तक वाचनादि । १ श्रीऋषभदेव निर्वाणथी पचास लाख कोडी सागरोपमे श्रीअजितनाथ निर्वाण, तेवार पछी

बेतालीस हजार त्रण वर्ष साडा आठ मास न्यून पचास लाख कोडी सागरोपमे श्रीवीरनिर्वाण, तेवार पछी नव सो एंसी वर्षे पुस्तक वाचनादि।

इति श्रीवीरजिनशासनशृङ्गारहार-सुविहितसूरिपुरन्दरनन्दनवनाऽऽरामविहारि-शिथिलाऽऽचारप्रचारतमोहारि—जैनाचार्य—भट्टारक-श्रीमद्विजयराजेन्द्रसूरीश्वर-सङ्कलितायां 'श्रीकल्पसूत्रार्थप्रबोधिनी' नाम्न्यां टीकायां सप्तमं व्याख्यानं समाप्तम् ।

## अथाष्टमं व्याख्यानं प्रारभ्यते ।

८८ श्रीऋषभदेवस्य त्रयोदशभवाऽऽख्यानम्—

अथैतदवसर्पिणीकाले प्रथमधर्मप्रवर्त्तकोऽर्हन् श्रीऋषभदेवस्वामी विनीतानगर्यामभूत् । तस्य च्यवन—गर्भवसन—जनन—प्रव्रजन—केवल-ज्ञानप्रापणानि चत्वारि कार्याण्युत्तराषाढानक्षत्रे जज्ञिरे, पञ्चमञ्च तद-भिजिन्नक्षत्रे जातम् । अधुनाऽऽदिनाथस्य त्रयोदशभवाः कथ्यन्ते । तथाहि—

एतस्मिञ्जम्बूद्वीपे महाविदेहक्षेत्रे सुप्रतिष्ठितनगरे प्रियङ्करो राजा राज्यं कुरुते । तत्र कश्चिदेको महर्द्धिको धनाभिधसार्थवाहो निवसति । स चैकदा वसन्तपुरं प्रतिष्ठासुर्ये खलु वसन्तपुरं जिगमिषन्ति, तैः सकलै-र्मया सहाऽऽगन्तव्यं तेषां समेषां भरणपोषणादिकं करिष्याम्यहमिति सर्वत्र पटहमवीवदत् । तच्छ्रुत्वा बहवो लोकास्तेन सत्रा जिगमिषवो बभूवुः । तदा तत्राऽऽगतः पञ्चशतमुनिमण्डलमण्डितो धर्मघोषमुनीन्द्रो-ऽपि तदन्तिकमागत्य बभाषे—ममापि त्वया सह तत्रत्ययात्रायाश्चिकीर्षा वर्त्तते । सार्थेशोऽवदत्—सुखेन गच्छत । ततो मुनीन्द्रोऽपि सशिष्यश्च-चाल । मार्गे चैकदा केनचिदुपढौकितानि परिपक्वान्याम्रफलानि मुनि-भ्यः प्रदातुमलगत् सार्थवाहः, परन्तु सचित्तत्वात्तानि ते न जगृहुः ।

ततः प्रत्यहं मन्दं मन्दं व्रजन् समागते वर्षर्त्तौ वारिवर्षति मेघे स आचार्यः संघेन सहाधिमार्गं कानन एव चतुर्मासीमतिष्ठत् । सर्वत्र नद्यादेः प्रवृद्ध्या मार्गावरोधेन हरिततृणानां बहुलोत्पत्त्या च सर्वे लोका विविच्य पटावासान्निर्माय तस्थुः । धर्मघोषाचार्योऽपि शिष्यगणैः सहैकस्यां गिरिगुहायां निर्वद्यस्थानमाश्रित्य, मासक्षपणतपस्यां विदधद्धर्मैकलीन आसीत् । इत्थं सार्थान् रक्षतस्तस्य सार्थवाहस्य पार्श्वे शम्बलः शून्यतामगमत्, तेन सर्वे लोकाः कन्दमूलादिना कथमपि दिनानि निर्गन्तुमलगत् । तदवसरे कश्चिद् वन्दी सार्थपतिमूचे 'श्रेष्ठिन् ! तावकी सत्कीर्त्तिः प्रतिदिवसं सर्वत्र प्रससार । त्वादृशा महाजना अङ्गीकृतं दुष्करमपि सुखेन पालयन्ति, जात्वपि स्वीकृत्य पश्चान्नैव विरमन्ति' इति श्रुत्वा सार्थेशस्तं सूरिवरं सस्मार । स्वं विनिन्दन्नेवमचिन्तयत्–' हा हा ! ! मया किमकारि ?, यदेनं सूरिं सार्थे महताग्रहेण समानीयापीयन्तं कालं व्यस्मार्षमतो नूनमहमभूवं विश्वासघाती । अतएव प्रभाते तदन्तिकं गत्वा कृतापराधक्षान्तयेऽभ्यर्थनीय ' इति निश्चित्य तत्पार्श्वमागत्याभिवन्द्य व्रीडया नतानन एवं भाषितुमारेभे–प्रभो ! ममापराधं क्षमस्व, अहमेकदापि तावकीं चिन्तां नाऽकार्षम् । सार्थे ममेदानीं शम्बलो नास्ति, क्षीणे च तस्मिन् सर्वेषां महान् क्लेशो जायते किं कुर्याम् ?। जगद्गुरवः—' सार्थपते ! मदर्थं मनागपि चिन्तां मा कृथाः, मे सुखेनैव धर्मध्यानादिकं चलति । तव सार्थयोगादहमीदृशीं दुर्गमामटवीमुल्लङ्घितवान् । अकारि तत्र त्वया वात्सल्याऽतिशयः । ' इति गुरुभाषितं श्रुत्वा सन्तुष्यन् सार्थेशः सर्वान्मुनीन् आहारार्थं भावतो निमन्त्र्य, स्वस्थानमानीय तेभ्यः शुद्धमाहारं सघृतं महताभावेन दत्तवान् । दानकाले चात्यर्थं[१] भावो ववृधे, तेन स सम्यक्त्वमध्यगच्छत् । स आ-

---

१ यत्पञ्चशतघृतकूपिकादानान्तरमधिकं दातुकामं पार्श्वे च तदभावं पश्यन्तं तमूचिरे साधवः—भोः ! अलमभूदधिकं नापेक्ष्यते, चेत्तदधिकं किञ्चिदपि तादृग्भावस्तिष्ठेत्, तर्हि केवलज्ञानभागपि स्यादिति केचित् ।

चार्यः प्रावृषः परं सार्थपतिना सह वसन्तपुरमागत्य तस्मै धर्मलाभं दत्त्वा यात्रार्थमचलत् । धनासार्थवाहोऽपि चिरं सम्यक्त्वं परिपाल्य प्रान्ते शुभध्यानेन ममारेत्येको भवः । तत उत्तरकुरुक्षेत्रे युगलत्वेनोत्पद्य त्रिपल्योपमायुर्भुक्त्वा मृत्युमुपनीतः, इति द्वितीयो भवः । ततश्च्युत्वा तृतीये भवे सौधर्मदेवलोके 'देवो' जातः । ततश्च्युत्वा चतुर्थे भवे पश्चिममहाविदेहे गन्धिलावतीविजये शीतबलभूपस्य चन्द्रकान्ताराज्ञ्यां 'महाबल' नामा पुत्रो जातः । तत्र पितर्युपरते राज्यासनमारुह्य विषयसुखलौलुप्येन भोगपुरन्दरो भूत्वा, विनयवतीप्रमुखाऽनेकराज्ञीभिर्भोगं बोभुज्यमानो धर्मवार्त्तामजानन्ननारतं सङ्गीतादिनैव कालं गमयन्महामोहनिद्रामुरीचक्रे । अथैकदा जायमाने मनःप्रीतिकरे नाटके गीते दत्तचित्तं राजानं महामात्यः सुबुद्धिर्जगाद—

"सव्वं विलवियं गीयं, सव्वं नट्टं विडंबणा ।
सव्वे आभरणा भारा, सव्वे कामा दुहावहा ॥ १ ॥"

इति श्रुत्वा राजा बभाषे—त्वयाऽधुना प्रस्तावमन्तरा वैराग्यमयीं गाथां कथमवादीः ?, सति रागे वैराग्यं नोदेति, वैराग्ये वा सरागतापि नोत्पद्यते । अतोऽनवसरे त्वदुक्तिः सर्वथा मुधैवास्ति । आह मन्त्री–राजन् ! अद्यैव कश्चित्केवली मामेवमुवाच–'तव भूपतेश्चतुर्दिवसाधिकमासमात्रमायुरवशिष्यते, अतस्त्वां तत्सूचयितुमेवमवदम् ।' एनां वार्त्तामाकर्ण्यातिभीतिमापन्नः स राजा पुनरवोचत्–अहन्तु मोहनिद्रायां सुप्तोऽस्मि तथाभूतं मामधुना यद्जागरयस्तत्तु सम्यगेव, परन्तु वह्नौ लग्ने कूपखननमिव तावकमिदं सूचनमकिञ्चित्करमेव भाति । सम्प्रति मासमात्रमायुरवशिष्टं भणसि, तत्र किं धर्माराधनं कुर्याम् ? । इत्थमनुतपतः क्षितिपतेः वचः श्रुत्वा मन्त्रिणा जल्पितम्–'राजन् ! मा शोचीः, ऐकाहिकमपि परिपालितं चारित्रं मोक्षं दातुमर्हति, कदाचित्तद्-

भावेऽपि दैवं सुखन्तु ददात्येव । ' इत्याकर्ण्य स राजा पुत्राय राज्यं समर्प्य सप्तक्षेत्र्यां धनमुप्त्वाऽऽष्टाहिकं महोत्सवं विधाय, सद्गुरोः पार्श्वे दीक्षां गृहीत्वा चतुस्त्रिंशद्दिवसाँश्चारित्रं परिपाल्य प्रान्तेऽनशनेन प्राणमजहात् । पञ्चमे भवे ईशानदेवलोके प्रभवविमाने ' ललिताङ्ग ' नामा सामानिको देवोऽभूत् । तत्र स्वयंप्रभयाऽतिप्रेयस्या देव्या वैषयिकं सुखं भुञ्जानः कालं गमयति । अथैकदा स्वयम्प्रभादेवी ततश्चुच्योत । तदीयविरहान्मूर्छामापन्नः शोशुच्यमानो दुःखाकुलः स देवश्चिरं रुरोद । तदवसरे प्राग्भवीयसुबुद्धिनामा मन्त्री तत्रैव देवत्वेनोत्पन्नस्तं प्रत्यबोधत । तथापि तच्छोकं यदा न तत्याज, तदा मन्त्री व्याजह्रे–शोकं जहाहि, अहं तव प्रेयसीं जानामि तन्मेलनोपायञ्च वदामि । तच्छ्रूयताम्, धातकीखण्डे महाविदेहक्षेत्रे नन्दग्रामे नागिलनामा गृहमेधी निवसति, तत्पत्नी च नागिली वर्त्तते । सा च प्रथमं षट्पुत्रीरसोष्ट । ता आलोक्य दध्यौ–यदि पुनर्मे पुत्री जनिष्यते तर्हि गृहं हास्यामि । दैवात्स्वयंप्रभाजीवस्तद्गृहे पुत्रीत्वेनाऽवतीर्णाऽभूत् । जातायां सप्तमपुत्र्यां तन्मातापितरौ महादुःखिनौ जज्ञाते । तत्पिता तु दुःखादेव गृहमजहात् । निर्गते पितरि ज्ञातयस्तस्या नामकरणादिकं नैव चक्रुः । अतः सर्वत्र ' अनामिका ' इति नाम्ना सा पप्रथे । निर्धनत्वात्कोऽपि तां नो जग्राह । ततो यौवनमापन्ना सा काष्ठं विक्रीय जीवन्ती प्रतिसदने दासीकृत्यं विदधती महादुःखमनुभवन्त्येकदा मोदकमश्नन्तं धनवतः पुत्रमालोक्य मातरं मोदकं ययाचे । तदोचे माता–पुत्रि ! मोदकं लातुं पिता ते गतोऽस्ति, स लास्यति तदा दास्यामि । तावदन्तर्गिरेः काष्ठभारमानीय विक्रीणीहि । इति मातुर्वचः श्रुत्वा रुदती सती सा काष्ठभारं लातुं गतवती । तत्र युगन्धरमुनेः कैवल्यज्ञाने समुत्पन्ने सुरेन्द्रस्तन्महिमानं वितन्वन्नासीत् । सापि तत्र गत्वा केवलिनं नमस्कृत्य धर्मदेशनां निशम्य तमप्राक्षीत्–' प्रभो ! मया जन्मान्तरे किमकारि ?, येनात्र ज-

न्मनीदृशं दुःखमनुभवामि, स्त्रीत्वमापद्यापि भर्तृसुखं कथं न लभे ?।' केवली जगाद्-पुरा त्वं धर्मं नाऽऽराधितवतीति हेतोरत्र सुखमलभमाना दुःखमेवाऽनुभवसि। सुखं लिप्ससे चेद्धर्ममाराधय, धर्म एव प्राणिनं दैवं सुखं नयति, इति श्रुत्वा साऽनामिका श्राविकाव्रतमुरीकृतवती। प्रतिदिनमुपाश्रयमागत्य सामायिकप्रत्याख्यानोपोषणादिकं कर्त्तुमारभत। ततः प्रभृति सकला अपि सहधर्मिणस्तां धर्मिणीति गदितुं लग्नाः, पारणादौ साहाय्यमपि दातुं लग्नाः। इत्थं धर्मप्रभावात्सुखिनीभूय प्रान्ते निरशनेन शयानाऽऽसीत्। तदवसरे सुबुद्धिदेवप्रेरितो ललिताङ्गो देवस्तत्राऽऽगत्य निजरूपं तामदर्शयत्। तद्रूपावलोकनेन व्यामोहिताऽनामिका निदानमकरोत्-'कृतस्य तपसः प्रभावेण जन्मान्तरे किलायमेव मे भर्त्ता स्यात्।' ततो मृत्वा स्वयम्प्रभादेवी भूत्वा ललिताङ्गेन सह दिव्यं सुखं भुङ्क्ते। ततश्च्युत्वा षष्ठे भवेऽस्मिन्नेव जम्बूद्वीपे पूर्वमहाविदेहे पुष्कलावतीविजये लोहार्गलनगरे राज्ञः सुवर्णजङ्घस्य लक्ष्मीवत्या राज्ञ्याः कुक्ष्युत्पन्नो 'वज्रजङ्घ' नामा पुत्रोऽभवल्ललिताङ्गदेवः। स्वयम्प्रभादेव्यपि तस्मिन्नेव विजये पुण्डरीकनगरे वज्रसेनचक्रिणः श्रीमतीपुत्री जाता। सा सुराऽसुरविद्याधरनरादियुवजनो मोहनं यौवनमापन्ना खल्वेकदा चन्द्रोदयसभाऽऽसीना कस्यापि साधोः समुत्पन्नकेवलमहिमानमेधयितुं वन्दितुञ्च व्रजतो देवानवलोक्य प्राक्तनीं जातिं सस्मार। व्यचिन्तयच्च-यत्प्राग्भवीयो मे भर्त्ता ललिताङ्गदेवजीवः कुत्राऽजनि ? चेत्तं जानीयां, तर्हि तमेव वृणुयाम्, इति विमृश्य मौनमशिश्रियत्। अजल्पन्तीं तामालोक्य माता बहूपचचार, तदपि सा नाऽवदत्। तत एकान्ते धात्री तामप्राक्षीत्-वत्से ! त्रपां त्यक्त्वा मौनकारणं ब्रूहि ?, त्वामाधिर्व्याधिर्वा बाधते कश्चिदिति भाषस्व। धात्रीभाषितं श्रुत्वा राजपुत्री पत्रोपरिललिताङ्गकुमाररूपं विलिख्य धात्र्यै समार्पयत्। सापि तदर्पितं चित्रपटं राज्ञो ददौ। ततस्तस्याः पितुर्वज्रसेनचक्रवर्त्तिनो वर्ष-

अन्ध्युत्सवे समायातानां राजपुत्राणां मध्ये ललिताङ्गकुमारमुपलक्षितुं तच्चित्रपटं करे दधाना सा धात्री राजपथे समास्त। अथ चित्रपटमुदीक्ष्य जातिस्मृत्या स वज्रजङ्घोऽवदत्–अहो! मत्प्राक्तनभवीयया स्वयम्प्रभया प्रेयस्या चित्रितं चित्रमिदमिति जाने। इमां वार्त्तां धात्री समेत्य श्रीमतीमवोचत। ततः सा तेनैव कुमारेण परिणीता सुखमनुभवति। अथैकदा सुवर्णजङ्घो राजा वज्रजङ्घाय राज्यं दत्त्वा दीक्षां ललौ। वज्रजङ्घोऽप्येकदा गवाक्षे सभार्यो निषण्णः सायङ्कालिकरागस्योत्पत्तिविलयौ पश्यन् मनसि दध्यौ–यत्सर्वमिदं लौकिकं वस्त्वसत्। केवलं धर्म एव शश्वदस्ति। प्रगे पुत्रं राज्ये नियोज्य प्रव्रजिष्यामीति निरचिनोत्। तत्रावसरे राज्यलिप्सया विषाऽग्निधूमपटलीमुत्पाद्य तौ मातापितरौ मारितवाँस्तत्पुत्रः। सप्तमे भवे तत उभौ स्त्रीपुंसावुत्तरकुरुक्षेत्रे युगलत्वेनोत्पेदाते। ततोऽष्टमे भवे सौधर्मदेवलोके मित्रत्वेन तावजनिषातां देवौ। ततश्च्युत्वा जम्बूद्वीपे महाविदेहक्षेत्रे क्षितिप्रतिष्ठितनगरे सुबुद्धिवैद्यस्य जीवानन्दनामा पुत्रो जातः। तस्मिन्नेव दिने तत्र नगरेऽन्येऽपि चत्वारो जीवाः पुत्रत्वेनोदपद्यन्त। तत्रैकः प्रसन्नचन्द्रमहीभर्त्तुर्महीधरनामा पुत्रः १, द्वितीयः सुनाशीरप्रधानस्य सुबुद्धिनामा पुत्रः २, तृतीयो धन्नाश्रेष्ठिनो गुणाकरनामा

---

१ तीर्थङ्करसदसि निषण्णा श्रीमती सुरानालोक्य सञ्जातजातिस्मृत्या प्राग्भवीयललिताङ्गजीव एवाऽत्रापि भवे मामुद्वहेच्चेद्वरमिति चिन्तोदधौ निरमज्जत्। ततः पूर्वभवसम्बन्धिनीं वार्त्तां पितरौ व्याजहार। पिता केवलिनमप्राक्षीत्–प्रभो! मत्पुत्र्याः प्राग्भवीयः पतिः कुत्रोत्पन्नोऽस्ति?। केवल्यूचे–भवद्दुहितुर्जन्मान्तरीयललिताङ्गपतिरस्मिन् भवे लोहार्गलपुरे सुवर्णजङ्घभूपस्य वज्रजङ्घनामा पुत्रोऽस्ति। इति श्रुत्वा पित्रा तेन सह परिणायिता श्रीमतीति क्वचित् पुस्तक उपलभ्यते। क्वचिच्चैवमप्यस्ति–यत्सा श्रीमती चित्रपटं निर्माय प्रोचे यो मामेतत्स्वरूपं वक्ष्यति तमेवाऽहं वरिष्ये नाऽन्यामिति श्रुत्वा बहवो राजपुत्रा यथामति बहुविधां कथां बभाषिरे, एकापि तस्यै नो रुरुचे। तदनु वज्रजङ्घकुमारः प्रोवाच–मत्प्रेयस्याः स्वयम्प्रभायाश्चित्रमेतदित्यसंशयं जानामि। ततश्चक्रवर्त्ती तेनैव सत्रा निजपुत्रीं श्रीमतीं विवाहितवान्।

पुत्रः ३, चतुर्थः सागराख्यमहेभ्यस्य पूर्णभद्रनामा पुत्रः ४। इतः श्रीमतीजीवोऽपि सौधर्मदेवलोकाच्च्युत्वा ईश्वरदत्तस्य केशवनामा पुत्रोऽभवत्। एते पञ्चापि जीवानन्दस्य मित्राण्यासन् । सर्वेऽप्येते सहभोजिनो रमणादिना सुखेन कालं गमयन्ति स्म । अथैकदा जीवानन्दसदने षडपि मित्राणि निषीदन्ति स्म । तत्रैकः कुष्ठीसाधुर्गोचर्यै समागात् । तमालोक्य करुणया ते पञ्चापि मिलित्वा वैद्यपुत्रमूचुः—'मित्र ! जगति सर्वे वैद्या धनार्थिनो भवन्ति, धर्मं मनागपि नैव जानन्ति, नोचेदेनं कुष्ठरोगार्त्तं साधुं नीरुजं कुरुष्व, तदा त्वामपि धर्मात्मानं ज्ञास्यामः । जीवानन्दो जगाद—यूयं साधु जल्पथ, परमेतद्रोगोपशमाय लक्षपाकं तैलमपेक्ष्यते । तत्तु ममास्ति परन्तु रत्नकम्बलगोशीर्षचन्दने न स्तः । ते यदि कुतश्चिद्भवद्भिरानीयेयातां, तर्हि नूनमेनं नीरोगं करिष्यामि । इति श्रुत्वा ते षण्मित्राणि लक्षद्वयं दीनारमेकत्रीकृत्य नगरश्रेष्ठिनो गृहमागत्य समूचुः—'इदं मूल्यं गृहाण, रत्नकम्बलं गोशीर्षचन्दनञ्च देहि' श्रेष्ठी जगाद—इयता मूल्येन क्रीत्वा यूयमिमे किं करिष्यथ ?। तैरुक्तम्—साधोर्वैयावृत्त्यम् । श्रेष्ठी व्यमृशत्—अहो ! एते बालास्तथाप्येतेषां धर्मे ईदृशी बुद्धिर्दृश्यते, अहं जरया जर्जरीकृतगात्रोऽपि धर्मं नाऽऽचरामि । धिङ् मामिति जल्पन्मूल्यं धर्मकार्ये विनियुज्य रत्नकम्बलगोशीर्षचंन्दने च तेभ्यो दत्त्वा, प्रव्रज्य श्रामण्यं परिपाल्यान्तकृत्केवलीभूय मोक्षं लेभे । तेऽपि षण्मित्राण्यौषधं लात्वा वनं गत्वा, कायोत्सर्गे स्थितस्य मुनेः सर्वाङ्गे लक्षपाकं तैलं मर्दयामासुः । तदनु चन्दनं व्यलिम्पन्, ततो रत्नकम्बलेन मुनिश्च वेष्टयामासुः । इत्थं कृते चर्मस्थाः सर्वेऽपि कीटास्तद्रत्नकम्बलेऽलगन्, ताँश्च मृतगोशरीरे चिक्षिपुः । पुनस्तथा तैलमर्दनचन्दनविलेपनरत्नकम्बलवेष्टनादिकृते मांसस्थान् कीटान् निष्काशितवन्तः । पुनस्तृतीयवारं प्रागुक्तोपचारे कृतेऽस्थिगतान् कीटान् निष्काश्य रोहिण्यौषधं तदङ्गे सर्वत्र संमर्द्य

स्वर्णाभं देहमकुर्वत । तदनु साधुं निर्व्रणं विलोकमानास्ते षण्मित्राणि प्रव्रज्य निरतिचारं श्रामण्यं परिपाल्य, प्रान्ते शुभध्यानेन कालं चक्रुरिति नवमो भवः । ततो दशमे भवे ते षडपि द्वादशे देवलोके सख्यभावेन देवा जज्ञिरे । ततश्च्युत्वाऽस्मिन्नेव जम्बूद्वीपे महाविदेहक्षेत्रे पुष्कलावतीविजये पुण्डरीकिण्यां नगर्यां भाविजिनस्य वज्रसेनराजस्य धारणीराज्ञ्याः कुक्षावनुक्रमेण ते षडपि सखायः पुत्रत्वेनोत्पेदिरे । जीवानन्दजीवो मातुर्गर्भे चतुर्दशमहास्वप्नसूचितोऽजनिष्ट । तत्पिता द्वादशेऽहनि महामहेन 'वज्रनाभ' इति नाम दध्रे । द्वितीयस्य महीधरजीवस्य बाहु इत्याख्या जाता । तृतीयस्य मन्त्रिजीवस्य सुबाहुरितिनाम जज्ञे । चतुर्थस्य गुणाकरजीवस्य 'पीठ' इति नाम बभूव । पञ्चमस्य पूर्णभद्रजीवस्य 'महापीठ' इति संज्ञामकरोत् । षष्ठः केशवजीवो यः पुराऽनामिकाऽऽसीत्, सोऽप्यन्यस्य राज्ञः पुत्रोऽभवत्, अभूच्चाऽयं वज्रनाभचक्रिणः प्रेयान् सखा, सार्थी च । इत्थमेते षडपि सुहृदः सुखमनुभवन्ति । अथैकदा तीर्थप्रवर्त्तनाय लोकान्तिका देवा आगत्य राजानं समयं सूचयामासुः । ततो वज्रनाभपुत्राय राज्यं दत्त्वा वार्षिकं दानं प्रारेभे । समायाते समये प्रव्रज्य घनघातिकं कर्मदलं क्षाययित्वा केवलज्ञानमधिगत्य तीर्थप्रवर्त्तयिता बभूव । स चैकदा पुण्डरीकिणीपुर्यामागात्, तदा वनपालो राज्ञे तदागमं व्यजिज्ञपत् । तदैव चक्ररत्नाविर्भावस्यापि वर्धापनमागात् । राजा मनसि दध्यौ—मया प्रथमं तीर्थङ्करः पूजनीयः ? चक्ररत्नं वा ?, तीर्थेशार्चनं द्वयमपि श्रेयो वितनुते, चक्रन्तु लौकिकमेव, इत्यवधार्य प्राक्केवलमहोत्सवं प्रावर्त्तयत् । महताऽऽडम्बरेण समागत्य भगवन्तमभिवन्द्य धर्मदेशनां निशम्य, गृहमागत्य चक्रपूजां विधाय षट्खण्डानि संसाध्य सुखेन राज्यं भुङ्क्ते । अथाऽन्यदा वज्रसेनजिनेन्द्रस्तत्र समवससार । वज्रनाभप्रमुखाः सर्वे लोकाः प्रभुवन्दनार्थमागमन् । तत्र भगवन्मुखाद्धर्मदेशनां श्रुत्वा ते षडपि सखायो दीक्षां लब्धुः । तेषु वज्र-

नाभचक्रवर्त्ती श्रामण्यमवँश्चतुर्दशपूर्वानध्यगीष्ट । इतरे पञ्चाऽप्येकादशाङ्गीमधिजगिरे । बाहुनामा साधुः प्रत्यहं गोचरीमानीय पञ्चशतसाधून् भोजयति, सुबाहुमुनिश्च तावतां मुनीनां वैयावृत्यं कुरुते । पीठमहापीठौ चैकान्ते तपःस्वाध्यायतपांसि कुर्वाते । परन्तु गुरुप्रभृतयः सर्वे बाहुसुबाह्वोरेव प्रशंसां कुर्वन्ति पीठमहापीठयोर्नेति हेतोरिमौ मानसे मिथो दध्यतुः–' हंहो ! निरीहाणामपि स्वार्थिनामिव कार्यपारवश्यता दृश्यते । यदेते तपःस्वाध्यायध्यानादिसत्कार्यकारिणोरावां मनागपि नैव प्रशंसन्ति । यौ च वैयावृत्यादिकं विदधाते तावेव स्तुवन्ति ।' ततो वज्रनाभो मुनिर्विंशतिस्थानकं तपः समाराध्य तीर्थङ्करनामकर्म समचिनोत् । बाहुमुनिराहारदानप्रभावाच्चक्रवर्त्तिजनकं कर्म बबन्ध । सुबाहुमुनिः सकलश्रमणवैयावृत्यकरणाद्बाहुबलनामकर्मार्जितवान् । पीठमहापीठौ च मत्सरीत्वात्स्त्रीवेदमार्जितवन्तौ । यश्च षष्ठोऽनामिकाजीवः स एवाऽग्रे श्रेयांसकुमारो भविता । प्रान्ते ते सर्वे निरशनाविधिना मृत्युमीयुरित्येकादशो भवः । ततस्ते षडपि सर्वार्थसिद्धिविमाने जज्ञिरे । तत्र च त्रयस्त्रिंशत्सागरोपमायुरध्यगच्छन्निति द्वादशो भवः । ततश्च्युत्वा त्रयोदशे भवे वज्रनाभजीवो जज्ञिवान् श्रीऋषभदेवः । बाहुजीवो भरतचक्री जज्ञे । सुबाहुजीवो बाहुबलोऽभवत् । पीठमहापीठयोर्जीवौ ब्राह्मीसुन्दर्यावभूताम् ।

८६ कुलकराणामुत्पत्तिः—

पुरा खल्वत्र युगलमनुष्याणां नगरं क्वापि नाऽऽसीत् । कल्पवृक्ष एव सर्वेषां तेषां मनोरथं पिपर्त्ति स्म । तेषु प्रथमं सप्तकुलकरा उत्पेदिरे । तथाहि—एतस्यामवसर्पिण्यां तृतीयारकान्ते पल्योपमस्याऽष्टमभागेऽवशिष्टे दक्षिणार्धभरतस्य मध्यमागे त्रयः कुलकरा अजायन्त । तेषु प्रथमो विमलवाहननामा जातस्तदुत्पत्तिश्चैवम्—पश्चिममहाविदेहे द्वौ वणिजौ सखायौ न्यवात्ताम् । तत्रैकः सरलोऽपरो मायावी, तौ च सहैव व्यापृषाताम् । परन्तु मायावी सरलं छलयित्वा प्रत्यहं दैनिकवण्टनकाले तदंशं निह्नुवे, सरलस्तु तन्न विवेद । अथैकदा केनापि कार्येण तदौकसि गतो मायावी तत्पत्नीं बहुरूपव-

तीमालोक्य रतिं ययाचे । तदभ्यर्थनं श्रुत्वा सा सतीत्वात्तमेवमुवाच—रे पापिष्ठ ! मित्रपत्नीं मामेवं कामयमानस्य ते जिह्वा किमिति शतधा न जायते ?, धिग् धिक् त्वामेवं गर्हिताचारिणम् । इत्थं तिरस्कृतः स समागत्य तद्भर्त्तारं जगाद—सखे ! तव वधूरसती वर्त्तते, यन्मां भूयो भूयः कामयते । परमहं मित्रस्त्रीत्वादगम्यां ज्ञात्वा खलूपेक्षे । सरलत्वात्तत्तथ्यं मन्वानो वैराग्यमापन्नः काले मृत्वा इक्ष्वाकुभूमौ युगलो जातः । मायावी च मृत्वा कापट्यात्तत्रैव हस्तियुगलोऽभूत् । तावेकदा परस्परावलोकनेन जातिस्मृतिं लेभाते । ततः सौहार्दात्तं निजपृष्ठमारोप्य सर्वत्र भ्राम्यति । अतएव सर्वे युगलास्तं 'विमलवाहनं' नाम चक्रुः । इत्थं कियति कालेऽतीते कल्पवृक्षेऽपि प्रागिव फलं दातुमलग्ने । सर्वेऽपि युगलाः कालदोषात्परस्परं व्यवदन्त, कल्पपादपानप्यात्मसाच्चक्रुस्ते । तत एकस्मिन्नाश्रिते पादपे परस्मै स्थानं न ददाति स्म । बलादागते तदैव विमलवाहनपार्श्वमागत्याभियुज्यते स्म । सोऽपि तमाकार्य 'हः' इति हकारात्मकं दण्डं ददते । इत्थं दण्डं ददमाने तस्मिन् सर्वे मिथो विरोधमत्यजन् । एवमादौ हकारात्मिकां नीतिं सोऽतिष्ठिपत् । एतस्य भार्या चन्द्रयशाः, शरीरञ्च नवशतधनुःप्रमाणमासीत् । तस्य चक्षुष्मान्नामा पुत्रोऽभवत् । तत्पत्नी च चन्द्रकान्ता, कायिकंप्रमाणञ्चाऽष्टशतधनुरासीत् । स्थापिताऽमुनापि हकार एव दण्डनीतिरितिद्वितीयः । तृतीयो यशोमान्नामा कुलकरो बभूव । सप्तशतधनुर्मात्रकायः, पत्नी चास्य स्वरूपाऽभिधा जाता, दण्डनीतिः 'मः' इति मकाररूपा जाता । ततस्तुरीयस्याऽभिचन्द्राख्यकुलकरस्य सार्धषट्शतधनुःप्रमाणशरीरस्य प्रतिरूपा नाम्नी पत्नी बभूव । सकलयुगलजनभीतिदा मकाररूपैव दण्डनीतिरासीत् । ततः पञ्चमः प्रसेनजित्कुलकरश्चक्षुष्मती भार्या, षट्शतधनुःप्रमाणं शरीरं, धिक्कृतिमेव महादण्डनीतिरासीत् । षष्ठो मरुदेवो जज्ञे, एतस्य भार्या श्रीकान्ता, सार्धपञ्चशतधनुःप्रमाणं शरीरं, धिक्काररूपा च दण्डनीतिः । ततः सप्तमो नाभिनामा कुलकरो जनितः, मरुदेवी भार्या, सपादपञ्चशतधनुर्देहमानमासीत् । एतस्य शासनकाले धिक्कार एव महादण्डनीतिर्जज्ञे । इत्थं प्रथमद्वितीयकुलकरशासनकाले 'हः' तृतीयचतुर्थयोश्च जघन्येन 'हः' उत्कृष्टतश्च 'मः' पञ्चमषष्ठसप्तमास्तु जघन्येन 'हं' मध्यमेन 'मं' उत्कर्षेण च 'धिक्कार' लक्षणमेव दण्डं कुर्वन्ति स्म । एतान्येव महादण्डान् मत्वा केऽप्यन्यायं नाऽकुर्वत ।

९० श्रीऋषभदेवस्य जन्म—

**अथैष भगवान् ऋषभदेवस्त्रिज्ञानोपेत आषाढकृष्णचतुर्थ्यां मातुर्गर्भे समुत्पेदे । ततो मरुदेवी माता चतुर्दश महास्वप्नान् पश्यन्ती प्रथमं मुखमाविशन्तं वृषभमद्राक्षीत् । तत्फलन्तुस्वप्नफलकथकानामभावत्वा-**

न्नाभिराजः स्वयमेव प्रेयस्यै मरुदेव्यै बभाषे। अथैवं सार्धसप्तदिवसाधिकां नवमासीं गर्भे स्थित्वा चैत्रकृष्णाऽष्टम्यां रात्रावुत्तराषाढर्क्षे चन्द्रयोगे भगवानृषभदेवः प्रादुरासीत्। तन्महामहमिन्द्रादयश्चक्रुस्तदानीं ग्रामादेरभावाद्बन्दिमोक्षणकौलिकपद्धतिकरणधर्माद्यर्थद्रव्यविनियोगादयो न विदधिरे। भगवतो जघने वृषभाङ्कसद्भावात्स्वप्ने वृषभावलोकनाच्च माता 'वृषभ' इति नाम चक्रे। अतिसौन्दर्यशालिनं भगवन्तमिन्द्राणी निजोत्सङ्गे निधाय भूयो भूयो रमयति। सुनन्दाख्या युग्मजा भगवता सहैवाऽऽविरासीद्युगलत्वेन। तथैकं युग्मजातं पुंस्त्रीरूपं तन्मातापितृभ्यां तालवृक्षस्याऽधस्तादमोचि, दैवाच्छिरसि तालफलपातादकालमृत्युमुपनीतः पुमान्। स्त्री च जीवन्ती मातापित्रोः स्वर्गतयोरितस्ततः पर्यटन्ती कैश्चिद्युगलनरैरैक्षि, ततस्तामानीय नाभिराजाय समार्पयन्। नाभिरपि तां सुन्दराकृतिं विलोक्य भविष्यतीयमपि सुनन्दया सार्धं वृषभस्य प्रेयसीति 'सुमङ्गला' इत्यभिधां दत्त्वा गृहेऽतिष्ठिपत्। ततस्ते सुनन्दासुमङ्गले भगवता सहैव ववृधे। एकदा सन्तप्तचामीकरच्छविर्भगवान् मन्दम्मन्दं व्रजञ्छान्तिश्चाधिगच्छन्नस्पष्टं भाषमाणो मात्रा भणितः—'वत्स! त्वमिन्द्राण्याः प्रेयानसि, तत्पार्श्वे एव तिष्ठसि, मदन्तिकं नाऽऽयासि, सुरार्पितममृतं धयसि, मामकं स्तनमपि नैव पिबसि तर्हि लोकास्त्वन्मातरं मां कथं वदिष्यन्ति ?, इत्यादि जल्पन्ती मरुदेवी भृशं लालयामास।

९१ शक्रेन्द्रकृतेक्ष्वाकुवंशस्थापना—

अथैवं भगवति किञ्चिदूनाऽब्दिके जाते भगवद्वंशस्थापनां चिकीर्षुः करधृतेक्षुरिन्द्रस्तत्रागत्य पितुरङ्कस्थितस्य प्रभोरग्रे तस्थौ। महान्तं

१ मरुदेव्या दृष्टचतुर्दशस्वप्नफलानि देवेन्द्रा व्याचख्युरिति हेमचन्द्राचार्यैस्त्रिषष्टिपुरुषशलाकाचरित्रे व्यलेखि।

तमिक्षुदण्डमुदीक्ष्य जिघृक्षुर्भगवान् पाणिं प्रसारितवान् । तदा 'प्रभो! भोक्तुमिच्छसि किमेनमिक्षुम्?' इति निगद्य भगवते प्रदाय इक्षोरभिलाषोदयादिक्ष्वाकुवंशः स्वामिनः प्रख्यातिमुपैतु, गोत्रश्चाऽप्येतत्पूर्वजानां काश्यपमस्त्विति शक्रो वंशस्थापनां व्यधत्त । अथोत्तरकुरुक्षेत्रजातकल्पपादपफलानि समानीय भगवते भोजनवेलायां देवाः समर्पितवन्तः । शैशवे तु सुरसञ्चारिताऽमृतरसमयमङ्गुष्ठमेवाऽदधत् । इतरे च तीर्थङ्कराः शैशवे सुरसञ्चारितसुधायाऽङ्गुष्ठपानम्, बाल्याऽतिक्रमे गृहियोग्यमन्नाहारञ्च कृतवन्तः । गृहीतसंयमानां तु समेषां तेषां प्रासुकमेवाऽशनम्भवति ।

९२ भगवतो विवाहः, पुत्रसंख्यानञ्च—

अथ शैशवोत्तीर्णं तारुण्यपूर्णं भगवन्तं भोगसमर्थं प्रेक्ष्य प्रभोर्विवाहोत्सवविधानायाऽनेकदेवदेवीकोटिपरिवृतः सुरनायकस्तत्राऽऽगात् । ततः शक्रादयो वरपक्षका भूत्वा भगवतो वरकृत्यं व्यदधत । इन्द्राणीप्रमुखा देव्यश्च द्वयोः कन्ययोर्वधूकृत्यं विदधिरे । ततो महता महेन यथाविधिसुरचिते महामण्डपे ताभ्यां कन्याभ्यां सह भगवतो विवाहमकुर्वत । ततः प्रभृति लोके प्रचलितो विवाहविधिः । तत उभाभ्यां सुनन्दासुमङ्गलाभ्यां भगवान् षड्लक्षपूर्वपर्यन्तं सुखमन्वभूत् । तदा सुमङ्गला भरतब्राह्मीनामकं युगलम्, सुनन्दा तु बाहुबलीसुन्दरीनामकं पुंस्त्रीरूपं युगलमसूयत । तदनु सुमङ्गला त्रिभुवनजननिवहप्रशस्यमानमारविजित्वरतनुत्विषा विभासुराणि, पुराकृतसुकृतशतसम्प्राप्ताऽतुलतेजिष्ठानि, क्रमश एकोनपञ्चाशत्पुत्रयुगलानि प्रसूतवती । तेषामिमानि नामानि ।

| | | | |
|---|---|---|---|
| १ भरतः | ५ विमलः | ९ ख्यातकीर्त्तिः | १३ अमरः |
| २ बाहुबलिः | ६ सुलक्षणः | १० वरदत्तः | १४ रथवरः |
| ३ शङ्खः | ७ अमलः | ११ सागरः | १५ कामदेवः |
| ४ विश्वकर्मा | ८ चित्राङ्गः | १२ यशोधरः | १६ ध्रुवः |

| | | | |
|---|---|---|---|
| १७ वरसः | ३८ सुयशाः | ५९ आनन्दनः | ८० शैलविचारी |
| १८ नन्दः | ३९ यशस्कीर्त्तिः | ६० आनन्दः | ८१ अरिञ्जयः |
| १९ सूरः | ४० यशस्करः | ६१ नन्दः | ८२ कुञ्जरबलः |
| २० सुनन्दः | ४१ कीर्त्तिकरः | ६२ अपराजितः | ८३ महासेनः |
| २१ कुरुः | ४२ सूरणः | ६३ विश्वसेनः | ८४ जयदेवः |
| २२ अङ्गः | ४३ ब्रह्मसेनः | ६४ हरिषेणः | ८५ नागदत्तः |
| २३ वङ्गः | ४४ विक्रान्तः | ६५ जयः | ८६ काश्यपः |
| २४ कोशलः | ४५ नरोत्तमः | ६६ विजयः | ८७ बलः |
| २५ वीरः | ४६ पुरुषोत्तमः | ६७ विजयन्तः | ८८ वीरः |
| २६ कलिङ्गः | ४७ चन्द्रसेनः | ६८ प्रभाकरः | ८९ शुभमतिः |
| २७ मागधः | ४८ नभःसेनः | ६९ अरिदमनः | ९० सुमतिः |
| २८ विदेहः | ४९ भानुः | ७० मानः | ९१ पद्मनाभः |
| २९ सङ्गमः | ५० सुकान्तः | ७१ महाबाहुः | ९२ सिंहः |
| ३० दशार्णः | ५१ पुष्पयुतः | ७२ दीर्घबाहुः | ९३ सुजातिः |
| ३१ गम्भीरः | ५२ श्रीधरः | ७३ मेघः | ९४ सञ्जयः |
| ३२ वसुकर्मा | ५३ दुर्द्धर्षः | ७४ सुघोषः | ९५ सुनामः |
| ३३ सुवर्मा | ५४ सुसुमारः | ७५ विश्वः | ९६ नरदेवः |
| ३४ राष्ट्रः | ५५ दुर्जयः | ७६ वराहः | ९७ चित्तहरः |
| ३५ सुराष्ट्रः | ५६ अजयमानः | ७७ सुसेनः | ९८ सुरवरः |
| ३६ बुद्धिकरः | ५७ सुधर्मा | ७८ सेनापतिः | ९९ दृढरथः |
| ३७ विविधकरः | ५८ धर्मसेनः | ७९ कपिलः | १०० प्रभञ्जनः |

९३ शक्रकृतराज्याभिषेकः, नगरीनिर्माणश्च—

अथ कालिकदोषादिना प्रचुरकषायोदयात्परस्परं विवदमानास्ते युगलिकाः प्राक्तनीं हकारमकारधिक्कारत्रयीं दण्डनीतिमप्यतिक्रम्य, स्वेच्छाचारेण मिथः कलहं कुर्व्वाणाः श्रीऋषभदेवसमीपमागत्याऽजल्पन्—पितः ! क्रियतामस्माकं न्यायः । प्रभुरुवाच—नास्म्यहं राजा, अस्मत्पिता राजास्ति, अतस्तदन्तिकं व्रजत, स एव भवतां न्यायं करिष्यति, इति श्रुत्वा सर्वे नाभिपार्श्वमागत्य स्ववृत्तं व्यजिज्ञपन् । सोऽपि तदुक्तिमाकर्ण्य जगाद—इदानीं यात, यदा भविष्यति ऋषभो राजा तदा वः स-

येषां न्यायं विधाता । अत्राऽवसरे शक्राऽऽसनं चचाल, तेन प्रभो राज्याभिषेकावसरमवधिना विदित्वा, सुराधीशस्तत्राऽऽगत्य भगवन्तं मुकुटकुण्डलहारकेयूरादिनृपाऽऽभरणं परिधाप्य, शुभमुहूर्त्ते सिंहासनोपरि निवेश्य राज्याभिषेकमकरोत् । युगलनरास्तु प्रागेव शक्राऽऽदेशात्तीर्थोदकान्यानेतुमगच्छन् । जाते च प्रभोरभिषेके तीर्थजलान्यादाय समागतास्ते पुरुषा भगवन्तं सिंहासनासीनमालोक्य दध्युः—यदधुना भगवतः सर्वाङ्गं समलङ्कृतं दृश्यते, केवलं पदावेव तादृशीं शोभां न दधाते, इति विमृश्य समानीतोदकैः पदाम्बुजावेव स्नपयामासुः । अथैषामीदृशं विनयमवलोक्य 'एते विनीताः सन्तीत्यवधार्य तन्निवासार्थं विनीताभिधां नगरीं' निर्मातुं वैश्रमणदेवमादिदेश शक्रः । सोऽपि परित उच्चैस्तरां रम्यतरं परैरभेद्यं प्राकारं निर्माप्य, तत्रेशानकोणे साप्तभौमं सद्रत्नजटितं सौवर्णं महोन्नतमेकं सौधं नाभिराजार्थं निरमीमपत् । पूर्वस्यां दिशि भरतचक्रिनिवासाय साप्तभौमं सौधम्, आग्नेयां बाहुबलये रम्यतमं सौधम्, मध्यभागे भगवतो निवासाय गगनलिहमेकविंशतिभौमं नानाविधसद्रत्नजटितं स्वर्णमयं महाभवनं कारितवानु इत्थं रमणीयैरष्टोत्तरशतजिनभवनैरलङ्कृतां, रत्नजटिततुङ्गतरभवनश्रेणीविभूषितां हस्त्यश्वरथपत्तिलक्षणचतुरङ्गचमूपरिशोभितां, वेसरोष्ट्रगोमहिषीप्रमुखचतुष्पदैः सुमण्डितां, नानावापीकूपाऽऽरामतटाकादिभिः परिष्कृतां, चतुरशीतिचतुष्पथेषु सौगन्धिक–कान्दविक–ताम्बूलिक–सौवर्णिक–कौसूदिक–कार्पासिक–तैलिक–सौत्रिक–रात्निक–गौधूमिक–कौशेयिकादीनां पण्यभवनश्रेणीविराजितां सर्वर्त्तुसौख्यप्रदां द्वादशयोजनविस्तीर्णां नवयोजनाऽऽयतामष्टद्वारां विनीतानगरीं निरमिनोत् ।

१४ पुंसां द्वासप्ततिकलानिरूपणम्—

अथैष भगवान् स्वप्रतिज्ञापालको महाचतुरः सर्वाधिकरूपलावण्यशाली सकलगुणसम्पन्नः सरलोऽतिविनीतो विंशतिलक्षपूर्वपर्यन्तं यौव-

राज्यपदे तस्थिवान्। ततो राज्यं कुर्वंस्त्रिषष्टिलक्षपूर्वाणि व्यत्यैत्। तत्र राज्यं शासन् हंसलिप्याद्यष्टादशलिपिविधानं दक्षिणकरेण ब्राह्म्यै, एकं दश शतं सहस्रमयुतं लक्षं प्रयुतं कोटिरर्बुदमब्जं खर्वं निखर्वं महापद्मं शङ्को जलधिरन्त्यं मध्यं परार्धमित्यादिगणितं सुन्दर्यै वामपाणिना, काष्ठकर्मादिरूपं कर्म भरताय, पुरुषादिलक्षणं बाहुबलिनो लोकहिताय पुंसां द्वासप्ततिकलाश्च समुपादिशत्। तथाहि—

| | | |
|---|---|---|
| १ लेखनम् | २२ नामकरणम् | ४३ रसायनविधिः |
| २ गणनम् | २३ ज्योतिर्ज्ञानम् | ४४ छन्दोलक्षणम् |
| ३ गानम् | २४ चतुर्वेदज्ञानम् | ४५ युद्धविधानम् |
| ४ नर्त्तनम् | २५ षड्भाषाज्ञानम् | ४६ इतिहासज्ञानम् |
| ५ वाद्यवादनम् | २६ घटभ्रमणम् | ४७ शास्त्राभ्यासः |
| ६ तालमानम् | २७ ऊर्ध्वगमनम् | ४८ लिपिज्ञानम् |
| ७ अश्वपरीक्षा | २८ पत्रच्छेदनम् | ४९ भूमिपरीक्षा |
| ८ गजपरीक्षा | २९ फलाकर्षणम् | ५० वर्षज्ञानम् |
| ९ रत्नपरीक्षा | ३० आचारशिक्षणम् | ५१ वाणिज्यम् |
| १० नारीलक्षणम् | ३१ तैलनिष्पादनम् | ५२ तत्त्ववादः |
| ११ नरलक्षणम् | ३२ लोहघटनम् | ५३ लोकरञ्जनम् |
| १२ धातुवादः | ३३ पलितनाशनम् | ५४ मर्मभेदनम् |
| १३ मन्त्रवादः | ३४ काष्ठच्छेदनम् | ५५ दमनम् |
| १४ यन्त्रतन्त्रवादः | ३५ जलवर्षणम् | ५६ अञ्जनम् |
| १५ तर्कवादः | ३६ दन्तमज्जनम् | ५७ स्तम्भनम् |
| १६ न्यायवादः | ३७ गजारोहणम् | ५८ लेपनम् |
| १७ काव्यकरणम् | ३८ तुरगारोहणम् | ५९ मर्दनम् |
| १८ वशीकरणम् | ३९ पाकविधानम् | ६० छलनम् |
| १९ मुद्राकरणम् | ४० पत्रपरीक्षणम् | ६१ दृष्टिबन्धनम् |
| २० चित्रीकरणम् | ४१ द्यूतखेलनम् | ६२ जनवञ्चनम् |
| २१ चिकित्साकरणम् | ४२ फलकरणविधिः | ६३ रूपपरावर्त्तनम् |

१ हंस—भूत—यक्ष—राक्षस—उड्डी—यावनी—तुरकी—कीरी—द्राविडी—सैन्धवी—मालवी—नडी—नागरी—लाटी—पारसी—अनिमित्ति—चाणाकी—मूलदेवीत्यष्टादशलिपयः। एतासामेकैकाऽवान्तरभेदा ग्रन्थान्तरादवगन्तव्यम्।

| | | |
|---|---|---|
| ६४ कृषिकर्म | ६७ शकुनज्ञानम् | ७० विषविधिः |
| ६५ स्वप्नज्ञानम् | ६८ शिल्पज्ञानम् | ७१ योगध्यानम् |
| ६६ राजसेवा | ६९ व्याकरणम् | ७२ सर्वभाषाजल्पनम् |

एवमेतस्यां हुण्डावसर्पिण्यां सर्वतः प्राग् भगवानर्हञ्छ्रीऋषभदेवस्वामी सांसारिकानां प्राणिनां सर्वेषां कल्याणकामनया राजिकी-व्यावहारिकी-धार्मिकीतिनीतित्रयीं प्रावर्त्तयत । अमुनैव हेतुनाऽसावमुष्मिन् युगे नरपालेषु श्रमणेषु जिनेषु च प्राधान्यं लेभानः ।

९५ स्त्रैणा अपि चतुष्षष्टिकलाः—

| | | |
|---|---|---|
| १ नृत्यम् | १८ आरामरोपणम् | ३५ ललितचरणम् |
| २ औचित्यम् | १९ काव्यशक्तिः | ३६ तैलसुरभिकरणम् |
| ३ चित्रम् | २० वक्रोक्तिः | ३७ भृत्योपचारः |
| ४ वाद्यम् | २१ नरलक्षणम् | ३८ गृहाऽऽचारः |
| ५ मन्त्रम् | २२ गजपरीक्षा | ३९ व्याकरणम् |
| ६ तन्त्रम् | २३ अश्वपरीक्षा | ४० परनिराकरणम् |
| ७ घनवृष्टिः | २४ वस्तुशुद्धिलघुबुद्धी | ४१ वीणानादः |
| ८ फलाकृष्टिः | २५ शकुनविचारः | ४२ वितण्डावादः |
| ९ संस्कृतजल्पनम् | २६ धर्माचारः | ४३ अङ्कस्थितिः |
| १० क्रियाकल्पः | २७ अञ्जनम् | ४४ लोकाऽऽचारः |
| ११ ज्ञानम् | २८ चूर्णयोगः | ४५ कुम्भभ्रमः |
| १२ विज्ञानम् | २९ गृहिधर्मः | ४६ सारिश्रमः |
| १३ दम्भः | ३० सुप्रसाधनकर्म | ४७ मणिरत्नभेदः |
| १४ जलस्तम्भः | ३१ कनकसिद्धिः | ४८ लिपिपरिच्छेदः |
| १५ गानम् | ३२ वर्णिकावृद्धिः | ४९ वैद्यक्रिया |
| १६ तालमानम् | ३३ वाक्पाटवम् | ५० कामाविष्कारः |
| १७ आकारगोपनम् | ३४ करलाघवम् | ५१ रन्धनम् |

१ नागपुराणे पौराणिका अप्येवं समुल्लिखन्ति स्म—"दर्शयन् वर्त्म वीराणां, सुराऽसुरनमस्कृतः । नीतित्रयस्य कर्त्ता यो, युगादौ प्रथमो जिनः ॥ १ ॥ सर्वज्ञः सर्वदर्शी च, सर्वदेवनमस्कृतः । छत्रत्रयीभिरापूज्यो, मुक्तिमार्गमसौ वदन् ॥२॥ आदित्यप्रमुखाः सर्वे, रचिताञ्जलयस्तथा । ध्यायन्ति परया भक्त्या, यदङ्घ्रियुगनीरजम् ॥ ३ ॥"

| | | |
|---|---|---|
| ५२ चिकुरबन्धः | ५७ वरवेषः | ६२ आभरणपरिधानम् |
| ५३ शालिखण्डनम् | ५८ सर्वभाषाज्ञानम् | ६३ अन्त्याक्षरिका |
| ५४ मुखमण्डनम् | ५९ वाणिज्यम् | ६४ प्रश्नप्रहेलिका |
| ५५ कथाकथनम् | ६० भोज्यम् | |
| ५६ कुसुमग्रन्थनम् | ६१ अभिधानपरिज्ञानम् | |

६६ भरतादिविवाहो, भाण्डनिर्माणविधिश्च—

अथ भरतेन सह जातां ब्राह्मीं बाहुबलिना, बाहुबलिना सहजां सुन्दरीञ्च भरतेन सहोद्वाहितवान् प्रभुः । अमुना कृत्येन यौगलिकीं पद्धतिमत्याजयत् । अथ कालपरिवर्त्तनेन तत्र कल्पद्रुमाणां यथेच्छफलदानाऽशक्तत्वे ये—इक्ष्वाकुवंशीयास्ते—इक्षुभोजिनो बभूवुः, इतरे तु पत्रपुष्पफलाशिनो जज्ञिरे । भुक्तानि च तानि नैव जीर्यन्ते स्म । ततस्ते नानाविधमौदर्यं दुःखमनुभवितुमलगन् । तदर्दितास्ते भगवदन्तिकमागत्य विज्ञपयाञ्चक्रिरे—स्वामिन् ! यद्भुज्यते तदस्माकं चिरेणापि नो जीर्यति, तेन सर्वेषामुदरे महती पीडा समुत्पद्यते, किमधिकमल्पाशनेनापि समेषामुदरं श्वयथुमधिगच्छति, अतस्तदुपायं ब्रूहि ? । भगवानाख्यत्—भोः ! तदन्नं पाणिना मर्दयित्वा मुखमारुतेन निस्तुषीकृत्य भुज्यताम् । ततस्ते तथैव भोक्तुमारेभिरे, तथापि भुक्तमन्नमजीर्णं पश्यन्तः प्रागिव दुःखीभवन्तः पुनर्भगवन्तमागत्य जगदुः । पुनर्भगवदुपदेशात्पत्रपुटकेषु जलेन क्लिन्नांस्तण्डुलादीन् बुभुजिरे । तदपि तान्यजीर्णानि पश्यन्तः कियन्तमपि कालं मुष्टावञ्जलौ च क्लेदयित्वा तयोरेव निधाय, भुक्तेष्वन्नेष्वजीर्यत्सु पुनः कक्षासु हृत्सु च स्विन्नान्यन्नानि भुक्त्वापि जीर्णतां नैवाऽलभन्त । अत्राऽवसरे वने परस्परद्रुमसंघर्षान्नवमुत्थितं ज्वलज्ज्वालाजालं तृणपुञ्जं दहन्तमग्निमालोक्याऽभिनवरत्नाधिया प्रसारितकरा दह्यमाना अतित्रस्तास्ते युगलिकास्तूर्णमागत्य भगवन्तं न्यवेदयन् । भगवाँश्चाग्नेः प्रादुर्भावं विदित्वा जगाद—भोः ! अग्निरुत्पेदे, भवन्तस्तस्मिँस्तण्डुलादि पाचं पाचं भुङ्ध्वम् । इमानि पक्वान्यन्नानि

जरिष्यन्तीति प्रभूपदिष्टोपायं श्रुत्वा ते युग्मजा आगत्य पृथगग्निं प्रज्वाल्य शाल्याद्यन्नानि तत्राऽक्षिपन् । सोऽग्निः क्षिप्तानि तानि भस्मसाच्चक्रुः । तदालोक्य तेऽजल्पन्—अहो ! अयमग्निः स्वयमेव पापात्मा वेताल इव क्षुधातुरः सर्वं भुङ्क्ते, नः किमपि न यच्छतीति भगवन्तमाचचक्षिरे । प्रभुरूचे—अहमचिराद् गजारूढ आगच्छामि । भवद्भिरेकं मृत्पिण्डं मे दातव्यं, तदुपायं करिष्यामि । समायाते गजारूढे प्रभौ ते तद्धस्ते मृत्पिण्डं ददुः । प्रभुरपि हण्डिकाकुण्डिकाघटाद्यनेकविधमृण्मयपात्राणि निर्माय तन्निर्माणयुक्तिश्च तानदर्शयत् । ततस्ते युगलिका अपि भगवदुपदिष्टयुक्त्याऽन्यान्यपि नानाविधानि पात्राणि निर्माय निर्माय सर्वत्र व्यस्तृषत । ततस्तेषु पात्रेष्वग्निपाचितानि शाल्यादीन्यन्नानि भुक्तानि तेषां जीर्णानि भवितुं लग्नानि बलपुष्टिकराणि च जातानि । इत्थमादौ कुम्भकारशिल्पं प्रदर्श्य लोहकार—चित्रकार—तन्तुवाय—नापितानामपि चत्वारि शिल्पानि दर्शितवान् । तदनु पञ्चानामेषामेकैकस्य विंशत्या भेदेन शतं शिल्पं वितेनुराचार्याः ।

९७ श्रीऋषभदेवस्य भगवतो दीक्षाऽऽदानम्—

अथ लोकान्तिकदेवैरभ्यर्थितो वार्षिकदानं ददानो भरतायाऽयोध्याया ( विनीताया ), बाहुबलिने तक्षशिलायाः, शेषपुत्रेभ्योऽङ्गवङ्गादीनां देशानां राज्यं प्रदाय, गोत्रियेभ्यो धनानि विभज्य, प्रभुश्चैत्रकृष्णाष्टम्यां सुदर्शनाख्यशिबिकायां सुखासीनः सुराऽसुरनरश्रेण्याऽनुगम्यमानमार्गोविनीतानगर्या मध्यपथेन निर्गच्छन् सिद्धार्थवनोद्यानेऽशोकतरोस्तले स्थापितयानादवतीर्य, स्वयमेव वसनान्याभरणानि च समुत्तार्य, चतुर्भिर्मुष्टिभिर्लोचे विहिते शक्रप्रार्थनया कनककलशोपरि धृतामिन्दीवरमालामिव कनकवर्णयोः स्कन्धयोः सुषमां दधानां शिखां मुक्त्वा, कृत्वा च निर्जलं तपःषष्ठम्, उत्तराषाढानक्षत्रे चन्द्रयोगमुपगते उग्र—भोग—राजन्य—क्षत्रियकुलोद्भूतकच्छमहाकच्छादिचतुःसहस्रपु-

रुषैः सार्धं प्रव्रज्य, शक्रदत्तमेकं देवदूष्यवस्त्रमादाय भगवाननगारत्वमापेदे । ततो घोराभिग्रहधारी प्रभुः परिषहोपसर्गान् सहमानो विचचार । यद्यपि भगवतस्तदानीं कृतषष्ठतपः पारणं चिकीर्षितमासीत्, तथापि तत्र समये सुपात्रदानविधिः सर्वैरज्ञात एवाऽऽसीत् । कीदृशः साधुः ?, का च भिक्षेति नाममात्रमपि केनापि नाऽश्रावि, अतः क्वापि कोऽपि भगवतेऽन्नं नाऽदात् । ततस्ते चतुःसहस्रश्रमणाः क्षुधया परिपीडिता भगवन्तमाहारोपायमपृच्छन् । भगवाँस्तु मौनित्वात्किमपि नोचे । ततः कच्छमहाकच्छौ पप्रच्छुः । तावूचाते नैतदावां जानीवः । तदा सर्वे चिन्तातुरा दध्युः—' इदानीमाहारमन्तरा स्थातुं नैव शक्नुमः, चेदुज्झित्वा संयमं गृहं व्रजामस्तर्हि लोका निन्दिष्यन्त्युपहासिष्यान्तितरामतोऽत्रैव वने वासः श्रेयस्करो भविष्यति, इत्यवधार्य गङ्गादक्षिणतटे जटाधरास्तापसा जज्ञिरे । वृक्षत्वचं परिदधुः । तरूणामधः पतितानि पर्णानि, फलानि, पुष्पाणि चाऽश्नन्ति स्म । इत्थं जीवितं धरन्तः श्रीऋषभदेवमहर्निशं सस्मरुः ।

९८ नमिविनम्यो राज्यदानम्—

पुरा भगवान् सर्वेभ्यः सूनुभ्यः पृथक् पृथक् राज्यादिप्रदानावसरे पुत्रीकृतयोरपि नमिविनम्योर्विदेशगतत्वात्किमपि नाऽदात् । पश्चादायातौ तौ प्रभोर्दीक्षां श्रुत्वा भरतमप्राष्टाम्—यथा भवद्भ्यो राज्यमदात्प्रभुस्तथा नौ दत्तं नवेति ? । भरतोऽवक्—प्रभुणा नाऽदायि, परमहमेव वां ददामि राज्यम् । ताववोचताम्—त्वद्दत्तं नैव लास्यावः । भरतेनोक्तमेवं तर्हि भगवानेव जानातु । ततस्तौ भगवदन्तिकमागत्य तदीयपदपङ्केरुहौ जुषमाणौ भगवन्तं राज्यं ययाचाते । भगवाँस्तु शृण्वन्नप्यसंसारित्वान्मौनमेव भेजे । तथापि राज्यार्थिनौ तौ यत्र यत्र भगवाँस्तिष्ठति तत्र तत्र भूभागं परिमार्ज्य, कण्टकादीनपसार्य, सुरभिज-

लानि परिषिच्य, सुगन्धिकुसुमानि विकीर्य, प्रभुशरीरोपविष्टदंशादिकमपनीयमानौ सदा खड्गधरौ भगवता सह विचेरतुः। एकदा भगवद्वन्दनार्थं समायातो धरणेन्द्रस्तावववादीत्—'एष भगवान् संसारमत्याक्षीत्, एनं मा याचिषाताम्। भरतमेव गत्वा याचेयाथाम्।' ताभ्यामुक्तम्—भगवन्तं विना कमप्यन्यं नैव नाथावः। इत्थं तयोर्वचः श्रुत्वा धरणेन्द्रः प्रभोरास्यकमलं प्रविश्य, ताभ्यामष्टचत्वारिंशत्सहस्रं सिद्धविद्या अदात्, तासामधिष्ठायिका गौरीगान्धारीरोहिणीप्रमुखाः षोडशदेवीश्च ददौ। ततः प्रोक्तमिन्द्रेण—'एताभिः सिद्धविद्याभिर्विद्याधरर्द्धिमापन्नौ भवन्तौ सपरिवारौ वैताढ्यगिरेर्दक्षिणोत्तरश्रेण्यां गौरेयगान्धारप्रमुखानष्टौ देशान्, रथनूपुरचक्रवालादिपञ्चाशन्नगराणि, उत्तरश्रेण्याञ्च पण्डकवंशालयप्रभृत्यष्टनिकायान् गगनवल्लभप्रभृतिषष्टिनगराणि निवास्य राज्यं कुरुतम्। युवां कदाचिदपि केवलिनो जिनेशप्रतिमायाश्चरमशरीरिणः प्रतिमामापन्नस्य साधोश्चेति चतुर्णामाशातनां मा कृषाताम्। अधिमार्गं स्थितानामेतेषां दर्शनवन्दनपूजनादिसेवामकृत्वाऽग्रे मा गमताम्, परस्त्रियं वा मा भुक्षाथाम्, अन्यथा सर्वाश्चैता विद्या युवां हास्यन्ति' इति शिक्षां रत्नभित्तौ विलिख्य धरणेन्द्रः स्वस्थानमयासीत्। ततो विद्याधराणां जातिभेदं षोडशधा संस्थाप्य दक्षिणश्रेण्या राज्यं नमिरुत्तरश्रेण्या राज्यञ्च विनमिरकरोत्।

६९ श्रेयांसगृहे भगवतो वार्षिकतपः पारणम्—

अथ प्रभुः श्रीऋषभजिनः पुराकृताऽशुभकर्मोदयाद्वर्षपर्यन्तमाहारं नो लेभे। यत्र यत्र याति तत्र सर्वत्र महाजना महीयानिति मत्वा कश्चिद्वसनानि, कोऽप्याभरणानि, कञ्चनमणिमुक्तादिना भृतं स्थालम्, कश्चिदतिरूपवतीं युवतिं सर्वाभरणविभूषितां कन्याम्, कश्चिद्धास्तिनं,

---

१ किरणावल्युक्तमष्टचत्वारिंशच्छतकथनमयुक्तमावश्यकवृत्तौ तावत्सहस्रस्यैवोक्तेरिति।

कश्चिदश्वान्, रथान्, कश्चित्पूर्णस्थालं डुढौके, अन्नन्तु कोऽपि नाऽदात्। इत्थं वर्षं यावन्निराहारो वर्त्तमानोऽपि प्रभुर्मनागपि न मम्लौ । सुखेनैव विहरमाणः क्रमेण गजपुरमाययौ । तत्र च बाहुबलिनः सूनुः सोमप्रभो राजा विचकास्ति । तस्य श्रेयांसकुमारो यौवराज्ये तिष्ठति । स हि तस्यामेव यामिन्यां स्वप्नमदर्शत्—' यदहं सुधापूर्णकलशैर्म्लानतां नीतं मेरुगिरिं प्रक्षाल्य समुज्ज्वलं कृत्वा प्रादिद्युतम् ।' सोमप्रभोराजा तु ' यदेकं पुमांसं शत्रुभिः परिगृहीतं श्रेयांसकुमारोऽमूमुचत् ' इति स्वप्नं ददर्श । सुबुद्धिनामा महेभ्यस्तु ' भानोः पतन्तीं सहस्रकिरणावलीं श्रेयांसः पुनः सूर्य एवाऽतिष्ठिपत् ' इति स्वप्नमैक्षत । जाते च प्रभाते ते त्रयोऽपि नृपसदसि मिलित्वा । स्व स्व स्वप्नमूचुः । तदा नृपादिभिः सर्वैरमुना स्वप्नेन श्रेयांसः किमपि विशिष्टं लाभं लप्स्यते इति निश्चितम् । ततो जाते मध्याह्ने श्रीऋषभदेवो गोचर्यै प्रतिगृहं परिभ्राम्यन् प्रागिव लोकैर्दीयमानं वस्त्राऽऽभरणादिकमगृह्णन् ' भगवानेष किमपि नैव लाति ' इति जनकोलाहले प्रसृते गवाक्षस्थेन श्रेयांसकुमारेण भगवन्तमालोक्य ' पुरा मया क्वापीदृशं नेपथ्यमैक्षि ' इत्यूहापोहं विदधानो जातिस्मृतिमलब्ध । तया च प्रत्यक्षीचक्रे निजप्राक्तनम् । तथाहि—अहं पूर्वस्मिन् भवे भगवतोऽस्य सारथिरभूवम् । अग्राहि चामुना सहैव संयमः, तत्राऽऽख्यद्वज्रसेनतीर्थाधिपतिः—यदेष वज्रनाभराजर्षिर्भरतक्षेत्रे प्रथमस्तीर्थङ्करो जनिष्यते । स एव तीर्थकर्त्ता देवाधिदेवो भिक्षार्थं भ्रामन्नत्रावलोक्यत इति विदन् गवाक्षान्नीचैरुत्तीर्य तत्काले च केनापि पुंसाऽऽनीतप्रधानमिष्टतरेक्षुरसपूर्णकुम्भसमूहप्राभृतमादाय, यथाविधि भगवन्तमभिवन्द्य जगाद—भगवन् ! साधुदानं कोऽप्यधुना न वेत्ति, तत एव तत्रभवतां प्रासुकाहारदौर्लभ्यमियन्तं समयमभूत् । अतो मम सदनमागत्य ' मय्यनुकम्पनं विधेहि, निर्दोषमाहारं गृहाण ' इत्थमाचक्षाणः श्रेयांस इक्षुरसपूर्णाऽष्टोत्तरशतकुम्भानादाय भग-

वते भिक्षां दातुमुदयच्छत् । भगवानपि तज्जिघृक्षया हस्तौ प्रासीसरत् ।

१०० प्रभोर्भिक्षादानकालिकमिथः करसंवादः—

अथ प्रभोर्दक्षिणवामकरौ भिक्षाग्रहणवेलायां मिथो व्यवदताम् । यथा—दक्षिणकरो जगौ—रे वाम ! खल्वस्मि सामुद्रिकोक्तच्छत्रचामरमीनाङ्कुशयवचक्रादिशुभव्यञ्जकरेखाङ्कितो, धीधनराज्यसौभाग्ययशःपुत्रादिसूचकसद्रेखाऽञ्चितः पाणिग्रहणराज्याभिषेकविदेशगमनाद्युत्सवेषु तिलककरणेऽधिकृतः, अनेकसुन्दराङ्गनाः करग्राहं पुंसामर्धाङ्गिनीः सम्पादयितुं पटीयान्, बाल्ये च सुरसञ्चारितसुधामयाङ्गुष्ठनिपानेन तीर्थपतेरनन्तशक्तिसम्पादकः, श्रीमत्तीर्थकृता वार्षिकदानं दापयित्वा त्रिभुवनजनदारिद्र्यवारकः, जलादिपान–देवार्चन–कलादिशिक्षण–ग्रहादिस्थापन–मालादिविरचन–शान्तिकर्मादिप्रशस्तकृत्यविधानाऽग्रेसरः । इत्थं सर्वतः श्रेयान् भूत्वा कथमिदानीमधोभवितुं प्रभवाणि, अतस्त्वमेव भिक्षां ग्रहीतुमर्हसि; नाऽहम् ।

वामोऽवदत्–रे पापिष्ठ ! स्वेनैव स्वं वर्णयन्मनागपि किं न त्रपसे ?, यतः—सन्तोऽपि गुणवन्त आत्मानं स्तुवन्तः सत्सु न शोभन्ते । सन्तो गुणास्तु कस्तूरिकामोद इव सद्रत्नानां तेज इव मणीनां निर्विषतेव स्वत एव विकसन्ति । अतस्तवैतत्स्वप्रशंसनं मातुरग्रे मातुलगुणकीर्त्तनवन्मुधैव जाने । रे दुष्ट ! देवचकलीप्रमुखविहगानां खराणाञ्च मय्येव जातं रुतं प्रयातुः शुभं सूचयते । क्रोष्टुरपि निशि प्रथमे यामे मय्येव विहितो रवो गन्तॄणां शुभावहो जायते, किञ्च ममस्वरे ( चन्द्रनाड्यां ) यत्प्रारभ्यते कार्यं तन्नैयत्येन सिध्यत्येव । इत्यादिविविधकार्यसाधकत्वादहमेवोत्कृष्टोऽस्मि त्वन्तु पापीयानुदरम्भरश्चासि, यन्क्षुधितं मां लघुबन्धुमप्यनाहूय किञ्चिदप्यदददेकाक्येव सदा सर्वमश्नासि, अतस्त्वमेव भिक्षस्व ।

इत्थं विवदमानावुभौ श्रेयांसोऽभ्यर्थयत–युवां स्वस्वकार्यसंसाधने तुल्यौ पटीयांसौ स्तः, कोऽपि कस्मान्न्यूनो नास्ति, अतो मयि कृपां विधाय युवां मिलतम्, यथैष भगवान् कृताब्दिकतपोव्रतं पारयेत । अहमपि सत्पात्रदानविधानेन भवाब्धेरात्मानं तारयामि, इति श्रुत्वा तावमिलताम् । तदनु भगवदञ्जलौ श्रेयांसः शुद्धभावेनेक्षुरसमभिधारतुं लग्नः । तद्धारा वर्धमानाऽपि तद्बिन्दुरेकोऽपि भूमौ नाऽपतत्, पाणिप्रतिग्राहिलब्धिमत्वात् । इत्थं भगवानृषभः प्रथमं वार्षिकतप इक्षुरसेन पारयामास । तदवसरे गन्धोदककुसुमवृष्टिः १, वसुधारावृष्टिः २, चेलोत्क्षेपः ३, नभोमण्डले देवदुन्दुभीनादः ४, व्योम्नि ' अहोदानमहोदानम् ' इत्युद्घोषः ५, इति दिव्यानां पञ्चकमाविर्बभूव । अमुना महादानेन श्रेयांसो मोक्षलक्षणं शाश्वतं फलमर्जितवान्, कारितवाँश्च तत्र पारणास्थले रत्नमयं पीठम्, पप्रथे च सा वैशाखशुक्लातृतीयाऽक्षयत्वेन । प्रशशंसुश्च लोकाः–श्रीऋषभ इव पात्रम्, इक्षुरस इव प्रासुक आहारः, श्रेयांस इव भाग्यशाली लाभयिता, सर्वमेतन्महापुण्येनैव घटितुमर्हति ।

१०१ श्रेयांसेन लोकान्प्रति निजाष्टभवकथनम्--

तदवसरे श्रेयांसो लोकानेवमवदत्–भो लोकाः ! सद्गतिलिप्सवो भावुका नराः साधुभ्य एवं प्रासुकमाहारं ददन्ते । लोका ऊचिरे–त्वया कथमेतदवेदि ?, श्रेयांसोऽजल्पत्–श्रुयताम्–ममाऽमुना भगवज्जीवेन सार्धमष्टौ भवा, अजायन्त । यथा–पुराऽस्य प्रभोर्जीवो ललिताङ्गदेव आसीत्, अहन्तु तस्य स्वयम्प्रभाख्या देवी खल्वासम् । द्वितीये भवे भगवान् वज्रन्धरराजा बभूव, अहं तदीया श्रीमती राज्ञी जाता । तृतीये जन्मनि द्वावपि युगलिकौ जज्ञाते । चतुर्थे भवे सखायौ देवा-

---

१ यदञ्जलौ सकलोदधिवारीणि मायुर्बिन्दुमात्रमपि नो निर्गच्छेत् स पाणिप्रतिग्राहिलब्धिमानुच्यते ।

बभूव। पञ्चमे भवे भगवानेष वैद्यपुत्रजीवानन्दाभिधोऽभूत्, अहन्तु तत्सखोऽभूवम्। षष्ठे चावामच्युते देवलोके सुहृदौ देवौ जातौ। सप्तमे भगवान् वज्रनाभनामा चक्रवर्त्यजायत, अहं तत्सारथिरभूवम्। अष्टमे च भवे सर्वार्थसिद्धविमाने देवत्वेनोदपत्स्वहि। ततश्च्युतोऽयं ऋषभदेवो वर्त्तते, अहं तस्य प्रपौत्रतां नीतोऽस्मि। इयतीं वेलां कापि मे तत्स्मृति-र्नाऽऽसीत्, परमधुनैनं प्रभुमालोक्य प्राग्भवं तदशेषमस्मार्षम्। अतोऽहं प्राक्पालितदीक्षः साधोः सर्वमाचारमस्मरम्। एष प्रभुर्निस्पृहो वीत-रागो धनादिकं नैव कामयते। ततो लोकाः साधुभ्य आहारदानविधिं विदाञ्चक्रुः। अस्यामवसर्पिण्यां सर्वत आदौ सुपात्रदानं श्रेयांसकुमार-श्चक्रिवान्। यतः—सहस्रमिथ्यात्विभ्य एको जिनाश्रयी श्रेयान्, तत्स-हस्रादेको ह्यणुव्रती वरम्, अणुव्रतिसहस्रादेको महाव्रती श्रेष्ठः, महाव्रति-सहस्रेभ्य एको जिनेश्वरो महान् भवति। अतो हि जिनेश्वरसमं पात्रं नो भूतं नो भविष्यति। शुभेप्सुभिरमुष्मै विशिष्टपात्रत्वाद्दानं प्रदेयमेव।

१०२ प्रभोराहारान्तरायकर्मोदयप्रदर्शनम्—

अथैकं वर्षं यस्याऽन्तरायभूतस्य प्रागार्जितस्य कर्मण उदयादिह भगवान् क्वापि प्रासुकमाहारं नालभत तदेव दर्शयति—भगवानेष पुरा क्वचिच्छ्रेष्ठि भवे लोकानां कुसीदेनाऽन्नं ददाति स्म। एकस्मिन् दिने तल्लातुं ग्रामान्तरं यातस्तत्र वृषभवृन्देन धान्यं मर्दयन् कर्षको मुखम-वनम्य भूयोभूयस्तद्भुञ्जानस्यैकस्य वृषभस्य तुण्डे कशया गाढं जघान। तदवलोक्य दयया श्रेष्ठी तमवदत्—रे! चाण्डाल इव मुखे कशया मा हिंसीः, अश्नाति चेच्छिक्ये मुखं पिधेहि। एवं श्रेष्ठिनोक्तं श्रुत्वा सोऽपि तथैव तन्मुखं द्वादशप्रहरपर्यन्तं न्यधत्त, तेन पापेनार्जिताऽन्त-

रायभूतकर्मयोगाद्वर्षमेकं भगवान् कापि भिक्षां न लेभे ।

१०३ बाहुबलिकृतधर्मचक्रपीठनिर्माणम्—

अथ विहरमाणो भगवानेकदा बहुलीदेशे तक्षशिलानगर्यामुद्याने सायङ्काले समागत्य कायोत्सर्गेण तस्थिवान् । तदा वनपालः समेत्य बाहुबलिने राज्ञे विज्ञपयाञ्चक्रे भगवदागमनम् । तस्मै तुष्टिदानं प्रदाय राजा मनसि दध्यौ—यन्मया सपरिवारेण भगवद्वन्दनार्थं गन्तव्यम्, इदानीं निशि सर्वे परिवारा एकत्री भवितुं नार्हन्तीति प्रभाते गन्तव्यमित्यवधार्य निश्चिन्तस्तस्थौ । जाते च प्रभाते सुसज्जिते च नगरे नानानरपतित्रिलक्षतनयाऽन्तःपुरादिसकलपरिवारयुतो राजा तत्राऽऽययौ । तावत्प्रभुर्निर्बाधविहारित्वादन्यत्र विजहार । अत एव खिद्यमानो राजा तारस्वरेण रोरुद्यमानः प्रभोश्चरणस्थाने स्थित्वा भूयो भूयः ‘ बाबा आदम बाबा आदम ’ इति व्याजहार । ततो यत्राऽतिष्ठत्कायोत्सर्गेण प्रभुस्तत्राऽष्टयोजनविस्तीर्णं योजनोन्नतं सहस्रकोणं सहस्रसोपानविभूषितं धर्मचक्राभिधं रत्नमयं पीठमचीकरत्, तदुपरि महामहेन भगवच्चरणपादुकेऽतिष्ठिपत्, तद्भगवद्धियाऽनंसीत् । इतरेऽपि लोकास्तन्नामं नामं मुमुदिरे, तत्र च पप्रथे तत्कृतपीठस्य महिमा सर्वत्र ।

१०४ भगवतः समुदिते केवलज्ञाने मरुदेव्याः सिद्धिगमनम्—

अथ प्रव्रज्याकालिकविहारदिवसादेव माता मरुदेवी पुत्रस्नेहाद् भृशमुपालभमाना भरतं सततमेवं ब्रवीति स्म—वत्स ! ऋषभः कमलस्रजमिव मामुज्झित्वा वने न्यवात्सीत् । क्षुधया तृषया च परिपीडितः

१ पुरा महाविदेहे भगवान् षण्मित्रैः सह प्रव्रज्य सह विहरन्नेकदा क्वचित्खले धान्यं मर्दयन् कश्चिन्मुखमवनम्य धान्यमश्नतो वृषभस्य मुखं गाढमताडयत । तदुदीक्ष्य भगवान्मनसि दध्यौ—चेदस्य मुखं शिक्येन पिदध्यात, तर्हि तदश्नादन्नेव वहेदिति ध्यातमनालोचितं पापमत्रोदैत्, इति क्वचित्पुस्तकेऽलेखि ।

क्वापि श्मशाने गुहायां वा तपस्यञ्छीतोष्णे सहमानः प्रावृषि जलेन क्लिद्यन् दंशमशकादिभिर्दन्दह्यमानो भविष्यति । हा ! हा ! ! ! पुत्रस्येदृशं दुःखं शृण्वत्या मम हृदयं सहस्रधा कथं न जायते ? । अरे ! त्वमत्र राज्यं कुर्वन् नानाविधसुखमनुभवसि । नानाविधमाभरणं सौवर्णं महार्हरत्नजटितं परिधत्से । लक्षपाकादितैलं तनौ मर्दयसि । नानाप्रकारं सरसं पौष्टिकमभ्यवहरसि । नानाचित्रचित्रिते मृदुले शयने सुखेन शेषे । नानासामन्तमाण्डलिकसुभटकोटिभिरहर्निशं परिवृतोऽसि । मधुरतरगीतवादित्रादिरवैर्जागरितोऽसि । मम पुत्रस्तु प्रतिगृहं रङ्क इव भिक्षमाणः कदन्नमश्नाति । नग्नः पर्यटति । कण्टककङ्करादिकाठिनीकृते भूतले स्वपिति । शृगालादिदुःश्रवैरवैर्जागर्त्ति । क्षुत्तृड्भ्यां बाध्यमानः शरीरसुश्रूषादिसमुज्झितो निरुपानत्पादेन चरति । त्वं कदापि तच्चिन्तां न कुरुषे । इत्थमुपालम्भयन्तीं सततं रुदतीं तामाश्वासयति भरतः—पितामहि ! तदर्थं मनागपि मा शोचीः, पुत्रस्ते लेशतोऽपि दुःखं नानुभवति, सदैव सुखी वर्त्तते । एवञ्चेत्तर्हि तं मां दर्शय, तदा सत्यं मंस्ये, इति तयोदिते भरतो जगौ—धीरा भव ! अचिरादत्रैवागतं तं द्रक्ष्यसि । अथ भगवान् वर्षाणां सहस्रं देहं व्युदसृजत् । अयं कमप्युपसर्गं नालभत, केवलमब्दमेकमाहारवैकल्यमाप्तवान् । एतच्च धीरतया सहमान आत्मानं भावयन् भगवान् सहस्राब्दीं व्यत्यैत् । ततः फाल्गुनकृष्णैकादश्यां पूर्वाह्णवेलायां पुरिमतालनामकविनीताशाखापुर्या बहिः शकटमुखोद्याने न्यग्रोधतरोस्तले निर्जलमष्टमंतपः कुर्वन्नुत्तराषाढानक्षत्रे चन्द्रयोगे शुक्लध्यानस्य मध्यभागे वर्त्तमानो निरुपममनन्तमत्युज्ज्वलं केवलज्ञानं केवलदर्शनञ्च प्रभुरध्यगच्छत्, तद्योगात्सर्वमतीताऽनागतं भावं पश्यन् भगवान् सर्वत्र विचचार । इतश्च राज्ञो भरतस्याऽऽयुधशालायां चक्ररत्नमाविरासीत् । युगपदेवोभयोर्वर्धापनमागात् । तावुभौ हर्षदानं प्रदाय विसृज्य भरतो दध्यौ—यदिदं चक्रं

प्रकटितं तत्तु लौकिकमेव फलं प्रसवितुमर्हति । अत एव लोकोत्तरफलदायी श्रीतीर्थकृदुद्भूतकेवलमहोत्सवं विधायैव चक्राविर्भावमहोत्सवो विधातव्यः । इति निश्चित्य लोकद्वयोरुपकरिष्णुकेवलमहिमानं विवर्धयिषू राजा भरतो मरुदेव्याः समीपमागत्य तामाख्यातुं लग्नः—पितामहि ! यदर्थमियन्तं कालं भृशमशोचीः, माञ्चोपालभत, स ते सूनुर्महत्या समृद्ध्याऽधुनाऽत्राऽऽयातः । अतोऽधुनैव मया सह व्रज त्वां दर्शयिष्यामि । इति निगद्य तां महागजोपर्यारोप्य महत्या समृद्ध्या सपरिवारः समवसरणादनतिदूरे समायातः । मरुदेव्या पृष्टः—वत्स ! देवदुन्दुभीनादः कथं श्रूयते ? । भरतोऽजल्पत्—तवैव पुत्रस्याऽग्रे । परमेतत्सा तथ्यं न मेने, ततोऽग्रे गत्वा केवलज्ञानमहोत्सवविधिस्तया समागतदेवदेवीनां कोलाहलं श्रुत्वा पुनरपृच्छत्सा—किमर्थं केषामेष कोलाहलः ?। भरत उवाच–तव सूनुमर्चितुमागतदेवदेवीनामयङ्कोलाहलो जायते । पश्येदं रत्नस्वर्णरजतमयत्रिवप्रोपशोभितं निजात्मजस्य सदनम् । एतस्यानुपमां शोभां सहस्रवदनोऽपि वर्णयितुं नार्हति, तर्हि मनुष्य एकेन मुखेन कथं कुर्वीत ?। इत्थमात्मजमाहात्म्यमाकर्ण्य निःसीमानन्दोदयादुज्झितलोचनयुगलच्छदा सा समवसरणे स्वर्णसिंहासनासीनं स्वपुत्रं देवदेवीगणैः सेव्यमानमवलोक्य मनस्यचिन्तयत्–अहो ! मोहमहिमा बलीयानस्ति । यमहं दुःखिनं जानाना दिवानिशमशोचिषम्, स तु महेन्द्रादपि गरिष्ठं सुखमनुभवन्नवलोक्यते । यदर्थं रुदित्वा रुदित्वाऽन्धत्वमायम्, स तु मनागपि मां नैव सस्मार । पुत्रो मे क्षुत्तृड्भ्यां शीतेन वातेन जलेन तापेन पराभूयमानो रङ्क इव निर्वसन उपानद्विहीनः पादचारी निर्जनकाननादौ दुःखी तिष्ठति तमागृह्य गृहमानय, इति भरतमुपालम्भयन्ती किलासम् । अयन्तु मामकं जात्वपि नैव गणयति सुखशान्तिमपि निजां नाऽबूबुधत, अतो मोहमेनं धिगस्तु । अथवा

वीतरागत्वात्केनापि सह रागं द्वेषमेष कथं कुर्यात् ?, अहन्तु सरागित्वान्मुधैव विकल्पनमकरवम् । यदत्र संसारे कोऽपि कस्यापि नास्ति, सर्वं हि स्वार्थतामेव नयते । काऽहं कश्च मे सूनुरिति विचिन्तयन्ती सर्वतो ममत्वभावमुज्झन्ती, भावयन्ती चाऽव्यक्तभावं तदैव केवलज्ञानमित्वाऽन्तकृत्केवलिनी सती मोक्षं ययौ । अत्रैवमाह कविः–' विश्वस्मिन् युगादीशसमः पुत्रः कोऽप्यन्यो नाऽभूत्, येन जगत्यां सहस्राब्दीं भ्रान्त्वा महताकष्टेन केवलरत्नमतिश्रेष्ठं लेभे, अदायि च तदेवाऽर्जितं जनन्या अपि स्नेहात् । मरुदेवी मातापि समा काप्यन्या जगति नाऽभूत्, या हि मुक्तिवधूं पुत्रेण सह परिणिनाययिषुः प्रागेव तामीक्षितुं तत्राऽऽगात् । ' अस्यामवसर्पिण्यामेषा मरुदेवी मातैव सर्वतः प्राङ् मोक्षमापत् । तत इन्द्रादिका देवस्तच्छवं विधिवत्संस्कृत्य क्षीराम्बुधौ चिक्षिपुः, सुरेन्द्रवचसा शोकं त्यक्त्वा स्नानादिकं कृत्वा, हर्षशोकाकुलीभूतो भरतो भगवन्तमभिवन्द्य प्रमुमुदे । पप्रथे च लोके भगवान् प्रथमः केवलीति ।

१०५ भगवतत्कृतसंघस्थापना—

अथ वन्दनादिकं विधाय सपरिवारे राजनि भरते सभायामासीने भगवान् धर्मदेशनामारेभे । तां श्रुत्वा भरतस्य ऋषभसेनादयः पुत्राः पञ्चशतं, सप्तशती पौत्राणामित्थं द्वादशशतराजकुमारा दीक्षिता अभूवन्, बाहुबलिनमापृच्छ्य ब्राह्म्यपि दीक्षामलासीत्, भरतश्च श्रावकतामापेदे, सुन्दर्यपि प्रव्रज्यां जिघृक्षूर्भरतं बभाषे, परमेनामतिरूपवतीमवगच्छन्नरौत्सीत्तेन श्राविकाऽभवत् । पुण्डरीकप्रमुखाँश्चतुरशीतिगणधरानतिष्ठिपत् । इत्थं चतुर्धात्मकसङ्घस्थापनाद्भगवान् प्रथमस्तीर्थङ्करो बभूव । तदा कच्छमहाकच्छौ विहाय ते सर्वे तापसा भगवत्पार्श्वे पुनर्दीक्षां लब्धुः । भरतश्च भगवन्तं वन्दित्वाऽयोध्यामागात् । भगवानप्यनेकजीवाँस्तारयितुमन्यत्र व्यहरत । यस्य तरोस्तले भगवतः केवलज्ञा-

नमुत्पेदे तस्य ' प्रयागवट ' इत्याभिधा जाता, अद्यापि तन्नाम्नैव लोके प्रख्याति, मह्यते च ।

१०६ भरतस्य षट्खण्डसाधनं, सुन्दर्या दीक्षणञ्च—

अथ भरतो नरपतिः स्वगृहे प्रादुर्भूतचक्रहेतोराष्टाहिकमहोत्सवं व्यतानीत् । ततो महता महेन क्षितेः षट्खण्डान् साधयितुं चतुरङ्गचम्वा-परिवृतश्चचाल । तदग्रे सहस्रदेवाधिष्ठितं चक्रं यावन्तं पन्थानमतिक्रम्य प्रत्यहं तिष्ठति स्म, तदनुगतं सैन्यमप्यतिष्ठत् । इत्थं व्रजन्ननुक्रमेण गङ्गानद्यास्तीरमागत्य तस्थौ । तत्र गङ्गादेव्या आदेशेन तत्सदने निवसन् गङ्गया सत्रा नवनवं विषयसुखमभुङ्क्त । ततस्तद्दत्तमार्गेण तमिस्रां गुहामुल्लंघ्य म्लेच्छदेशान् शेषानपि पञ्चखण्डान् संसाध्य, षष्टिसहस्रवर्षै-र्भरतचक्रीपुनरयोध्यामाययौ । ततो नमिविद्याधरस्य गृहे स्त्रीरत्नमुत्पेदे, तां पर्यणैषीद्भरतः । सुन्दर्यपि तावत्सहस्रवर्षाणि यथावदाचामाम्लं तपश्चक्रे, तेनाऽतिकार्श्यं नीता सती समागताय भरताय मौक्तिकभृतस्थालमुपदीचक्रे । तामतिकृशामवलोक्य तत्कारणञ्चावगत्य तां प्रव्रजितुमादिशत् तदनु सापि दीक्षां लात्वा साध्वी जज्ञे ।

१०७ भरतबाहुबलिनोर्मिथो युद्धं, बाहुबलिनः प्रव्रज्या च—

अथैकश्चक्रशालीयः पुमानागत्य भरतमाख्यत्—चक्रं शालान्तर्नाऽऽयाति बहिरेव तिष्ठति । भरतोऽवदत्—कथं नायाति ? । तेनोक्तम्—सर्वे नरनाथास्त्वदाज्ञां स्रजमिव वहन्ति, किन्तु भ्रातरस्ते नैव मन्यन्ते, अतश्चक्रं शालान्तर्नाऽऽयाति । तदा दूतमुखेन सर्वान् भ्रातॄनाख्यत्—यूयं स्वस्वराज्यं चिकीर्षथ चेत्सर्वेऽत्रागत्य ममाज्ञां स्रजमिव शिरसा बिभृत, नोचेद्वो राज्यमपहरिष्यामि । इति श्रुत्वाऽष्टनवतिबन्धवः परस्परं व्यमृशन् । यत्सर्वेषां नः पित्रैव राज्यमदायि नो दत्तं भरतेन, तर्हि भरतस्य दासतां कथं स्वीकुर्मः ?, इति विनिश्चित्य सर्वे ते भगवत्पार्श्वमाजग्मुः । प्रभुणापि वैतालीयाध्ययनप्ररूपणया प्रतिबोधितास्ते सकलाः प्रव्राजिताः । तदपि तच्चक्रं बहिरेवाऽतिष्ठत्, तद् दृष्ट्वा मन्त्री जगाद—स्वामिन् ! सर्वे भवदाज्ञां मालामिवोहुः, केवलं महाद्दप्त एको बाहुबली तवाज्ञां नोररीकरोति, जानाति स निजभुजपराक्रमाधिक्यम् । सति तस्मिन् प्रतिकूले चक्रं कदाचिद-

प्यायुधशालां प्रवेष्टुं नार्हति। अतोऽचिरादेव समूलं समुच्छेदनीय, इति मन्त्रिवचः श्रुत्वा भरतः सुवेगनामानं चतुरं दूतं बाहुबलिनः पार्श्वे प्रैषयत्। दूतो रथारूढश्चचाल । तदा मार्गे रथचक्रं भग्नम्। प्रयाणसमये पृष्ठे कश्चिच्चुचाव । वसने च कण्टकेऽलगत् । दक्षिणे रासभो ररास। इत्याद्यपशकुनैर्मनसा शङ्कमानो दूतो गिरिकाननादिकमुल्लंघ्य कतिपयदिवसैस्तद्राज्ये समायातः। तत्रैकग्रामे धूलिलिप्तपादमालोक्य जलहारिण्यस्तम-प्राक्षुः—त्वं कोऽसि। कुत आगच्छसि? कुत्र वा जिगमिषसि? कश्च ते राजा?। दूतोऽवदत्–यूयं मां भरतस्य चक्रिणो दूतमवगच्छत। ताः पुनरूचे–कोऽयं भरतः ? यो हि कञ्चुकीषुभरतः सः ?, अथवा मृण्मयभाण्डेषु यस्तिष्ठति सः ?, किंवा रोगजो भरतः ?; एतत्त्रयादन्यः कोऽपि भरतोऽस्माभिरद्यावधि नाऽऽकर्णि । तदुक्त्या विस्मितो दूतो बाहुबलिनो राज्यं महदस्ति, इति मन्यमानस्तक्षशिलानगरीमागात्। ततो राजद्वारमागत्य नृपादेशात्सभां प्रविश्य बाहुबलिनं प्राणमत्। नृपेण योग्यासनोपरि समुपवेश्य पृष्टः–दूत! सपादकोटिपुत्रादिपरिजनैः सह भरतः कुशलमनुभवति ?। दूतोऽजल्पत्—यमनवरतं देवा राजानः परिजनाश्च सेवन्ते स तु सदैव कुशली वर्त्तते, परन्तु भवानेव तं सेवितुं तत्र नागात्, अतः सकलं निष्फलं मनुते सः। अतस्त्वं तत्र याहि, तं भजस्व, एतावन्ति दिनानि यन्नागास्तदपराधं क्षमय । यदि सुखेन जिजीविषसि राज्यं वा बुभुक्षसे, चेत्तर्हि तूर्णं तत्र गत्वा तच्चरणकमलयुगलं भजस्व। राजा तमवादीत्—त्वा-मधुना वधार्हमपि दौत्येन हेतुना जीवन्तं मुञ्चामि, अतस्तूर्णं गत्वा भरतं ब्रूहि। यद्बाहुबली स्वप्नेऽपि त्वां सेवितुं नेहते। युयुत्सां बिभर्त्ति चेद्द्रुतमायातु समरावनाविति सरोपमादिश्य संभर्त्स्य च तं निरकाशयत्। सोऽप्ययोध्यामागत्य तदुक्तमशेषं भरताग्रे जजल्प। तदाकर्ण्य प्रकुपितो भरतस्तदैव समरपटहं वादयँश्चतुरङ्गबलं सज्जीकृत्य, श्रीऋषभदेवमभ्यर्च्य, वज्रसन्नाहं परिधाय गजराजमारुह्य, समराय प्रयाणमकरोत्। सपादकोटिमितास्तत्पुत्रास्तमन्वगुः, तेषामपि पुत्रा असंख्याश्चेलुः। तत्र गजाश्चतुरशीतिलक्षम्, तुरङ्गमा अपि जविष्ठास्तावन्तः, रथाश्चाप्येतावन्तः, पत्तीनां षण्णवतिकोटिः, समरतूर्यवादिनः षोडशलक्षम्, ध्वजिनां दशकोटिः, चतुरशीतिलक्षप्रमाणा महानिशानधराः, चतुर्दशसहस्राणि महामात्याः, जात्याश्वा महातुङ्गा वाजिनोऽष्टादशकोटिः, पञ्चाशत्कोटिरुद्योतकराः, नवनिधयः, चतुर्दशरत्नानि, यक्षगणः षोडशसहस्रम्, द्वात्रिंशत्सहस्रसंख्याका मुकुटबद्धराजानः, वारविलासिनीसहिताश्चतुःषष्टिसहस्रराजकन्याः, द्वात्रिंशत्सहस्रनर्त्तकाः, अन्येऽपि यक्षकिन्नरविद्याधरप्रमुखाः कियन्तोऽनुजग्मुः। इत्थं विशालभालबद्धमहासमरपट्टो भरतचक्रवर्त्ती सुषेणनामानं चमूपतिं पुरस्कृत्य, गच्छन्ननुक्रमेण बलोत्क्षिप्तरजोभिर्गगनमाच्छादयन् कतिपयप्रयाणैर्बाहुबलिनो राज्यसीम्नि समागत्य तस्थौ ।

१ पुत्राणां कोटित्रयीमिति कश्चिदलिखत्।

बाहुबल्यपि समरोन्मुखः श्रीऋषभदेवं संपूज्य, वज्रसन्नाहं परिधाय, सकलं जगत्तृणाय । मन्यमानो भद्राख्यमहागजारूढस्त्रिलक्षपुत्रैः पौत्रैरर्कसहस्रमहीशैः कियद्भिर्विद्याधरैर्बहुभिर्भटैश्चतुरङ्गबलैः सहाभिमुखमाययौ, कृतवाँश्च स्वसुतं सिंहरथं सेनानीम् । तदा दलद्वयमेलनात्क्षितिश्चकम्पे, सागराश्चुक्षुभिरे, गिरिशिखराणि निपेतुः । ततो भारते सैन्ये षोडशसहस्ररणदुन्दुभयो नेदुः । बाहुबलिनः सेना अपि लक्षप्रमाणानि रणवाद्यानि वादयन्त्यस्तस्थुः । वन्दिनश्च दलद्वये स्थिता विरुदावलीम्पेठुः । द्वयोः सैन्यानि गजारूढा गजारोहिभिस्तुरगारोहिणस्तुरगारूढै रथिनोरथिभिः पत्तयः पत्तिभिर्विद्याधरैर्विद्याधरा न्यायतः परस्परं योद्धुमारेभिरे । तत्र सुषेणसेनापतिरभिमुखमागच्छन्तं सिंहरथमाख्यत्—भोः ! अहमस्मि भरतस्य भृत्यः, त्वमसि राजसूनुरतः स्वामित्वात्त्वमेव प्रथमं मयि प्रहर !, तन्निशम्य सिंहरथस्तदुपरि शस्त्रममुञ्चत् । ततः सुषेणः कृपाणं तदुपरि मुमोच, तमधिमार्गमेव सिंहरथभ्राता सिंहकेतुरच्छिनत् । ततः प्रकुपितः सुषेणो मृगान्मृगपतिरिव सिंहरथीयं बलं निघ्नन् बाहुबलिनः समीपमागात् । तावत्तत्राऽनिलवेगविद्याधरः समेत्य बाहुबलिनं प्रणम्य सुषेणेन सह योद्धुमलगत् । उभौ दृप्तौ महौजसौ महामल्लाविव सुचिरं बाहूबाहवि मुष्टीमुष्टि यष्टीयष्टि युयुधाते । तदा लब्धावसरः सुषेणः सितासिमुद्यम्य सिंहरथं हिंसितुं यावदधावत्, तावत्सूर्यमस्तमितमलोकत, ततस्तस्मात्स स्वयमेव न्यवर्त्तत । यदुभयदले किलैवं नियम आसीत्–श्रीऋषभदेवे शरणीकृते, सूर्ये चाऽस्तङ्गते, वर्षति च मेघे न योद्धव्यम् । तत्र रणावनौ ये भटा म्रियन्ते तेषां तु संस्कृतिमेव प्रतिक्रियां विदधिरे । ये पुनरस्त्रशस्त्रादिप्रहारजर्जरीकृता मृतकल्पा आसन्, ताँस्तु शिबिरमानीय दिव्यरत्नीयजलसेचनादिना सज्जितानकरोद्भरतः । बाहुबली तु सोमयशसो हृदाभरणवारिणा सजयाञ्चकार ।

जाते च प्रभाते सुषेणसेनानीरनिलवेगमालोक्य हुतभुगिव प्रज्वलँस्तं हिंसितुं यावदैच्छत्, तावन्मध्ये सिंहरथः समागत्य मेघ इव गर्जन् योद्धुमाकारयत् । अनिलवेगस्तु भारतीं सेनां मथ्नन् गजराजविरचितत्रिकोट्टान्तः सुप्तस्य भरतस्य पार्श्वमागात् । तमागतं विलोकमानो भरतः कदाचिन्मामेव हन्यात्, इति विमृश्य तदुपरि चक्रं मुमोच । तद्विलोक्याऽनिलवेगस्ततः पलायत, परन्तु यत्र यत्र याति तत्र तत्र तदेव पश्यति । अतश्चक्रभीत्या वज्रमयं देहं विधाय लवणोदधावेव षण्मासीं यावदस्थात्, तत्रापि शिरसि आभ्यदासीच्चक्रमपि । ततः परं सागरान्निर्गतां तत्प्रतिकृतिं छित्वा चक्रं न्यवर्त्तत । कटकमतिक्रम्य समीपमागत्य प्रहरतां प्रहरतामिति सगर्वं वदन्तं वैपक्षिकं सूर्ययशसं सुभटं बाहुबली जगाद्–रे ! त्वमसि प्रशस्यः शौण्डीरः परं ममैकमुष्टिनापि निहतश्चूर्णीभविष्यसि, अतो दूरमपसर । तदैव केनचिद्देवेनोक्तम्—रे मूर्ख ! त्वममुना युयुत्सुर्मनसि

व्रीडां किं नैषि ? यदस्याग्रे युद्धं कामयसे ?, याहि याहि, अकाले मा म्रियस्व । इत्थमकाण्डब्रह्माण्डक्षयकरं समरमतिघोरतरं तावुभौ भ्रातरौ चक्राते द्वादशाब्दीम् । कोटिशो भटा दलद्वये मम्रुः, रक्तनद्योऽवहँश्च, परं जयपराजयौ कस्यापि नाऽभूताम् । इत्थं महाऽनर्थं जायमानमालोक्य सौधर्मेन्द्रचमरेन्द्रौ समेत्य भरतमूचाते—भोः ! भगवान् सकलाँल्लोकानमण्डत । युवामकाल एव तान् कथं संहरेथाः ? । भरतोऽवदत्—किं कुर्याम् ? बाहुबली ममाज्ञां नो मन्यते, अतो मे चक्रमायुधालये नाऽऽयाति, अत्र मम को दोषः ? । तौ पुनरूचाते—युवां भ्रातरौ स्थः युयुत्सां दधाथे चेदुभावेव युध्येथाम्, लोकानां क्षयं मा कृषाथाम् । भरतोप्येतत्स्वीचकार । ततस्ताविन्द्रौ बाहुबलिनमागत्य सर्वमवदताम् । भरत इव बाहुबल्यपि तदुक्तिं मेने । ततस्तौ तयोरेकं दृष्टियुद्धम्, द्वितीयं वाग्युद्धं, तृतीयं बाहुयुद्धं, तुर्यं मुष्टियुद्धम्, पञ्चमं दण्डयुद्धमिति निरचिनुताम् । ततो विस्तृतभूभागमुत्खन्य वारिभिरभिषिच्य कुसुमानि विकीर्य सुसज्जिते मृदुतरे भूमौ भरतबाहुबलिनौ परस्परजयैषिणौ कवचं बिभ्राणौ युयुत्सया मिमिलतुः । देवादयो व्योम्नि साक्षित्वेन तस्थुः, इतरेऽपि दर्शकाः पङ्क्तिशोऽतिष्ठन् । तत उभौ तौ प्रथमं दृष्टियुद्धं चिकीर्षन्तौ त्राटकमुद्रया परस्परमभिमुखं पश्यन्तौ तस्थतुः । परमतिशौण्डीरवतो भरतस्य विलोकमानस्य दृशौ जलार्द्रत्वान्निमिमिलतुः, बाहुबली तु पश्यन्नेव तस्थिवान् । ततो गगनस्थिता लेखाः पुष्पाणि वर्षन्तश्चचक्षिरे—भरतः पराजितः, बाहुबली जितवान् । ततो भरते सिंहनादं वितन्वाने गिरयश्चकम्पिरे, बाहुबलिनि गर्जति सति ब्रह्माण्डोदरं सकलं पुस्फोट, तं शब्दमसहमानो भरतः स्वश्रवसी प्यधत्त । तत्पश्यन्तो देवा भरतं पराजितवान् बाहुबलीति जगदुः । बाहुयुद्धे प्रवृत्ते प्रथमं भरतः स्वभुजमलम्बयत कमलनालमिव लीलयैव बाहुबली तं नमयामास, ततस्तेन प्रसारितं बाहुं नमयितुं चिरं कृतप्रयत्नोऽपि भरतो मनागपि नाऽनीनमत्, किन्तु स्वयमेव चिरं लम्बमानो झूलितवान् । अत्रापि सर्वे बाहुबलिन एव जयश्रियमपश्यन् । ततस्तौ मल्लाविव भुजंस्फालयन्तौ मिमिलतुस्तदा सर्वेषु पश्यत्सु भरतः प्रथमं बाहुबलिनं मुष्टिना जघान, तदाघातेन क्षणं सञ्जातनयननिमीलनोऽभूत् । बाहुबली भरतं मुष्टिनाऽताडयत्, तत्प्रहारवेदनामसहमानो भरतो रुधिरं वमन् धरान्तः प्राविशत् । अत्रापि भरतः पराजित इति सर्वेऽजल्पन् । ततो दण्डयुद्धमुभौ प्रावर्त्तयताम् । तत्र प्रथमं भरतो गदया तं प्राहरत, तेन मृद्घट इव तन्मुकुटं सञ्चूर्णितमाजानुचरणः सोऽधस्तादगमच्च । बाहुबलिना गदया प्रहृतो भरतस्तु सञ्चूर्णमुकुटः सर्वावयवेन धरातलं प्रविवेश । अत्रापि भरतेन हारितं बाहुबलिना जितम्, इत्युच्चैर्जगुः सर्वे ५ । इत्थं जातेष्वपि पञ्चसु युद्धेषु हारितो महतीं चिन्तामधिगच्छन्मनसि व्यमृशत्—यदसौ सुराऽसुरैरजय्योऽपहरिष्यति मे राज्यम् । अतोऽधुनैव समूलमुच्छेदनीय इति, अवधार्य तद्विघाताय चक्रमजहात्; परन्तु गोत्रे तन्नैव प्रभवतीति हेतोस्तं प्रदक्षिणीकृत्य पुनर्भरतस्य पाणौ समायातम् ।

अथ भ्रष्टप्रतिज्ञमवलोक्य प्रकुपितो बाहुबलीमुष्टिमुद्यम्य भरतं हिंसितुमुत्तस्थौ । तदोक्तं देवैः—राजन् ! विमृश्यतां विमृश्यताम् । तेन वचसा ज्ञातसारोऽसौ 'धिङ् मां राज्यश्चैतत्, यल्लोकेनाऽकार्यमपि कारयते, विवेकश्च लुम्पति । अहो ! कीदृशो मे मतिविभ्रयोऽजनि येनाऽहमग्रजन्मानमपि हन्तुं प्रावृतम्' इति विमृश्य वैराग्यभावमापन्नस्तदा तेनैव मुष्टिना लोचं कृत्वा प्रवव्राज । तस्मिन् दीक्षिते 'अहो मयैव हेतुना सकला भ्रातरः प्रवव्रजुस्तत्यजुश्चाऽसारमेनं संसारम्, इति चिरं विलप्य तत्पुत्रं सोमयशसं तक्षशिलानगर्या अधिपतिं कृत्वा, भरतः स्वराजधानीमयोध्यामागात् । इतश्च बाहुबली विहृत्याऽग्रे गत्वा 'सम्प्रति श्रीऋषभदेवपार्श्वे गमने लघुबान्धवा अपि वन्दनीया भविष्यन्ति, तदन्यत्रैव तावन्मया स्थातव्यम्, समुत्पन्ने च केवले भगवतां समवसरणे व्रजिष्यामि' इति विमृश्य तत्रैव वर्षं यावत्तस्थौ । अहङ्कृतिमत्वाज्ञातेऽब्दे केवलमलभमानस्य तस्य प्रतिबोधार्थं भगवत्प्रेषिता ब्राह्मी सुन्दरी च तत्रागत्य जगदतुः—वीरबन्धो ! भूयान् कालो यातः, अधुनापि गजादवतर, इति वचः श्रुत्वैव समुज्झिताभिमानस्य तस्य केवलज्ञानमुत्पेदे । ततः प्रभुसमवसरणमागत्य केवलिनां पङ्क्तावुपाविशत् ।

१०८ भरतेन सधर्मिणामुपवीतदानं, भोजनश्च—

अथैकदा भगवाञ्छ्रीऋषभदेवोऽष्टापदाचलोपरि समवससार । 'मया किमप्यन्यद्धर्मकृत्यं नाऽकारि, अतोऽद्य समागतेभ्यः पञ्चशतसाधुभ्यः प्रासुकाऽऽहारं दद्यां चेद्वरम्' इति निश्चित्य भरतः पञ्चशतशकटीं मोदकादिविविधरसवदाहारैर्भृत्वा, तत्राऽऽनीय भगवत्पार्श्वमागत्य तमभिवन्द्यैवमभ्यर्थयत—प्रभो ! अद्य मम गृहादाहारमानेतुं सकलमुनिमण्डलीमादिश । भगवानुवाच—भरत ! आधाकर्मिकराज्यपिण्डं साधुभ्यो नैव कल्पते, तथाऽभिमुखमानीतमशनादिकमनादेयमेवाऽस्ति साधूनामिति हेतोः साधवो न ग्रहीष्यन्ति । तच्छ्रुत्वा भरतोऽधिकं चिखेदे—अहमधन्योऽस्मि यतः कामपि भक्तिं कर्त्तुं न प्राभूवम् । तदा सुरेन्द्रो भगवन्तमप्राक्षीत्—जगज्जीवहितैषिन् ! अवग्रहः कतिविधो वर्त्तते ? । भगवानुवाच—सुरेन्द्र ! एक इन्द्रस्य, द्वितीयः क्षितीन्द्रस्य, तृतीयो गृहपतेः, तुर्यः सागारिकस्य, पञ्चमः सधर्मिणः । तत आख्यादिन्द्रः—प्रभो ! दक्षिणभरतक्षेत्रेषु स्वैरं विहर्त्तुं सर्वसाधूनहमादिशामि ।

तदनु भरतो जगाद—भगवन् ! मदीयषड्खण्डायामस्यां धरायां सर्वान्मुनीन् विहर्त्तुमाज्ञापयामि इत्यादिश्याधिकमतुष्यद्भरतः । तदोवाच सुरेशं भरतः—सुरपते ! मयानीताऽऽहारादिकं किं क्रियताम् ? । सोऽवक्—ये सन्ति भवतोऽधिकगुणवन्तस्तान् भोजय । ततस्तच्छ्रावकानबूभुजत्, भुञ्जानेषु तेषु लोके ब्रह्मभोजनं प्रववृते । ततः प्रभृतिभरतचक्री राज्यं कुर्वन्नैयत्येन सधर्म्मिणो भोजयितुं लग्नः । इत्थं भोजयतस्तस्य कियत्यपि समयेऽतीते यदा भोक्तृणामानन्त्यमदर्शत्, तदा परीक्ष्य सहधर्मिभ्यः प्रत्येकं काकिणीरत्नमयं देवगुरुधर्मलक्षणतत्त्वत्रयीरेखाङ्कितमुपवीतमदात् । अथैकदा भरतो वासवमपृच्छत्—सुरपते ! तव नैसर्गिकं रूपं कीदृगस्ति ?, तदा स एकाङ्गुलीमदर्शयत्तां महाज्वालाकुलामत एव दुर्दर्शामवलोक्य चमत्कृतो जातो भरतः । ततः प्रत्यब्दमिन्द्रमहोत्सवं प्रावीवृतत् ।

१०९ भरतस्य केवलज्ञानम्—

अथ विहरन्नेकदा भगवान् विनीतानगरीमायातः । भरतादयः सर्वे पौरा वन्दनार्थमाजग्मुः । भगवान् देशनां ददानः संसारेऽस्मिन्ननित्यत्वमदर्शयत् । यदेष जीवः कर्मभारेण मृद्भाराक्रान्ततुम्बीव संसाराम्भोधौ निमज्जति । ईदृशीं भागवतीं देशनामाकर्ण्य भरतो वैराग्यमाससाद । एकदाऽऽदर्शभवने समासीनो मुद्रिकाविधुरां स्वाङ्गुलीमालोक्याऽनित्यतां विभावयन् केवलज्ञानमासाद्य, दशसहस्रनरनाथैः सह देवार्पितसाधुवेषमादाय, चिरमत्र विहृत्य मोक्षमापत् । तदाऽऽसनाऽऽसीन आदित्ययशा राजोपवीतदानेन सहधर्मिणो भोजयामास । एवमष्टपट्टीं यावत्सर्वे मोक्षगन्तारः श्रावकाणां भोजयितारश्च बभूवुः । भरतचक्रवर्त्तिपदे ' आदित्ययशाः १, महायशाः २, अभिबलः ३, बलभद्रः ४, बलवीर्यः ५, कीर्त्तिवीर्यः ६, जलवीर्यः ७, दण्डवीर्यः ८ ' एतेऽष्टावपि राजानो भगवत्परिहितमुकुटं परिदधुः । सुचिरं राज्यमुपभुज्य प्रान्ते

चादर्शभवने जगदलीकत्वं भावयन्तः केवलज्ञानमत्युज्ज्वलमधिगत्य मोक्षमापन् ।

११० श्रीऋषभदेवस्य परिवारः—

| | | | |
|---|---|---|---|
| पुण्डरीकादिगणधराः | ८४ | वैक्रियलब्धिमन्तः | २०,६०० |
| ऋषभसेनादिमुनयः | ८४००० | विपुलमतिकाः साधवः | १२,६५० |
| ब्राह्मीप्रभृतिसाध्व्यः | ३०,०००० | सुराऽसुरनरविजेतारो मुनयः | १२,६५० |
| श्रेयांसादिश्रावकाः | ३०,५००० | सिद्धिङ्गताः साधवः | २०,००० |
| सुभद्रादिश्रमणोपासिन्यः | ५,५४००० | सिद्धिमुपगता आर्याः | ४०,००० |
| चतुर्दशपूर्वधारिणः | ४,७५० | अनुत्तरविमानगा एकावतारिणो महामुनयः | २२,६०० |
| अवधिज्ञानवन्मुनयः | ६००० | | |
| केवलज्ञानिनः | २०,००० | | |

इत्थं विशिष्टस्य युगादीशितुरन्तकृद्भूमिर्द्विधा बभूव—युगान्तकृत्पर्यायान्तकृच्च । तत्राऽऽद्या भगवतो मोक्षाऽधिगमानन्तरमसंख्यातपट्टपारम्पर्येण मोक्षप्रवाहरूपा, द्वितीया च प्रभोः केवलोत्पत्तेरन्तर्मुहूर्त्तात्मके कालेऽतीते कस्यचिन्मोक्षसद्भावरूपा, एषा मरुदेव्या मातुर्जाता ।

१११ भगवतो निर्वाणमग्निसंस्कारश्च—

अथाऽर्हन् भगवान् ऋषभदेवः कौमारे विंशतिलक्षपूर्वान्, राज्ये त्रिषष्टिलक्षपूर्वानित्थं गार्हस्थ्ये त्र्यशीतिलक्षपूर्वांस्तिष्ठन्, सहस्राब्दीं छाद्मस्थ्ये, सहस्रोणलक्षपूर्वान् केवलिपर्याये गमयन् सर्वाऽऽयुश्चतुरशीतिलक्षपूर्वानुपभुज्य, वेदनीयायुर्नामगोत्रानुबन्धिकर्माणि क्षपयित्वाऽस्यामवसर्पिण्यां बह्वतीतसुषमदुःषमनामकतृतीयारकस्य सार्धाष्टमासाधिकत्रिवर्षाऽवशेषे माघकृष्णत्रयोदश्यामष्टापदशैलाशिखरोपरि दशसहस्रैरनगारैः सह निर्जलेनोपवासषट्केन चन्द्रयोगमुपगतेऽभिजिन्नक्षत्रे पूर्वाह्ण-

काले पर्यङ्कासनासीनः सिद्धिमगमत् । तदवसरे शक्राऽऽसनमकम्पत, तेन भगवतो निर्वाणमवधिना विज्ञायाऽग्रमहिषीलोकपालादिपरिवारैः सह शक्रस्तत्रागत्य, त्रिःप्रदक्षिणां विधाय निरानन्दो वारिपूर्णलोचनो नाऽतिदूरे नाऽतिसमीपे विहिताञ्जलिरुपतिष्ठते। एवमीशानेन्द्रादयोऽपि सर्वे चलितासना भगवन्निर्वाणं ज्ञात्वा, स्वस्वपरिवारपरिवृताः शोचन्तस्तत्राऽष्टापदगिरौ समागत्य वन्दनादिकं विधाय च विधिवत्पर्युपासमानास्तिष्ठन्ति । अथ शक्रेन्द्रो भवनपतिव्यन्तरज्योतिष्कवैमानिकैर्देवैर्नन्दनवनाद् गोशीर्षचन्दनकाष्ठान्यानाय्य, चितात्रयीं विरचय्याऽऽभियोगिकदेवाऽऽनीतक्षीरोदनीरैस्तीर्थकृच्छवं सुस्नप्य, गोशीर्षचन्दनेनाऽनुलिप्य, हंसलक्षणकौशेयं पटं परिधाप्य, सर्वाऽऽभरणैर्विभूष्य, विरचितविचित्रचित्रचित्रितायामेकस्यां शिविकायां संस्थाप्य, सुरान्तराश्च स्नानानुलेपन–पटपरिधापनविभूषणैरलङ्कृतगणधरमुनिवरशवान् द्वितीयस्यां तृतीयस्याञ्च शिविकायां निवेश्य चितान्तिकमानिन्यिरे । तत्र शक्रो भगवच्छवं शिविकातो बहिष्कृत्य प्रथमायां चितायामतिष्ठिपत् । एवमितरे देवा गणधरमुनिवरशवाँश्च बहिष्कृत्य द्वितीयस्यां तृतीयस्याञ्च चितायामस्थापयन् । ततः शक्रादेशादग्निकुमारा निरानन्दा निरुत्साहा अग्निं प्राज्वलयन्, वायुकुमारा वायुमजनयन्, इतरे देवास्तासु तिसृषु चितासु कालागरुचन्दनादिसुरभिगन्धान्नाक्षिपन्, सौवर्णैः कलशैर्घृतैर्मधुभिश्च ता असिञ्चन् । ततोऽस्थिमात्रावशिष्टे शक्राज्ञया मेघकुमारास्तास्तिस्त्रश्चिता निरवापयन् । तदनु शक्रः प्रभोरुपरितनीं दक्षिणां दंष्ट्रां जग्राह, ईशानेन्द्र उपरितनीं वामामग्रहीत् । चमरेन्द्रस्त्वधस्तनीं दक्षिणां बलीन्द्रोऽधस्तनीं वामां ललौ । तदन्ये कियन्तो देवा जिनेन्द्रभक्त्या कियन्त आचारधिया कियन्तश्च धर्मधिया भगवदङ्गोपाङ्गीयास्थीनि जगृहुः ।

ततस्तासु चितासु त्रयाणां रत्नमयानि त्रीणि पीठानि निर्माय, नन्दीश्वरद्वीपमागत्याऽऽष्टाहिकं महोत्सवं विधाय, सर्वे शक्रादयो देवाः स्वस्वस्थानमाययुः, तत्र स्वस्वसभासु वज्रमयसम्पुटकेषु जिनेन्द्रदंष्ट्राः संस्थाप्य, गन्धमाल्यधूपदीपादिविविधोपचारैः प्रत्यहमानर्चुः । अर्हति भगवति श्रीऋषभदेवे सर्वदुःखप्रक्षीणतामुपगते तृतीयारकस्याऽवशिष्टसार्धाऽष्टमासाधिकत्रिवर्ष्यामपि गतायां, सार्धाऽष्टमासाधिकत्रिवर्षोपरि द्विचत्वारिंशत्सहस्राब्दोनैककोटाकोटिसागरोपमे काले च तुर्यारकीयेऽतीते भगवान्महावीरो निर्वाणमापेदे । तदनु अशीत्यधिकनवशताब्द्यां यातायामिदम्पुस्तकं देवर्द्धिगणिक्षमाश्रमणो लिलेख ।

११२ श्रीअजितनाथमारभ्य नमिनाथपर्यन्तानां तीर्थपानां संक्षिप्तपरिचयः—

२ अर्हन्नजितनाथो विजयविमानतश्च्युत्वाऽयोध्यायां त्रिज्ञानोपेतो जयशत्रुराजस्य विजयाराज्ञ्याः कुक्षौ वैशाखशुक्लत्रयोदश्यामवततार । ततो माता चतुर्दशशुभस्वप्नानीक्षाञ्चक्रे । तत्फलानि नृपतिः स्वप्नपाठकाश्च यथावदूचिरे, तेन प्रमुदिता नृपतिपूरिताऽशेषविशेषदोहदा सा राज्ञी माघसिताऽष्टम्यां भगवन्तमजितनाथमजीजनत्, तदा षट्पञ्चाशद्दिक्कुमार्यः सौतिकं कर्म विदधिरे, पुनश्चतुष्षष्टीन्द्रादिदेवदेवीगणास्तत्राऽऽगत्य भगवन्तं सुमेरुगिरिशिखरोपरि समानीय जन्माभिषेकादिमहामहं वितेनिरे । ततो नरपतिः पुत्रजन्म निशम्य महामहं विदधौ । यौवने च वयसि राजा बह्वीभिर्भूपकन्याभीरूपवतीभिरेनं परिणायितवान् । ताभिः सह सांसारिकं सुखं चिरमुपभुज्य सौवर्णी तनुच्छविं दधानो गजलाञ्छनः, सार्धचतुःशतधनुष्प्रमितशरीरः संसारमेनमसारं मन्वानो लोकान्तिकदेवैः प्रतिबोधित आब्दिकं दानं चरमजिनवद्वितीर्य माघकृष्णनवम्यां सहस्रराजपुरुषैः सह भगवानजितनाथः प्रव्रज्य, दुष्कराणि तपांसि कुर्वन् पौषसितैकादश्यां कैवल्यज्ञानमनन्तदर्शनञ्चाऽभ्यगच्छत् । इत्थं धर्मं प्रवर्त्तयतस्तस्य सिंहसेनादिसाधवः १०००००, फल्गुप्रभृतिसाध्व्यः ३३००००, सुश्रावकाः २६८०००, श्राविकाश्च ५४५०००, क्रमशो द्वासप्ततिलक्षपूर्वमायुः परिपूर्य सम्मेतशिखरे चैत्रसितपञ्चम्यां भगवानेष मोक्षमगात् । एतदीयशासनं त्रिंशल्लक्षकोटिसागरोपमं यावच्चचाल ।

३ श्रावस्त्यां नगर्यां जितारिनृपस्य सेनाराज्ञी निजकुक्षौ फाल्गुनकृष्णाऽष्टम्यां नवमग्रैवेयकाच्च्युत्वाऽवतीर्णं चतुर्दशमङ्गलमयस्वप्नसूचितं परिपूर्णदोहदा सती माघसितचतुर्दश्यां मध्यनिशायां भगवन्तं सम्भवनाथं प्रसुषुवे । असौ चतुःशतधनुष्प्रमाणः,

सौवर्णीच्छविकस्तुरगाङ्कः, कृतपाणिग्रहोऽनुभूतराज्यसुखः, सहसि पूर्णिमायां सहस्रनृपालगणैः सह दीक्षां ललौ । घोरं तपस्यतश्चाऽस्य कार्त्तिककृष्णपञ्चम्यामनन्तकेवलज्ञानदर्शने समुत्पेदाते । चार्वादिसाधवः २०००००, श्यामादय आर्यिकाः ३३६०००, श्रावकाः २९३०००, श्राविकाश्च ६३६०००, इत्थमेष षष्टिलक्षपूर्वमायुः सम्पूर्य प्रान्ते सम्मेतशिखरे चैत्रसितपञ्चम्यां मोक्षमभजत । अमुष्य शासनं दशलक्षकोटिसागरोपमं यावत्प्रावृतत् ।

४ श्रीमदभिनन्दनजिनपतिर्जयन्तविमानाच्च्युतः सन् वैशाखस्य सितपक्षीयचतुर्थ्यामयोध्यानगरे सम्बरराजस्य सिद्धार्थाया राज्ञ्याः कुक्षाववतीर्णः क्रमशो माघशुक्लद्वितीयायां प्रादुरासीत् । सार्धशतत्रयधनुष्प्रमाणगात्रः, स्वर्णवर्णः, कपिलाञ्छनः, कृतदारराज्यसुखस्तपःशुक्लद्वादश्यां सहस्रनरपालैः सह प्रव्रजितः । पौषकृष्णचतुर्दश्यामनन्तकेवलज्ञानदर्शने संलेभे । अमुष्य भगवतो वज्रनाभादिसाधवः ३०००००, अजितादिसाध्व्यः ६३००००, श्रावकाः २८८०००, श्राविकाश्च ५२७०००, इत्थं परिवारसम्पत्तिरजायत । सर्वं पञ्चाशल्लक्षपूर्वमायुरापूर्य वैशाखसिताऽष्टम्यां सम्मेतशिखरोपरि खल्वेष मोक्षमापेदे । शासनञ्चैतस्य नवलक्षकोटिसागरोपमकालिकमिहाऽतिष्ठत् ।

५ सुमतिनाथो भगवाञ्जयन्तविमानतश्च्युतः श्रावणशुक्लद्वितीयायामयोध्याधिपते राज्ञो मेघरथस्य मङ्गलाराज्ञ्या गर्भेऽवातरत्, लेभे च वैशाखशुक्लाऽष्टम्यां जनिः । आसीदेष त्रिशतधनुष्प्रमाणः, कनकवर्णः, क्रौञ्चाङ्कः, समुपभुक्तदारराज्यसुखो वैशाखसितनवम्यां सहस्रमहीशैः सह दीक्षां लात्वा, तत्वा च घोरतरतपांसि चैत्रकृष्णैकादश्यां कैवल्यभागजायत । एतस्य चरमप्रमुखाः साधवः ३२००००, काश्यपाप्रभृतय आर्यिकाः ५३००००, श्रावकाः २८१०००, श्राविकाश्च ५१६०००, इत्थं सङ्घस्थापनं विधाय चत्वारिंशल्लक्षपूर्वमायुः परिपूर्य, चैत्रशुक्लनवम्यां सम्मेतशिखरोपरि मोक्षमीयिवान् । नवतिसहस्रकोटिसागरोपमकालिकमेतच्छासनमस्थात् ।

६ श्रीपद्मप्रभस्तीर्थकृन्नवमग्रैवेयकाच्च्युतस्तपःकृष्णपक्षीयषष्ठ्यां कौशाम्बीनगरीयश्रीधरराजस्य सुसीमाराज्ञ्या गर्भेऽवतीर्य कार्त्तिककृष्णद्वादश्यां जन्माऽऽप्नोत् । असौ सार्धशतद्वयधनुर्मात्रो, रक्तवर्णः, पद्माङ्कः, सुन्दराकृतिकः कृतदारग्रहो राज्यसुखमुपभुज्य कार्त्तिककृष्णत्रयोदश्यां सहस्रनरपतिभिः सह दीक्षाञ्जग्राह । चैत्रपूर्णिमायां केवलज्ञानमस्योत्पेदे । प्रद्योतनादिमुनयः ३३००००, रत्यादय आर्यिकाः ४२००००, श्रावकाः २७६०००, श्राविकाः ५०५०००, प्रान्ते त्रिंशल्लक्षपूर्वमायुरुपभुज्य सह कृष्णैकादश्यां सम्मेतशिखरोपरि मोक्षमशिश्रियत । नवसहस्रकोटिसागरोपमकालिकीं स्थितिमापदेतस्य शासनम् ।

७ सुपार्श्वनाथविभुर्मध्यमग्रैवेयकाच्च्युत्वा भाद्रकृष्णाऽष्टम्यां वाराणसीनगरीयप्रतिष्ठितराजस्य पृथ्वीराज्ञ्याः कुक्षाववतीर्य ज्येष्ठशुक्लद्वादश्यामाविरभूत् । बभूवांश्चायं शतद्वयधनुष्प्रमाणः, स्वस्तिकलाञ्छनः, स्वर्णवर्णः, कृतदारराज्योपभोगः । आत्तवानसौ ज्येष्ठशुक्लत्रयोदश्यां सहस्रपुरुषैः सार्धं दीक्षाम् । आप्तवांस्ततस्तपस्याऽसितषष्ठ्यां केवलज्ञानमनन्तदर्शनञ्च । विदर्भादिमुनयः ३०००००, सोमादय आर्याः ४३००००, श्रावकाः २५७०००, श्राविकाश्च ४९३०००, इत्थं कृतपरिवारो भगवान् विंशतिलक्षपूर्वमायुः पूर्णीकृत्य फाल्गुनाऽसितसप्तम्यां संमेतशिखरोपरि मोक्षञ्जगाम । नवशतकोटिसागरोपमकालपर्यन्तमेतच्छासनमासीत् ।

८ श्रीचन्द्रप्रभजिनो विजयविमानतश्च्युतश्चैत्रकृष्णपञ्चम्यां चन्द्रपुरीनगर्यां महासेनराजस्य लक्ष्मणाराज्ञ्या गर्भेऽवतीर्य पौषकृष्णद्वादश्यामजायत । एष सार्धशतधनुर्देहः, शुभ्रवर्णः, शशभृदङ्कः कृतपाणिग्रहो राज्यं भुक्त्वा, पौषकृष्णत्रयोदश्यां सहस्रपुरुषैः सत्रा प्रव्रज्य फाल्गुनकृष्णसप्तम्यां केवलज्ञानमलब्ध । दिन्नप्रमुखा मुनयः २५००००, सुमनादिसाध्व्यः ३८००००, श्रावकाः २५००००, श्राविकाश्च ४७६०००, दशलक्षपूर्वमायुः परिपूर्य भाद्रकृष्णसप्तम्यां सम्मेतशिखरतीर्थोपरि मोक्षमगात् । नवतिकोटिसागरोपमं यावदेतच्छासनमिहाऽस्थात् ।

९ सुविधिनाथ( पुष्पदन्त )तीर्थप आनतविमानाच्च्युत्वा फाल्गुनकृष्णनवम्यां काकन्दीनगरे सुग्रीवनृपस्य रामाराज्ञ्या गर्भेऽवतीर्य सहःकृष्णपञ्चम्यामुत्पेदे । शरीरमस्य शतधनुष्प्रमाणं, सितवर्णाभो मकरचिह्नः कृतोद्वाहो राज्यमुपभुज्य सहस्रमनुजैः समं मार्गकृष्णषष्ठ्यामात्तदीक्षः, कार्त्तिकसिततृतीयायां कैवल्यमाप्नोत् । वराहप्रभृतयः साधवः २०००००, वारुण्यादिसाध्व्यः १२००००, श्राद्धाः २२९०००, श्रमणोपासिकाश्च ४७१०००, सर्वमायुर्द्विलक्षपूर्वमापूर्य भाद्रशुक्लनवम्यां सम्मेतशिखरोपरि सिद्धोऽभवत् । नवकोटिसागरोपमं शासनमेतस्य प्रवृत्तमासीत् ।

सुविधिनाथे सिद्धिमुपगते सत्यल्पकालेनैव चतुर्धात्मकः सङ्घः सहसत्वाऽऽगमैः समुच्छिन्नतामापत् । तदवसरे राजमहाराजप्रमुखसमस्तजनतासु मामद्यमाना जैनब्राह्मणा भगवदादिनाथजिनोपदिष्टाऽऽनुपूर्व्या भरतचक्रवर्त्तिरचितजगत्कल्याणकरान् संसारदर्शन–स्थापनपरामर्शन–तत्त्वबोध–विद्याप्रबोधाऽऽख्यचतुर आर्यवेदानपि स्वार्थसिप्रापयिषया जगद्वञ्चनाय परिवर्त्तयितुं लग्नाः । हन्त ! ये निःस्वार्थधिया जगन्मङ्गलकारिणः पन्थानः सरला आसंस्तेऽपि करालकालमहिम्ना स्वार्थसाधनमात्रपटिष्ठैर्विप्राभासैर्लोकवञ्चकतां निन्यिरे । तदन्येऽपि कियन्तो नवनवा धर्मग्रन्था निर्ममिरे, तेषु स्थले स्थले गोभूमिहिरण्यशय्याऽऽसनादिदानदापनविधानं स्वर्गमनसोपानमूचिरे । तावताऽप्यतुष्य-

न्तस्ते येऽत्र विप्राय गोस्वर्णभूमिशय्याऽऽसनभोजनपानादिकं वितरन्ति, तेषां पितरस्तत्सर्वं स्वर्गे प्राप्नुवन्ति, तृप्तास्ते पितरः स्वस्वपुत्रादिकमाशिषा वर्द्धयन्ति । यतो हि ब्राह्मणा एव भूदेवाः स्रष्टारः सन्तीत्यादिकल्पितग्रन्थैः सकलञ्जगत्ते मोहयामासुः । क्रमशश्चैष आर्हतो धर्मो भगवतो धर्मनाथस्य शासनावधि कादाचित्कमुदयं लभमानो बाहुल्येन कार्श्यमेवाऽभ्यगच्छत् । एतत्सप्तजिनान्तरे विप्राः सर्वतः प्राबल्यं नीताः स्वार्थपारवश्येन तानेव चतुर आर्यवेदान् ऋग्यजुःसामाऽथर्वेति नामान्तरेण लोके प्रख्यापयामासुः । प्रतिसमयमेतेऽपि परिवर्त्तनमापुः । यदा च यः प्राधान्यमगात् तदा तेन स्वकपोलकल्पितश्रुतिभिरेते प्रवर्द्धिताः, बभाषिरे चैषु वेदेष्वपौरुषेयत्वमेतदमन्तारो नास्तिका इति च बहुशो लिलिखुः । तेषु श्रुतयो विशेषतो हिंसाप्रधाना यज्ञार्थे निर्ममिरे । याज्ञवल्क्यपिप्पलाद्यास्तु गजतुरगमेधादेरपि यजनयाजनप्रचारं बाहुल्येन चक्रुः । ततो मुनिसुव्रतनाथस्य शासनान्तरे वसुराजः पर्वतश्च महाकालव्यन्तरसाहाय्येन हिंसामयं यज्ञं यावदवरीवृध्येताम्, तावतामुल्लेखः कर्त्तुमपि नैव शक्यते । एतदिदानीन्तना ऐतिहासिका यथावन्निश्चिक्यिरे–यन्महावीरबुद्धाभ्यां प्रागेतस्मिन् भारते यज्ञीयहिंसनेन रुधिरतटिन्यो वहन्ति स्म । एतावेव महान्तौ सर्वान् धर्म्मगिरा प्रतिबोध्य तदवद्यं निवर्त्य जगति शान्तिमतिष्ठिपताम् ।

१० भगवाञ्छ्रीशीतलनाथोऽच्युतदेवलोकाच्च्युत्वा राधकृष्णषष्ठ्यां तिथ्यां भद्दिलपुरवरे राज्ञो दृढरथस्य नन्दाराज्ञ्या गर्भेऽवतीर्य, तपःकृष्णद्वादश्यां जातो नवतिधनुष्प्रमाणः, सुवर्णवर्णः, श्रीवत्साङ्कः कृतदारग्रहो भुक्तराज्यो माघकृष्णद्वादश्यां सहस्रपुरुषैः साकं दीक्षितो घोरं तपस्यन् पौषकृष्णचतुर्दश्यां कैवल्यज्ञानमासादितवान् । अमुष्य नन्दप्रमुखाः श्रमणाः १०००००, सुयशाप्रभृतयः साध्व्यः १००००६, श्रावकाः २८९०००, श्राविकाश्च ४५८०००, लक्षपूर्वमायुः सम्पूर्य माघकृष्णद्वितीयायां सम्मेतशिखरोपरि मोक्षमापत् । शासनश्चैकं सागरोपममवर्तत ।

११ श्रीश्रेयांसनाथो भगवानच्युतदेवलोकतश्च्युतो ज्येष्ठकृष्णषष्ठ्यां सिंहपुरीनगरीयविष्णुराजस्य विष्णुदेवीराज्ञ्याः कुक्षाववतीर्णः फाल्गुनकृष्णद्वादश्यामभ्यजायत । अयमशीतिधनुष्प्रमाणः, स्वर्णवर्णः, खड्गिलाञ्छनः कृतोद्वाहो भुक्त्वा च राज्यं तपस्यकृष्णत्रयोदश्यां सहस्रपुरुषैः सहाऽऽत्तदीक्षः, कुर्वन्नतिघोरं तपस्तपःकृष्णतृतीयायां कैवल्यमाससाद । कच्छपादिमुनयः ८४०००, धारणीप्रमुखसाध्व्यः १०३०००, श्रावकाः २७९०००, श्राविकाश्च ४४८०००, चतुरशीतिलक्षवर्षमायुः परिपूर्य नभःकृष्णतृतीयायां सम्मेतशिखरोपरि सिद्धो जज्ञे । चतुष्पञ्चाशत्सागरोपमं यावदेतच्छासनमतिष्ठत् ।

१२ श्रीवासुपूज्यजिनः प्राणतदेवलोकाच्च्युतः ज्येष्ठशुक्लनवम्यां चम्पापुरीनगरा-

धिपतिवसुपूज्यक्षितिपतेर्जयादेवीराज्ञ्या गर्भेऽवतीर्य तपस्याऽसितचतुर्दश्यां जातः, सप्ततिधनुष्प्रमाणो रक्तवर्णो महिषलाञ्छनो गृही राज्यभोगी च भूत्वा, फाल्गुनपूर्णिमायां पुरुषाणां षट्शत्या सत्रा दीक्षितो भूत्वा तपष्कुर्वन् माघशुक्लद्वितीयायां कैवल्यज्ञानमाप्तवान् । अमुष्य सुभूमादिमुनयः ७२०००, धरण्यादय आर्याः १०००००, श्रमणोपासकाः २१५०००, श्रमणोपासिकाश्च ४३६०००, द्वासप्ततिलक्षवर्षायुरुपभुज्य शुचिशुक्लचतुर्दश्यां चम्पापुर्यामेव निर्वृतिं लेभे । अस्य शासनं त्रिंशत्सागरोपमं यावदतिष्ठत् ।

१३ श्रीविमलनाथप्रभुः सहस्रारदेवलोकतश्च्युत्वा वैशाखशुक्लद्वादश्यां काम्पिल्यपुरे कृतवर्मणो राज्ञः श्यामाराज्ञ्याः कुक्षाववतीर्य माघशुक्लतृतीयायां प्रादुर्भूय षष्टिधनुष्प्रमाणः, सुवर्णवर्णो, वराहलाञ्छनः कृतदारराज्योपभोगस्तपःशुक्लचतुर्थ्यां सहस्रपुरुषैः सार्धं दीक्षां गृहीत्वा तपस्यां कुर्वन् पौषसितषष्ठ्यां केवलज्ञानमलब्ध । अमुष्य मन्दिरप्रमुखा मुनयः ६८०००, धरादिका आर्यिकाः १००८००, श्रावकाः २०८०००, श्राविकाश्च ४२४०००, प्रान्ते षष्टिलक्षवर्षायुष्क आषाढकृष्णसप्तम्यां सम्मेतशिखरोपरि निर्वाणत्वमियाय । नवसागरोपमकालावधिशासनमत्राऽवर्तत ।

१४ अनन्तनाथतीर्थपः श्रावणकृष्णसप्तम्यां प्राणतदेवलोकतश्च्युत्वाऽयोध्याधिपतिर्सिंहसेनराजस्य सुयशाराज्ञ्याः कुक्षाववतीर्य माधवाऽसितत्रयोदश्यां जनिर्लेभे । पञ्चाशद्धनुष्प्रमाणः, स्वर्णाभः, श्येनलाञ्छनः समुपभुक्तदारराज्यो वैशाखकृष्णचतुर्दश्यां सहस्रपुरुषैः सहाऽऽत्तदीक्षस्तपस्तीव्रं विधाय राधाऽसितचतुर्दश्यामधिगतकैवल्यो बभूवान् । यशस्विप्रमुखाः साधवः ६६०००, पद्माद्याः साध्व्यः ८२०००, श्रावकाः २०६०००, श्राविकाश्च ४१४०००, त्रिंशलक्षवर्षमायुः परिपूर्य मधुसितपञ्चम्यां सम्मेतशिखरोपरि निर्वृतोऽभवत् । चतुःसागरोपमं शासनमस्थादमुष्य भगवतः ।

१५ श्रीधर्मनाथप्रभुर्विजयविमानतश्च्युत्वा वैशाखसितसप्तम्यां रत्नपुरीयभानुक्षितिधवस्य सुव्रताराज्ञ्याः कुक्षाववतीर्य माघशुक्लतृतीयायां जनुर्लेभे । असौ पञ्चचत्वारिंशद्धनुष्प्रमाणः, स्वर्णाभो वज्राङ्कः सम्भुक्तदारराज्यस्तपःसितत्रयोदश्यां पुरुषाणां सहस्रेण सह दीक्षां लात्वा, कृत्वा च तपस्तीव्रं पौष्यां पूर्णिमायां कैवल्यज्ञानमीयिवान् । अरिष्टादयो मुनयः ६४०००, आर्यशिवाद्या आर्यिकाः ६२४००, श्रावकाः २०४०००, श्राविकाश्च ४१३०००, इत्थं दशलक्षवर्षायुष्कः सम्मेतशिखरोपरि ज्येष्ठशुक्लपञ्चम्यां सिद्धोऽभवत् । त्रिसागरोपमं यावदभूदेतच्छासनम् ।

१६ श्रीशान्तिनाथो भगवान् सर्वार्थसिद्धिविमानाच्च्युत्वा भाद्रकृष्णसप्तम्यां हस्तिनापुरे ( गजपुरे ) विश्वसेननरपतेरचिरादेवीराज्ञ्या गर्भेऽवतीर्य ज्येष्ठकृष्णत्रयोदश्यां

जातश्चत्वारिंशद्धनुष्प्रमाणः, सौवर्णीकान्ति, दधन्मृगलाञ्छनः कृतोद्वाहो राज्ये विष्ठँश्च-क्रवर्त्तीभूय ज्येष्ठकृष्णचतुर्दश्यां सहस्रपुरुषैः सत्रा दीक्षामादाय, तपस्यन् पौषसितनवम्यां केवलज्ञानमलभत । चक्रायुधप्रमुखा मुनयः ६२०००, शचीप्रमुखा आर्याः ६१६००, श्रावकाः १६००००, श्राविकाश्च ३९३०००, इयान् सम्प्रदायः । लक्षवर्षायुषः पूर्वौ ज्येष्ठकृष्णत्रयोदश्यां सम्मेतशिखरनगोपरि मोक्षमापत् । अविच्छिन्नं शासनमेतस्याऽर्धपल्योपमं चचाल ।

१७ श्रीकुन्थुनाथतीर्थकर्त्ता सर्वार्थसिद्धिविमानतश्च्युतः श्रावणकृष्णनवम्यां हस्तिनापुरे शूरराजस्य श्रीदेवीराज्या गर्भेऽवतीर्य वैशाखकृष्णचतुर्दश्यां जज्ञे । आसीदेष पञ्चत्रिंशद्धनुर्मात्रः स्वर्णवर्णोऽजलाञ्छनः कमनीयगात्रः परिणीतः परिभुक्तराज्यचक्रवर्त्तिपदश्चैत्रकृष्णपञ्चम्यां सहस्रपुरुषैः सह दीक्षां लात्वा, विहिताऽनेककठोरतरतपःक्षीणकर्मा चैत्रशुक्लतृतीयायामुत्पन्नकेवलज्ञानेन दिदीपे । साम्बादिमुनयः ६००००, दामनीप्रमुखा आर्याः ६०६००, श्रावकाः १७६०००, श्राविकाश्च ३८१०००, पञ्चनवतिसहस्रवर्षायुष्को वैशाखकृष्णप्रतिपदि सम्मेतशिखरोपरि शाश्वतं सुखं लेभे । पल्योपमीयतुरीयांशं यावदवर्त्तिष्ट शासनमेतस्य ।

१८ श्रीअरनाथो भगवान् सर्वार्थसिद्धिविमानतश्च्युतस्तपस्यशुक्लद्वितीयायां हस्तिनापुरे सुदर्शनक्षितिपतेः देवीराज्या गर्भेऽवतीर्णो मार्गशुक्लदशम्यां जन्म लेभे । बभूवाऽयं त्रिंशद्धनुष्प्रमाणः, कनकवर्णो, नन्दावर्त्तलाञ्छनः कृतोद्वाहः सम्भुक्तराज्यचक्रवर्त्तिपदः सहःशुक्लैकादश्यां सहस्रपुरुषैः सार्धमात्तदीक्षः, कार्त्तिकशुक्लद्वादश्यां कैवल्यभागजायत । कुम्भादिमुनयः ५००००, रक्षिताप्रभृतय आर्याः ६००००, श्रावकाः १८४०००, श्राविकाश्च ३७२०००, चतुरशीतिसहस्रवर्षायुष्कः सम्मेतशिखरोपरि सहःशुक्लदशम्यां मोक्षमगच्छत् । अचालीच्चैतच्छासनं वर्षकोटिसहस्रं यावत् ।

१९ श्रीमल्लिनाथजिनेशो जयन्तविमानाच्च्युतिं लब्ध्वा फाल्गुनसितचतुर्थ्यां मिथिलायां कुम्भमहीपस्य प्रभावतीराज्ञीकुक्षाववतीर्य मार्गशीर्षसितैकादश्यामजनिष्ट । पञ्चविंशतिधनुष्प्रमाणो, नीलवर्णः, कलशलाञ्छनः कौमारं वहन्नेव सहःशुक्लैकादश्यां त्रिशतपुरुषैः स्त्रीभिश्च तावतीभिः सह दीक्षां गृहीत्वा तद्रजन्यामेव कैवल्यज्ञानमाप्नोत् । अभीक्षकादिमुनयः ४००००, बिन्दुमतीप्रमुखा आर्याः ५५०००, श्रावकाः १८३०००, श्राविकाश्च ३७००००, पञ्चपञ्चाशत्सहस्राऽऽब्दिकमायुः पूरयित्वा फाल्गुनशुक्लद्वादश्यां सम्मेतशिखरोपरि मुक्तिश्रियम्भेजे । शासनं पञ्चचत्वारिंशत्सहस्राब्दीं प्रावर्त्तताऽविच्छिन्नत्वेन ।

२० श्रीमुनिसुव्रततीर्थकर्त्ताऽपराजितविमानतश्च्युतः श्रावणपूर्णिमायां राजगृह-

नगरे सुमित्रक्षितीशस्य पद्मावत्या राज्या गर्भेऽवततार । क्रमशः शुक्लाऽसिताऽष्टम्यामजनि । शरीरममुष्य विंशतिधनुष्प्रमाणम्, श्यामवर्णः, कमललाञ्छनः, सुन्दराकारः, कृतोद्वाहः, समुपभुक्तराज्यः, फाल्गुनसितद्वादश्यां सहस्रपुरुषैः सहाऽऽत्तदीक्षः, तपस्यन् फाल्गुनाऽसितद्वादश्यां कैवल्यश्रियं भेजे । मल्लप्रमुखा मुनयः ३००००, पुष्पमतीप्रभृतय आर्याः ५००००, श्रावकाः १७२०००, श्राविकाश्च ३५००००, त्रिंशत्सहस्राऽब्दायुः सम्पूर्य ज्येष्ठकृष्णनवम्यां सम्मेतशिखरनगोपरि निर्वाणमापत् । षष्टिलक्षवर्षाणि शासनं तदीयं चचाल ।

२१ श्रीनमिनाथतीर्थपतिः प्राणतदेवलोकाच्च्युत्वाऽऽश्विनपूर्णिमायां मिथिलानगर्यां विजयराजस्य विप्राराज्या गर्भेऽवतीर्य श्रावणकृष्णाऽष्टम्यामजनिष्ट । पञ्चदशधनुष्प्रमाणकः, कमलाङ्कः, कृतोद्वाहो भुक्तराज्य आषाढकृष्णनवम्यां सहस्रपुरुषैः सह दीक्षामादाय मार्गशीर्षसितैकादश्यां केवलज्ञानमनन्तदर्शनञ्च लेभे । शुभादिमुनयः २००००, अनिलादिसाध्व्यः ४१०००, श्रावकाः १७००००, श्राविकाश्च ३४८०००, दशसहस्रवर्षायुः सम्पूर्य वैशाखकृष्णदशम्यां सम्मेतशिखरतीर्थोपरि मोक्षमलब्ध । पञ्चलक्षाऽब्दीं यावदचालीच्छासनमेतस्य भगवतः ।

इति श्रीवीरजिनशासनशृङ्गारहार–सुविहितसूरिपुरन्दरनन्दनवनाऽऽरामविहारि–शिथिलाऽऽचारप्रचारतमोहारि—जैनाचार्य—भट्टारक-श्रीमद्विजयराजेन्द्रसूरीश्वर–सङ्कलितायां 'श्रीकल्पसूत्रार्थप्रबोधिनी' नाम्न्यां टीकायामष्टमं व्याख्यानं समाप्तम् ।

# अथ नवमं व्याख्यानं प्रारभ्यते ।

११२ श्रीवीरविभोर्गणधरगच्छयोः संख्यानम्—

अथ भगवतो महावीरस्य ज्यायान् गणधर इन्द्रभूतिर्गौतमगोत्रीयोऽनगारः पञ्चशतसाधूनध्यापयन्नासीत् । अतस्तेषामेकतीर्थानामेक एव गच्छोऽभवत् । सति च वाचनाभेदे गच्छेषु भेदो जायते । वाचनाभेदस्तु केवल्युक्तवचांसि सूत्रादिरूपेण ग्रथ्नतां गणधराणां शब्दरचनाभेदाज्जातोऽस्ति । यतः शब्दानामनेकत्वादेको गणधरो येन शब्देन जग्र-

न्थ, द्वितीयस्तदेव शब्दान्तरेणाऽग्रथनात्। अत एव वाचनासु वाङ्मात्र-एव भेदो दरीदृश्यते, बोधस्त्वेक एवास्ति। द्वितीयो भ्राताग्निभूतिरनगारो गौतमगोत्रः श्रमणानां पञ्चशतीं वाचयति। कनिष्ठभ्राता वायुभूतिरपि गौतमगोत्रः पञ्चशतसाधून् वाचयति, एते त्रयोऽपि सांसारिकसोदराः सन्ति। तुरीयो गणधर आर्यव्यक्तनामा स्थविरो भारद्वाजगोत्रः पञ्चशतानि श्रमणान् वाचयति। पञ्चमः स्थविर आर्यसुधर्माग्निवैश्यायनगोत्रः पञ्चशतसाधुभ्यो वाचनां ददाति। षष्ठः स्थविरो मण्डितपुत्रो वसिष्ठगोत्रोद्भूतः श्रमणानां सार्धशतत्रयीमध्यापयति। सप्तमः स्थविरो मौर्यपुत्रः काश्यपगोत्रः सार्धत्रिशतश्रमणानां वाचकः। अष्टमः स्थविरोऽकम्पितो गौतमगोत्रो नवमस्त्वचलभ्राता हारितायनगोत्रोऽस्ति, इमावपि शतत्रयमुनिवाचकौ स्तः। एतयोर्द्वयोर्वाचनैक्यादेक एव गच्छो गण्यते, मातुरैक्येऽपि पितृभेदाद् गोत्रभेदं तौ लेभाते। तदा तज्जातौ मृते भर्त्तरि पत्यन्तरकरणस्य व्यवहृतत्वात्। दशमैकादशस्थविरौ मेतार्य-प्रभासौ कौडिन्यगोत्रौ भ्रातरौ स्तः, साधूनां त्रीणि त्रीणि शतानि वाचयतः। एतयोर्वाचनाया एकत्वादेक एव गणो मन्यते। इत्थं श्रीवीरविभोर्नवगच्छ्यामेकादश गणधरा आसन्। एकादशाप्येते गार्हस्थ्याऽधीतचतुर्दशविद्या इन्द्रभूत्यादयो गणधरा आचाराङ्गादि-दृष्टिवादान्त-द्वादशाङ्गीप्रणेतारश्चतुर्दशपूर्वधर्त्तारो राजगृहे नगरे मासिकपादपोपगमनाऽनशनेन कालं कृतवन्तः। तेषु नवगणधरा भगवति महावीरे जीवत्येव सिद्धिमापेदिरे। इन्द्रभूति-सुधर्माणौ भगवतः पश्चात् सिद्धिं गतौ। इतरगणधरीयशिष्यपारम्पर्यमपि भगवति सत्येव कालमकृत, विच्छिन्नतामापच्च तेषां गच्छः। साम्प्रतं सर्वे साधवः सुधर्मगच्छीया एव सन्ति। काश्यपगोत्रस्य श्रीवीरजिनस्य पट्टे ज्यायस इन्द्रभूतेः केवलित्वादयमेव पञ्चमो गणधरोऽग्निवैश्यायनगोत्र आर्यसुधर्मा निषसाद।

| गणधराऽभिधानानि. | जन्मनगराणि. | नक्षत्राणि | जनकाः | मातरः | गृहवासः | छद्मस्थपर्यायः | केवलज्ञानपर्यायः | सर्वायुर्वर्षाणि. |
|---|---|---|---|---|---|---|---|---|
| इन्द्रभूतिः | गुर्वरग्रामः | ज्येष्ठा | वसुभूतिः | पृथिवी | ५० | ३० | १२ | ९२ |
| अग्निभूतिः | ,, | कृत्तिका | ,, | ,, | ४६ | १२ | १६ | ७४ |
| वायुभूतिः | ,, | स्वाती | ,, | ,, | ४२ | १० | १८ | ७० |
| व्यक्तः | कोल्लाक-संनिवेशः | श्रवणं | धनमित्रः | वारुणी | ५० | १२ | १८ | ८० |
| सुधर्मा | ,, | हस्तोत्तरम् | धम्मिलः | भद्दिला | ५० | ४२ | ८ | १०० |
| मंडितः | मोराकसं० | मघा | धनदेवः | विजया | ५३ | १४ | १६ | ८३ |
| मौर्यपुत्रः | ,, | रोहिणी | मौर्यः | ,, | ६५ | १४ | १६ | ९५ |
| अकंपितः | मिथिला | उत्तराषाढा | देवः | जयन्ती | ४८ | ९ | २१ | ७८ |
| अचलभ्राता | कोशला | मृगशिरः | वसुः | नन्दा | ४६ | १२ | १४ | ७२ |
| मेतार्यः | तुंगिकसं० (वत्सभूमि) | अश्विनी | दत्तः | वरुणदेवा | ३६ | १० | १६ | ६२ |
| प्रभासः | राजगृहम् | पुष्यः | बलः | अतिभद्रा | १६ | ८ | १६ | ४० |

११४ श्रीजम्बूस्वामिनः कथा—

पञ्चमगणधारि—श्रीसुधर्मस्वामिपट्टं चरमकेवली श्रीजम्बूस्वामी समारुरोह । अयं हि मगधदेशीयप्रधानराजधान्यां राजगृहनगर्यां राजमान्यस्य काश्यपगोत्रीयश्रीमतः श्रेष्ठिन ऋषभदत्तस्य शीलालङ्कारमण्डिताया धर्मपत्न्या धारिण्याः कुक्षेर्जनिमीयिवान् । आसीच्चाऽऽजन्मब्रह्मचर्यव्रतपाली कृतोद्वाहोऽपि । किञ्च निजनवोढा अप्सरायमाणा अष्टाविमाः समुद्रश्री—पद्मश्री—पद्मसेना—कनकसेना—नभःसेना—कनकश्री—कनकवती—जयश्रियः, समुद्रप्रिय—समुद्रदत्त—सागरदत्त—कुबेरदत्त—कुबेरसेन—श्रमणदत्त—

वसुषेण–वसुपालिताभिधानष्टौ श्वशुरान्, पद्मावती–कनकमाला–विजयश्री–धनश्री–कनकवती–श्रीषेणा–वीरमती–जयसेना इत्यष्ट श्वश्रूश्च, प्रभवादिपञ्चशतचौरान्, निजमातापितरौ चानेकहेतुदृष्टान्तैर्वैराग्यमुत्पाद्य, सर्वैः सह षोडशवर्षीयानेव महामहेन श्रीसुधर्मस्वामिनः पार्श्वे दीक्षामग्रहीत्। ततो द्वादशाङ्गीमभ्यस्याऽऽचार्यपदभागध्यजायत। समवाप च घोरतरातिदुष्करतपोऽनुष्ठानेनैष कैवल्यज्ञानम्। व्यगमच्चैतस्य षोडशाब्दी गार्हस्थ्ये। गताश्च विंशत्यब्दा दीक्षापर्याये, चतुश्चत्वारिंशच्च हायनानि कैवल्यपर्याये। एवमशीतिवर्षायुष्कं सकलं परिपूर्य प्रभवस्वामिनं स्वपट्टे निवेश्य, वीरनिर्वाणतश्चतुष्षष्टितमे वर्षे जनन–मरणहापकं मोक्षमध्यगच्छत्। निर्वृते चाऽमुके १ मनःपर्यवज्ञानम्, २ परमावधिज्ञानम्, ३ केवलज्ञानम्, ४ पुलाकलब्धिः, ५ आहारकशरीरलब्धिः, ६ क्षपकश्रेणी, ७ उपशमश्रेणी, ८ जिनकल्पः, ९ यथाख्यात–परिहारविशुद्धि–सूक्ष्मसम्परायचारित्रत्रयी, १० सिद्धिगमनमिमानि दशवस्तून्यस्मिन् भरतक्षेत्रे व्यच्छिदन्। असौ जम्बूं मुक्तिमधिगत्य परस्मै नाऽदात्, प्यधाच्च सिद्धेर्द्वारम्, अत एवैतस्मिन् नैसर्गिकं कार्पण्यं निगदन्ति कवयः। अत्यद्भुतमेतत् यन्मुक्तिरप्येनं वृत्वाऽपरं कमपि नाऽवृणोत् सतीव। ईदृक्षः कोट्टपालोऽप्यन्यो नाऽभूत्, यत् पञ्चशतचौरानपि संयतानकरोत्।

११५ श्रीप्रभवस्वामिनः कथा—

जम्बूस्वामिनः पट्टे कात्यायनगोत्रीयः प्रभवस्वामी बभूव। स हि विन्ध्यनगासन्ने जयपुरपत्तनाधिपति–विन्ध्यमहीपतेः पुत्रौ प्रभव–प्रभुनामानौ जातौ। राजा केनापि हेतुना लघुपुत्राय राज्यमदात्। ततः कोपात्प्रभवो गृहान्निर्गत्य विन्ध्याचलीयदुर्गमस्थाने निवसँश्चौर्यादिना

---

१ अमुष्य मारगर्भितं विस्तृतं वैराग्यपूर्णं चरित्रं बुभुत्सुना श्रीहेमचन्द्राचार्यरचितं 'त्रिषष्टिशलाकापुरुषचरित्रं' 'सिरिजंबूचरियं' चाऽवलोकनीयम्।

परिजनान् पुष्णन्नासीत् । एकदा पञ्चशतपरिवारयुतो राजगृहनगरे जम्बूसदने लुण्टितु प्राविशत् । तदा जम्बूस्वामिना प्रतिबोधितः सहैव सपरिवारो दीक्षां ललौ । अपाठीच्च चतुर्दशपूर्वान् । स चैकदा 'कमाचार्य कुर्याम् ?' इति विमृशन् स्वगच्छे कमपि तद्योग्यमपश्यन् मतान्तरीयमेकं शय्यम्भवभट्टमुदीक्ष्य शिक्षितौ द्वौ वाचंयमौ तस्यौकसि प्रेषितवान् । तौ तत्र गत्वा 'अहो कष्टमहो कष्टं, तत्त्वं न ज्ञायते परम्' इति जगदतुः । साधूक्तिं निशम्य सकोपः शय्यम्भवस्तदैव खड्गपाणिस्तत्रागत्याऽसिं विलोलयन् गुरुमभाषत—रे ! अहं तत्त्वं न वेद्मि, कीदृशं तत्त्वमस्ति, तद्दर्शय ?, नोचेदमुनैवासिना शिरः कर्त्तिष्यामि । गुरुरभाषत—पश्य तत्त्वं. यत्र यजसे तत्र समिधामधस्ताच्छ्रीशान्तिनाथस्य मूर्त्तिरस्ति, सा कुरुते शान्तिं, ददाति चाभीष्टं शाश्वतं सुखम् । यजने तु कष्टमात्रं जायते, फलं किमपि नोत्पद्यते । इत्थं गौरवं वचः श्रुत्वा गृहमागत्य प्रतिमां निष्काश्य प्रतिबुबुधे । तदैवाऽन्तर्वत्नीमपि पत्नीं विहाय गुरोः पार्श्वे दीक्षां जग्राह । अयं प्रभवस्त्रिंशद्वर्षाणि गार्हस्थ्ये, चतुश्चत्वारिंशद्वर्षाणि व्रतपर्याये, एकादशवर्षाणि युगप्रधानपदे स्थित्वा, सर्वायुः पञ्चाशीतिवर्षाणि परिपूर्य श्रीवीरनिर्वाणतः पञ्चसप्ततितमे वर्षे निजपट्टे शय्यम्भवं संस्थाप्य देवलोकमगमत् ।

११६ श्रीशय्यम्भवसूरिकथा—

प्रभवस्वामिनः पट्टे शय्यम्भवसूरिर्वत्सगोत्र आसीत् । प्रव्रजितेऽमुष्मिन् गृहे मनकनामा पुत्रो जज्ञे । अथैकदा विद्याशालायां तमूचिरे शिशवः—रे ! स्वपितरमप्यजानन् किं ब्रूषे ?, तेन खिद्यमानः सदनमागत्य मातरमप्राक्षीत्—मम पिता कोऽप्यस्ति न वा ?, साऽवदत्—

१ निजाध्यापकान्तिकमेत्य तत्त्वे पृष्टे स एनं स्तूपाऽधस्ताज्जिनप्रतिमां दर्शयित्वा तदात्मकमेव तत्त्वमित्याचचक्षे । ततः प्रतिबुद्धः शय्यम्भवः प्रभवस्वामिसमीपमित्वा पारमेश्वरीं दीक्षां जग्राह, इत्यपि प्रत्यन्तरे दृश्यते ।

वत्स ! जनकं विना कोऽपि नोत्पद्यते, तवापि जनकः शय्यम्भवभट्टोऽस्ति । तेनोक्तम्–स कुत्रास्ति ?, मात्रोक्तम्—केनापि जैनमुनिना प्रलम्भितो जैनीं दीक्षामग्रहीत् । ततो मनकः पितरं गवेषयितुं गृहान्निर्गत्य शय्यम्भवसमलङ्कृतनगराद्बहिरायातः । तत्र स्थण्डिलार्थं व्रजन्तं तमपृच्छत्—शय्यम्भवसूरिः क्वास्ति ?, गुरुणोक्तम्—तेन ते किं प्रयोजनम् ?, तदाऽऽत्मवृत्तं सकलं निवेद्य सोऽवक्—अहमस्मि तत्पुत्रः । तन्निशम्य तमुपाश्रये गन्तुमादिशत् । सोऽपि तत्र गत्वा तस्थौ । तत आगतं गुरुं सोऽभ्यर्थयत—यन्मे दीक्षां देहि । गुरुणोक्तम्—चेदावयोर्जन्यजनकत्वं नो ब्रूयात् कस्याऽप्यग्रतस्तर्हि दीक्षां दद्याम्, इति गुरूक्तं स्वीकृतं मनकेन । ततस्तस्य दीक्षां दत्त्वा स्वल्पायुषं विदित्वा सिद्धान्तेभ्यः सारमुद्धृत्य ‘ दशवैकालिकसूत्रं ’ तमध्यापिपत् । मनकोऽपि षड्भिर्मासैस्तदध्यगीष्ट। षण्मासीं संयमं पालयित्वा स्वायुः क्षयेऽम्रियत । तच्छवं दृष्ट्वा समाजग्मुः श्रावकाः । तदा यशोभद्रप्रमुखान्तेवासिषु बहुषु निषण्णेषु देशनां ददद्पि पुत्रस्नेहादश्रूणि मुमोच । तदवलोकयन्तः कियन्तः शिष्याः पप्रच्छुः—प्रभो ! पुरा ते कियन्तः शिष्या मम्रुः, कदापि ते लोचनाभ्यामश्रूणि न पेतुरेकस्मिन्नल्पायुष्के शिष्ये मृते दृशस्ते कथमश्रूणि मुञ्चन्ति ?, तत्कारणं भाषस्व । गुरुराख्यत्—मोहात् । पुनस्ते पृष्टवन्तः—त्यक्तसंसारस्य भवत एतस्मिन् कीदृशो मोहः ?, गुरुरुवाच—स मे सांसारिकः सूनुरासीदतो मोह उदैत् । ततः शिष्या ऊचिरे–भगवन् ! प्रागेवैतत्कथं नाऽसूचि ?, गुरुः कथिते च भवन्तस्तेन वैयावृत्यादिकं न कारयेरन्, ततः स्वल्पायुषस्तस्य कोऽपि लाभो न स्यात्, अतो मया तद्गोपि। अथ तदर्थमुद्धृतं दशवैकालिकसूत्रं सिद्धान्तेषु क्षेप्तुमुद्यतं गुरुं शिष्याः प्रार्थयामासुः–एष ग्रन्थो लघुत्वादृजुमतिकानां स्वल्पायुषाञ्च साधु–साध्वीनामग्रे महोपकारी भवितेति पृथगेव स्थाप्यताम् । ततो गुरुस्तं तथैव मुमोच । अयमपि २८

वर्षाणि गार्हस्थ्ये, ११ वर्षाणि दीक्षायाम्, २३ वर्षाणि युगप्रधानपदे, एवं सर्वायुः ६२ वर्षाणि परिपाल्य, श्रीवीरविभोर्निर्वाणतोऽष्टनवतितमे वर्षे स्वासने यशोभद्रं निवेश्य कालं कृत्वा सुरलोकमगमत् ।

११७ श्रीभद्रबाहुस्वामिनः कथा—

शय्यम्भवसूरिपट्टे यशोभद्रसूरिस्तुङ्गियायनगोत्रीयो निषसाद । स च द्वाविंशतिवर्षाणि गृहवासे, चतुर्दशवर्षाणि दीक्षायाम्, पञ्चाशद्वर्षाणि युगप्रधानपदे चैवं सर्वायुः षडशीतिवर्षाणि परिपूर्य, स्वपट्टे सम्भूतिविजय–भद्रबाहुनामानौ शिष्यौ संस्थाप्य, श्रीवीरनिर्वाणतोऽष्टचत्वारिंशदधिकशताब्द्यां देवलोकमगमत् । माठरगोत्रीयः श्रीसम्भूतिविजयोऽपि गृहवासे ४२ वर्षाणि, दीक्षापर्याये ४० वर्षाणि, युगप्रधानपदे च ८ वर्षाणि स्थित्वा, सर्वायुः ९० वर्षाण्युपभुज्य वीरनिर्वाणतः षट्पञ्चाशदधिकशततमे वर्षे सुरलोकमगमत् । श्रीभद्रबाहोः कथा चैवम्—

प्रतिष्ठानपुरवासिनौ प्राचीनगोत्रीयौ द्वौ वराहमिहिर–भद्रबाहुनामानौ सोदरौ ब्राह्मणौ श्रीयशोभद्रसूरिमुखाद्देशनां श्रुत्वा तत्पार्श्वे दीक्षां लात्वा चतुर्दशपूर्वानध्यैषाताम् । गुरवो विनयादिगुणयोगाद् भद्रबाहुमाचार्यमकार्षुः । वराहमिहिरमविनीतत्वात्तथैव मुमुचुः । वराहमिहिरो गुरौ द्वेषं वहन् वेषं परित्यज्य 'वाराहीसंहिता' प्रमुखज्योतिःशास्त्रीयाऽनेकान् ग्रन्थान् निर्माय नैमित्तिको भवँल्लोकेषु स्वजीविकां प्रथयामास । 'भोः! त्वया कस्य पार्श्वे किलेदृशी विद्या लेभे?' इति लोकैः पृष्टः स तानेवं वक्ति स्म—अहमेकदा नगरद्वारि शिलोपरि सिंहलग्नकुण्डलीममण्डयम्, तदलुप्त्वैव गृहमागाम् । निशि शयनावसरे तदभञ्जनं स्मृत्वा लग्नभक्त्या च तत्र गत्वा कुण्डलिकास्थितं सिंहमपश्यम् । तथाप्यबिभ्यद्धस्तक्षेपेण तां विलुप्तवाँस्तेन सिंहलग्नाधिपतिः प्रसद्य, प्रत्यक्षीभूय वरं वृणीष्व, इति मामवादीत् । ततोऽहं खेटानां सञ्चारदर्शनं वव्रे । तदनु स निजमण्डलं नीत्वा सकलखग–सञ्चारं मामदर्शयत्, सकलां

च ज्योतिर्विद्यामदात् । अतोऽहं त्रैकालिकीं वार्त्तां वेद्मि । तच्छ्रुत्वा सर्वे लोकास्तं सच्चक्रुः, इत्थं सर्वेषां मनोगतं जल्पन्नृपादिकं तोषयन्नासीत् । तावत्तत्र भद्रबाहुरायातः। श्राद्धाश्च महामहं विधाय तं नगरं प्रावेशयन् । परं तदसहमानो वराहमिहिरो दध्यौ—यदेतस्य यथा मानभङ्गः स्यात्, तथाऽनुष्ठेयमेवेति ध्यात्वा नृपान्तिकं गत्वा प्रोचे—राजन् ! अद्यतनादिवसात्पञ्चमे दिने तृतीये यामे पूर्वस्या दिशः समागतो मेघो वर्षिष्यति । अत एतत्कुण्डालकं कुर्वे, एतस्य मध्यभागे च द्विपञ्चाशत्पलप्रमाणो मीनः पतिष्यति । तदुक्तं भविष्यद्वार्त्तां श्रुत्वा कश्चिच्छ्रावको भद्रबाहुं चचक्षे । सोऽवक्—सत्याऽसत्यमिश्रमस्ति । तन्मध्ये पतनमसत्यं तत्प्रान्ते पतनं सत्यम् । पूर्वदिश आगमनमसत्यमीशानकोणादागमिष्यतीति सत्यम् । तृतीययामोक्तमलीकं षट्घटिकावशेषे पतिष्यतीति सत्यम् । मीनस्य द्विपञ्चाशत्पलमानता मिथ्या, किन्तु सार्धैकपञ्चाशत्पलप्रमाणत्वं सत्यम् । ततः श्रावकाः सर्वमेतदाचार्यवचः क्षितिपतिमूचुः । राजा जगौ—तद्दिने द्वयोरुक्तौ प्रामाण्यमप्रामाण्यं वा भोत्स्ये । समायाते तद्दिने सूरिभाषितमेव साकल्येन मिलितम्, वराहमिहिरोक्तं तु सत्याऽसत्यमिश्रमभूत्, अतस्तस्य लोके प्रतिष्ठाहानिर्जाता ।

अथैकदा राज्ञः पुत्रे जाते तस्य जन्मपत्रिकां निर्माय, शतमायुर्भवितेति वराहमिहिरो राजानं प्रोचे । तदुत्सवे सर्वे लोका विविधोपहारैस्त्यागिनो विप्राश्च फलादिना नृपं वर्धयामासुः । केवलं जैनमुनयो नाऽऽगुः । तदाऽवसरमासाद्य वराहमिहिरो जगाद—राजन् ! इदं पुत्रजन्म सर्वेषां सुखाय केवलमेकस्मै जैनमुनये न रुरुचे, यतः सोऽद्यापि तवान्तिकं नाऽऽगात् । इदमपि कश्चिच्छ्रावकः सूरिमचकथत । गुरुरुवाच—साधवोऽनेकधा नृपसदसि नो यान्ति, अवसरमासाद्य सत्युपयोगे सकृदेव यान्ति । अष्टमे दिवसे जातोऽसौ राजपुत्रो निशि बिलाडेन हनिष्यते तदा यास्यामि । गुरुभाषितं श्रावको नृपमाजिज्ञपत् । राजा नग-

रात्सर्वानोतून् निरकाशयत्, तथापि तन्निर्दिष्टदिवसे रजन्यां बिलाडमुखार्गलापातेन राजपुत्रो ममार । तदा 'बिलाडेन नो हत' इति जल्पन्तं वराहमिहिरं तं दर्शयितुं सूरिस्तत्रागत्य नृपादिकं तदाकारं कपाटविष्कम्भमदर्शयत । तेन वराहमिहिरो बाढमजिह्रेत्, सूरिश्च सर्वैः प्रशंसितः । ततो लोकैस्तिरस्कृतो वराहमिहिरः क्वचिदन्यत्र गत्वा कष्टेन मृत्वा, व्यन्तरीभूय जैनसंघे महामारीमुत्पाद्य संहर्त्तुं प्रावर्त्तत । भद्रबाहुः सकलसंघकल्याणकृते 'उवसग्गहरमपरनामश्रीपार्श्वनाथस्तोत्रं' सप्रभावं व्यधत्त । तत्पाठमाहात्म्येन समस्तोपसर्गः शशाम । लोकाः सुखिनो बभूवुः । प्रतिगृहे तत्पठितुं लग्नः, किमधिकं गोमहिष्यादिष्वपि दुग्धमदद्मानासु लोकास्तत्स्मर्त्तुं लग्नाः । तत्स्मृत्या ता ददन्ते स्म पयांसि । वने च गोमयादिकं चिन्वानैकाकिनी स्त्र्यपि तत्स्मृत्वा तदुत्थापयितुमलगत् । कियत्यः पचन्त्यः शिशौ हदमाने तत्स्मरणात्तत्रागतेन नागदेवेन शिशोः शौचप्रमुखं कारयितुमारेभिरे । इत्थं लोकास्तेन नागेनाऽकृत्यमनेकं कारयितुं लग्नाः । ततो नागराजः खिद्यमानो गुरुमभ्यर्थयत्—प्रभो ! लोका मयातिगर्हितमपि कृत्यं कारयन्ति ?, गुरुर्दध्यौ—हन्त ! एते हतभाग्या यदेनं नीचकृत्यात्कोपयन्ति, तथाकरणे कदाचिदनिष्टमपि भविष्यति । अत एतदुग्रं स्तोत्रं क्षेपणीयमेव । नागराजेनोक्तम्—षष्ठीमेव गाथामपहर, गाथापञ्चकन्तु तिष्ठतु, न तेन हानिर्भाविनी । अहं स्वस्थानस्थः सन्नेत्र सर्वमुपसर्गं हन्तास्मि । तथैवाऽकरोद् गुरुः । अमुना भद्रबाहुस्वामिना निर्मिताऽऽवश्यकनिर्युक्तिप्रमुख-

१ एष हि द्वादशाब्दीं योगमार्गमालम्बे, सूत्रार्थांश्च निबन्धयामास । दौर्भिक्ष्यतश्छिन्नभिन्नत्वमापन्नामेकादशाङ्गीं पुनरेष पाटलीपुत्रपत्तने सङ्कलयामास । श्वेताम्बरग्रन्थनिर्मातारः कियन्तो वराहमिहिरं श्रुतकेवलिनो भद्रबाहुस्वामिनो भ्रातरं मेनिरे । इदानीन्तना इतिहासज्ञातारस्तु विक्रमीयतृतीयशताब्द्यां जातस्य नैमित्तिकस्य भद्रबाहुसंहिताप्रणेतुर्द्वितीयभद्रबाहोर्भ्रान्धवं मन्यन्ते । एवमेव मौर्यचन्द्रगुप्तस्य स्वप्नफलकथनमेतद्दीक्षाऽऽदानवार्त्ता च द्वितीयभद्रबाहुनैव संबध्नाति ।

कतिपयग्रन्था वर्त्तन्तेऽधुनापि । अयमपि ४५ वर्षाणि गार्हस्थ्ये, १७ वर्षाणि दीक्षायाम्, १४ वर्षाणि च युगप्रधानपदे, एवं सर्वायुः ७६ वर्षाणि सम्भुज्य श्रीवीरनिर्वाणतः सप्तत्यधिकशताब्द्यां स्वर्लोकमगमत्।

११८ श्रीस्थूलभद्रस्वामिनः कथा--

भद्रबाहुस्वामिनः पट्टे गौतमगोत्रीयः स्थूलभद्र आसीत् । तत्स्वरूपश्चेदम्--पाटलीपुत्रनगरे नवमो नन्दराजो विलसति । तस्य शकडालो मन्त्री, तत्पत्नी लाञ्छनदेवी द्वौ पुत्रौ स्थूलभद्र--श्रीयकनामानौ सुषुवे । पितृभ्यामेतौ चतुर्दशविद्याकुशलौ चक्राते । तत्र ज्यायान् सदैव पुस्तकादिवाचन एव मनो नियुञ्जानः सांसारिकं कृत्यमजानानो गृहकार्यं राजकार्यं चाऽकुर्वाण आसीत्। अत एतदर्थमुद्विग्नचेताः पितैनं कोशावेश्यासद्मनि स्थापयामास । अथैकदा वररुचिनामा कविराययौ । स च प्रत्यहं राजसभामागत्याष्टोत्तरशतनवकाव्यं निर्माय राजानं श्रावयति स्म । राजा च तैः काव्यैः प्रसीदन्नपि यदि प्रधानः प्रशंसेत् तर्हि तस्मै कवये दानं ददानीत्यवोचत् । प्रधानस्तु मिथ्यात्वित्वात्तन्न स्तौति, तेन राजा तुष्टोऽपि किञ्चिदपि नो ददाति । ततः कविरेकदा प्रधानपत्नीं जगाद स्ववृत्तम् । पत्न्या प्रेरितो मन्त्री सदसि तत्काव्यानि प्रशशंस । राजा सन्तुष्टः प्रतिदिनमष्टोत्तरशतदीनारान् प्रदातुमारभत । इत्थं कियन्तं कालं ददतं नृपं विलोक्य प्रधानो ऽयमृशत्---चेदेवं वितारिष्यति तर्हि कोश एव नङ्क्ष्यति । इति विचिन्त्याऽनुश्रुतपाठिनीर्निजसप्तपुत्रीस्तद्भेदं शिक्षयित्वा सदसि समाययौ । यदा स कविः श्रावयितुमलगत्, तदोवाच मन्त्री--राजन् ! एतानि काव्यानि नवानि न, किन्तु प्राच्यानि सन्ति ।· एतानि मत्पुत्र्योऽपि विदन्ति । तत्रैव नृपाहूतास्ताः समायाताः क्रमशस्तानि कविपठितानि काव्यानि पेठुः । ततो राजा वररुचिं तिरस्कृत्य सभातो निरगमयत् । सर्वमेतद्र दुर्धिया मन्त्रिणा प्रपञ्चितम्, इति विदित्वा तदुपरि द्वेषं बिभरामास सः।

राज्ञा निष्काशितो वररुचिः सायं समये प्रच्छन्नं भागीरथ्यां यन्त्रं क्षिप्त्वा तन्मध्ये पञ्चशतदीनारान्मुक्त्वा प्रभाते लोकैः सह तत्र गत्वा, तावन्ति पद्यानि श्रावयित्वा युक्त्या यन्त्रं खटखटाकृत्य धौर्त्येन क्षिप्तानेव दीनारान् ग्रहीतुं लग्नः । इत्थं गृह्णति सति लोका ऊचिरे—आश्चर्यमस्ति किलैतस्य माहात्म्यम्, यद्राज्ञा रुद्धेऽपि प्रदाने गङ्गैव सन्तुष्य प्रत्यहं पञ्चशतीं दीनारस्य वितरति । क्षितीश आख्यत्—प्रधान ! अहमप्येकदा कौतुकमेतद् दिदृक्षामि । प्रधानो जगौ—प्रभाते गन्तव्यम् । ततस्तद्धौर्त्यं व्यञ्जयितुमेकमात्मीयं पुरुषं प्रच्छन्नतया तत्र स्थापितवान् । सोऽपि सन्ध्यासमये वररुचिना यन्त्रे न्यस्तं दीनारग्रन्थिं निष्काश्य, तत्स्थाने शिलाशकलं निधाय मन्त्रिणे समार्पयत् । प्रभाते नृपादयो लोकास्तद्विलोकनार्थं तत्राऽऽययुः । यदा प्रागिव जाह्नवीं स्तुत्वा युक्त्याऽऽकृष्टे यन्त्रे समुच्छल्य शिलाशकलमेव निपपात, तदा लोकैरुपहसितः कविस्त्रेपे । प्रधानस्तु तद्धौर्त्यं सकलजनसमक्षं व्याहृत्य दीनारग्रन्थिमदात् । ततः प्रभृति वररुचिर्मन्त्रिणं द्विषन्नवसरं प्रतीक्षमाणस्तस्थौ ।

अथ मन्त्रिणा स्वसुतस्य श्रीयकस्योद्वाहो मण्डितः । तदौकसि नानाविधशस्त्राऽस्त्राणि सज्जितुं लग्नानि । तदवसरं प्राप्य वररुचिः पद्यमेकं समागच्छतश्छात्रानभ्यासितवान् ।

राजा नन्दो न जानाति, शकडालस्य दुर्मतिम् ।
हत्वैनं निजपुत्राय, राज्यमेतत्प्रादित्सति ॥ १ ॥

ततस्ते विद्यार्थिनस्तत्पठन्तः क्षितिपतिभवनपार्श्वतो गत्वा स्वस्वसदनानि पेदिरे । भूपतिश्च तच्छ्रुत्वा सशङ्को भट्टमपृच्छत्—किमेतत्सत्यम् ?, सोऽवदत्—प्रत्यक्षे प्रमाणापेक्षणं न जायते, न विश्वसिषि चेत्तत्सदने कमप्यात्मीयं चरं प्रेष्य प्रमातव्यम् । ततो राजा दूतमुखेन

तत्सत्यमवेदीत् । मन्त्रिणे चोकुप्यमानो राजा सपरिवारमेनं विघातयितुं निरचिनोत् । शकडालोऽप्येतत्कथञ्चिदवगत्य नृपान्तिकमागात् । तस्मिन्नागते च राजा पराङ्मुखो ववृते । राज्ञः प्रकोपमुपलक्ष्य गृहाऽऽगतो मन्त्री च तनयं श्रीयकमुवाच—वत्स ! राजा प्रकुपितो लक्ष्यते, कुलक्षयं च मे चिकीर्षति, अतस्त्वया राजानं नमस्कुर्वतो मे शिरः सहसैवासिना छेत्तव्यम् । पुत्रोऽप्येतदकार्यं पितुर्वचनमनुल्लङ्घनीयमिति हेतोरत्याग्रहेण प्रत्यपद्यत । ततः सदसि समागत्य मुखक्षिप्ततालपुटविषस्य नृपं प्रणन्तुं नताननस्य तस्य मूर्धानं राजद्वेषी हन्तव्य एवेति जल्पन् स शितेनासिना द्वैधीकृतवान् । तदा चिरं शोचित्वा प्रसन्नः क्षितिपतिस्तस्मै पितुरधिकारं प्रदातुमैच्छत् । श्रीयकेणोक्तम्—प्रभो ! मम ज्यायसे भ्रात्रे स्थूलभद्राय दीयतामेतत्पदम् । राजोवाच—स क्वास्ति ?, श्रीयकोऽवदत्—कोशावेश्यालये । ततो राजा तमाह्वातुं प्रतिहारिणं प्राहिणोत् । नृपान्तिकं प्रयातुमुत्थितं स्थूलभद्रं कोशा जजल्प—स्वामिन् ! मागाः, यास्यसि चेत्पुनर्नागमिष्यसि । त्वां विना क्षणमपि कुत्रापि याऽहं न तिष्ठामि, सा त्वया वियुक्ता सती कथं जीविष्यामि ?, त्वामपश्यन्त्या नूनमसवो मे गमिष्यन्त्येव । स्थूलभद्रोऽवदत्—मा शोचीः, सम्प्रति पितर्युपरते नृपाह्वाने च याते मया गन्तव्यमेव । परमेकवारं त्वां मेलितुमवश्यमेष्यामि, इति व्याहृत्य गृहाऽऽगतः स पितुर्मरणं भट्टस्य प्रपञ्चतः श्रुत्वा नृपाभ्याशमागात् । राजाऽभ्यधात्-मन्त्रिपदं गृहाण । तेनोक्तम्—विमृश्यैव ग्रहीष्यामि । ततो नृपाज्ञया स्थूलभद्रोऽशोकतरुतलमागत्य—' हन्त ! संसारे सकलाः स्वार्थमात्रमीहन्ते, राज्यकार्यकरणात् पिता लोकद्वये दुःखभागभवत्, तत्को मतिमान्नरः कामयेत ? ' इत्थं बहुधा विमृश्य, निजकरेण कचाँल्लुञ्चित्वा रत्नकम्बलमोघीकृत्य साधुवेषेण समागत्य, नृपाय धर्मलाभं दत्त्वा निरगात् । व्यसनित्वात्तस्या एव सदने पुनर्गन्तेति राजा मनसि मेने ।

परन्तु स महादुर्गन्धिभरप्रतोल्यैव नगराद् बहिरायातः । तेनैकान्तपरीषहसाही परमवैराग्यमुपगतोऽयमिति नरपतिप्रमुखाः सर्वे विविदुः । ततस्तस्थिवान्मन्त्रिपदे श्रीयकः । स्थूलभद्रस्तु श्रीसम्भूतिविजयाचार्यसन्निधिमाप्य दीक्षां ललौ ।

समायाते वर्षर्त्तौ गुरोरादेशेन कोशायाः सदने चतुरो मासानतिष्ठत्स्थूलभद्रो महामुनिः । द्वितीयो गुरुणानुमतः सिंहगुहायामागत्य चतुर्मासीमस्थात् । तृतीयः सर्पबिले, तुरीयः कूपोपरिस्थकाष्ठकीलकोपरि चतुर्मासीमकरोत् । चतुर्ष्वपि स्थानेषु वेश्यागारे तावतीं वेलां स्थितिरतिदुष्करास्ति । यतः प्रावृषि गर्जं गर्जं पयोदे वर्षति, सर्वतस्ताडिति जायमानायां शिखिगणे च रारव्यमाने, मन्दम्मन्दं पवने वहति, मदनो भृशं जागर्त्ति । अनेकचित्रचित्रिते भवने वासः, सरसं षड्विधं भोजनम्, सन्निधौ च कामुकी गुणवती युवती नर्त्तकी, तथापि स्थूलभद्रस्तस्याः कटाक्षमार्गणैर्व्यथितोऽप्यभिन्नः । तद्धावभावादिमहावातैश्चालितोऽप्यचलः । तन्नर्त्तनसप्रेमभधुरालापादिना विकारितोऽप्यविकृतः । तामेव चतुर्भिर्मासैः प्रतिबोध्य गुर्वन्तिकमागात् । अन्येऽपि ते त्रयः साधव आजग्मुः । एताँस्त्रीनागतान् किञ्चिदुत्तिष्ठन् 'दुष्करकारकाः ! यूयं सुखेन समागताः स्थ ?' इत्यभिदधौ गुरुः । कोशालयादागतं स्थूलभद्रं तु दूरादेव समभ्युत्थायाऽऽगच्छतु भवान् 'अतिदुष्कारक ! ! !' इति त्रिवारमुच्चैरवदत् । तदा गुहावासी मुनिस्तदाधिक्यमसहमानश्चिन्तितवान्–अहो ! कीदृशो वर्त्तते गुरोर्विवेकः ?, यो हि गर्हिते वेश्यागारे तिष्ठन् प्रत्यहं सरसमश्नँश्चतुर्मासीमकरोत्, तमेवमभ्युत्थानादिना सत्कुर्वन्नतिदुष्करकारिणं गदति । अहमितरैरशक्यमपि सिंहगुहावासमकरवम्, तथापि मां दुष्करकारकमित्येव जल्पति । अतो मन्ये गुरवोऽपि धनवन्तमेव लोभादाद्रियन्ते ।

अथ पुनरागते वर्षर्त्तौ गुहावासी गुरूनवदत्–एनां चतुर्मासीमह-

मपि कोशागारे चिकीरसि । गुरुः प्रोचे—वत्स ! मदनराजधानीभूते तदोकसि जितात्मनामपि स्थितिरनर्थकरी भवति, तर्हि त्वं कथं तत्र स्थातुमीहसे ?, मागाः, यास्यसि चेदवश्यमधः पतिष्यसि । इत्थं निषेधन्तमपि गुरुमवज्ञाय स तत्र कोशालये गतः । सापि तमागतं साधारणे स्थाने समुत्तारितवती, तस्थुषी च तदग्रे सामान्यवेषेण । तदपि तद्रूपविमूढः स साधुस्तां रतिमयाचत । सा जगौ—धनं विना न । सोऽप्यवदत्—धनं कुत्र मिलति ?। तयोक्तम्—नेपालदेशे राजा साधवे रत्नकम्बलं वितरति तत आनीयताम् । ततो मुनिश्चतुर्मास्यदिवसेषु रिरंसया कष्टमधर्मञ्चागणयँस्तत्र गत्वा राज्ञस्तल्लब्ध्वा परावर्त्तत । मार्गे च 'लक्षं याति' इति कीरगिरमाकर्ण्य समागतो लुण्टाकस्तदुपाहरत् । ततः परावृत्त्य नृपान्तिकमागत्य व्यजिज्ञपत्—राजन् ! त्वया योऽदायि कम्बलः सोऽपहृतः पथि लुण्टाकैः । राजा वंशपर्वणि कम्वलमन्यं पिधाय तस्मा अदित । ततश्चलित्वा पुनस्तत्राऽऽगते तस्मिन् प्रागिव 'लक्षं याति' इति कीरगिरमाकर्ण्य तत्राऽऽगतो लुण्टाकः । कम्बलमपश्यञ्छुकगीर्मुधा न सम्भवति, इति निश्चिन्वानस्तमभ्यधात्—मुने ! 'कीरो मे वितथं न जल्पति, कम्बलस्तु न दृश्यते, अतस्त्वं सत्यं वद्व क्वास्ति ते कम्बलः ?' सत्यं वक्ष्यसि चेन्नो लुण्टिष्यामि । मुनिः कम्बलमदर्शयत्, तैरपि सोऽमोचि । ततश्चलित्वा समागत्य कोशायै तमदात् । सापि तल्लात्वा स्नात्वा तेनाङ्गानि पुञ्छित्वा खालकेऽक्षिपत् । साधुरुवाच—मूर्खे ! महता कष्टेनाऽऽनीतं बहुमूल्यमेनं कथमक्षैप्सीः ?, तदोचे सा—रे ! त्वमपि मत्तोऽधिको महामूर्खो लक्ष्यसे, यदमूल्यं स्वीयमतिदुरापं संयमरत्नं मदङ्गलक्षणदुर्गन्धभृते खाले चिक्षिप्ससि । इत्थं तया प्रतिबोधितो गुर्वन्तिकमागत्य पुनश्चारित्रमग्रहीत् ।

अथैकदा राजकीयो रथकारः कोशाया गुणरूपयोः प्रशंसामशृणोत्। अतस्तां भोक्तुमिच्छुर्नृपादेशमन्तरा कोऽपि तामधिगन्तुं नार्हति, इति

राजाज्ञां जानन् निजकलया प्रसादितो राजा तमूचिवान् रथकार ! अहं तवानया कलया प्रसन्नोऽस्मि, अतोऽधुना यद्याचिष्यसि तत्ते दास्यामि । सोऽवदत्–राजन् ! इष्टं दित्ससि चेत्कोशा दीयताम् । क्षिति पतिस्तस्मै तामदात् । ततः प्रत्यहं रथकारस्य पुरतः सा स्थूलभद्रमुनेर्गुणान् गातुं लग्ना । रथकारो मनस्यचिन्तयत्–यदेतामहमपि कामपि कलां दर्शयानि चेत्प्रसत्स्यति । इति ध्यात्वा तया सहैकदा गवाक्षे सुखाऽऽसीनोऽतिदूरवर्त्तिरसालल्लुम्बकं बाणपारम्पर्येण त्रोटयित्वा कोशाया अदात् । अवादीच्च—सुन्दरि ! कीदृशी कला मयि वर्त्तते तां पश्य । ततः कोशापि तदग्रे सर्षपान् पुञ्जीकृत्य तदुपरि सूचीमारोप्य तत्र पुष्पं धृत्वा तदुपरि तिष्ठन्ती सुचिरं ननर्त्त । तदवलोक्य सोऽवदत् त्वयाऽनयाऽत्यद्भुतया नाट्यलीलया प्रसादितोऽहं ते किं ददानि ? इति भाषस्व । उवाच कोशा–कामुक ! ईदृशी कला तु मादृश्या सकलयैव विधीयते, यापि त्वयाऽधुनाऽदर्शि तामपि कर्त्तुं भूयांसः कारवः शक्नुवन्ति । परन्तु प्रावृषि वेलायामस्यामेव मदनराजधानीभूतायां चित्रशालायां सरसं षड्विधं कामोद्दीपकमाहारं कुर्वाणोऽपि स्थूलभद्रो मयि सरागं सस्नेहं रतियाचमानायामपि यया कलया मनागपि न चुक्षुभे, तामतिदुर्लभां कलां स एव विभर्त्ति नाऽपरः । धान्यातिधन्यौ तत्पितरौ, तस्य कुलमपि पवित्रं धन्यार्हमित्थं व्याहृत्य तं विषयविमुखमकार्षीत् । स रथकारोऽपि तदैव स्थूलभद्रपार्श्वमागत्य दीक्षां ललौ ।

एवं कियत्यपि समयेऽतीते द्वादशाब्दिको दुष्कालः प्रादुरभूत् । तत्र सर्वे खल्वेकादशाङ्गी विज्ञातार एवाऽतिष्ठन्, नैकोऽपि द्वादशाङ्गी वेत्ता । अतस्तत्रत्यः संघः पुरुषावुभौ प्रेष्य श्रीभद्रबाहुस्वामिनमाकारयत् । तौ तत्र गत्वा सङ्घादेशं तमूचतुः । स्वाम्यवोचत्–ममाधुना प्राणायाममहाध्यानं प्रवर्त्तते, अतस्तत्राऽऽगन्तुं नार्हामि । पुनस्तौ प्रेष्य संघस्तमेवमवेदयत्–' यः सङ्घादेशं न मन्येत, तस्मै कीदृशो दण्डो दी-

येत ?' स्वामिनोक्तम्—संघाद्बहिष्करणम् । मद्ध्यानान्तरायं न चिकीर्षति चेदत्रैव ते विद्याभ्यासिनः साधवः प्रेष्यन्ताम् । तथा विधानेन द्वयोरपि समीहितं सेत्स्यति । ततः स्थूलभद्रप्रमुखपञ्चशतश्रमणान्, तद्वैयावृत्त्यकरानन्यानपि सहस्रसाधून् प्राहिणोत्तदन्तिके सङ्घः । ते सर्वे गुरुणा यथावत्पाठ्यमानाः सप्तवाचनामधीत्य मतिमान्द्यादध्ययनं विसृज्य न्यवर्त्तन्त । केवलमेक आशुग्राही स्थूलभद्र एव दशपूर्वानधीत्यैकादशमधीयान एकान्ते तदभ्यस्यन्नासीत् । तावदेकदा तत्स्वसारः सप्त साध्व्यः स्थूलभद्रमभिवन्दितुं तत्राऽऽययुः । ताश्च भद्रबाहुमभिवन्द्य पप्रच्छुः—स्थूलभद्रः क्वास्ति ?, गुरुरूचे—गिरिगुहायामासीनः पठितपूर्वानभ्यस्यति । सप्तापि तत्र चलितास्तासामागमनं विदित्वा विद्याबलेन चमत्कारं दर्शयितुं सिंहीभूय तस्थिवान् । ताश्च तत्रागत्य निषण्णमतिभीषणसिंहमालोक्य त्रस्ताः सत्यः परावृत्त्य गुरुमाख्यत्—स तत्र नास्ति, सिंह एव तत्रैको निषण्णः प्रैक्षि । गुरुरवेदीत्—स एव मृगारातिरूपमदर्शयत् । अतो यूयं यात, स तत्रैव मेलिष्यति । पुनस्तत्र गत्वा भ्रातरमालोक्य मुदिताः सत्यस्तं ववन्दिरे । पुनरागत्य 'अस्माभिः सहैव श्रीयको दीक्षां ललौ । ततस्तेन यक्षिणी उपोषणमकारयत्तत्कारणात्स ममार । ततो यक्षिणी तत्प्रायश्चित्तकृते श्रीसङ्घमभ्यर्थयत । सङ्घोऽपि कायोत्सर्गं विधाय समागतां शासनदेवतां सीमन्धरस्वामिपार्श्वे प्रैषीत् । सा च तन्मुखाच्चूलिकाद्वयमानीय सङ्घाग्रे निधाय यक्षिणीश्चादूषितां निवेद्य तिरोदधे' इति गुरुं भाषित्वा ताः स्वस्थानमगच्छन् ।

अथैकदा स्थूलभद्रो मुनिः कस्यचिद्विप्रसखस्य सदनमागतस्तत्पत्नीमपृच्छत्—कुत्र गतो मे सखा ?, साऽवक्—दारिद्र्यपरितापाद् भिक्षितुम् । इति तया निगदिते दयया तद्गृहान्तः पूर्वजसञ्चितप्रचुरमज्ञातं धनं ज्ञानयोगेन विलोक्य तत्स्थानं तत्पत्नीं दर्शयित्वा निरगात् । गृहान्तर-

मागतो विप्रो ब्राह्मणीमुखात्सञ्चितं धनराशिं निशम्य, मुनिवचः सत्यं मन्वानस्तत्स्थानमखनत्, अपश्यच्च तद्राशिं, तैश्चार्थैरभितः सुखी बभूव। इत्थं सिंहरूपधारणं भूमिनिखातधनदर्शनञ्चेति कार्यद्वयं कृत्वा स्थूलभद्रो मुनिर्गुरोः समीपमध्येतुमागात् । गुरुभिरुक्तम्–अकार्यकार्यद्वयं कृत्वा समागतोऽसि, इति वाचनामादातुं नाऽर्हसि । एवं गुरौ जल्पति सति बहुदुःखिना तेन सङ्घमुखेनानुनायितो गुरुरवशिष्टचतुर्णां पूर्वाणां मूलमात्रमध्याप्य जजल्प–एतांश्चतुरः पूर्वानन्यं मा पाठयेः । ततः परं पूर्वचतुष्टयज्ञानं विच्छिन्नतां ययौ, दशपूर्वविज्ञानमेव शिशेष । अयमपि गार्हस्थ्ये ३० वर्षाणि, दीक्षापर्याये २४ वर्षाणि, युगप्रधानपदे च ४५ वर्षाणि, एवं सर्वायुः ९९ वर्षाणि परिपाल्य वीरनिर्वाणतः २१५[1] तमे वर्षे सुरलोकमगमत् । स्थूलभद्रो वीरपट्टावल्यां सप्तमो युगप्रधानः, तेष्वेको जम्बूस्वाम्येव चरमकेवली जज्ञे, अन्ये च षट् श्रुतकेवलिनो बभूवुः ।

११६ आर्यसुहस्ति–महागिर्योः कथा—

स्थूलभद्रस्य पट्टे द्वावन्तेवासिनावभूताम्, १ महागिरिरेलापत्यगोत्रः, २ आर्यसुहस्तिश्च वासिष्टगोत्रः । तत्र काले जिनकल्पमार्गस्य विच्छेदेऽपि महागिरिर्जिनकल्पतुलनां कर्त्तुमलगत् । एकदा सुहस्तिसूरिः कस्यचिन्महेभ्यस्य सदने देशनां ददानो महागिरिं गोचर्यै समायातमवलोक्य सहसोत्थाय ववन्दे । अप्राक्षीच्छ्रेष्ठी–अयं कोऽस्ति, यस्मै त्वमभ्युत्थितिमददाः ?, सुहस्तिस्तं स्तुवँस्तद्वृत्तमशेषं तमब्रवीत् । अथैकदा सर्वत्र महादुर्भिक्षे प्रसृते क्रेतॄणां धान्यादिकमपि महायासेन मेलितुं लग्नम् । तत एव लोकाश्चिन्तातुरा बभूवुः, महाधनिनोऽपि रङ्को-

---

१–एतस्य २१५ वर्षे पदनिक्षेपः, २२५ वर्षे स्वर्गमनमित्याधुनिका इतिहासविज्ञा मन्यन्ते ।

पमापापुः, तथापि श्राद्धाः साधुभ्यो भावेन दानं ददन्ते स्म । तन्नि-रीक्ष्यैकं साधुं गोचरीं प्रचुरां लात्वाऽऽगच्छन्तं मार्गे कश्चिद्भिक्षुराचष्ट-तव भूयसी भिक्षा मिलति, मह्यमपि किञ्चिद् देहि । मुनिरूचे–गुर्वादेशं विना कस्मैचिल्लेशमात्रमपि दातुं नाऽर्हामि । स गुर्वन्तिकमागत्योवाच–प्रभो ! बुभुक्षया म्रिये, अतो मे भोजनं देहि । गुरुरूचे–मादृशो भव, तर्हि दास्यामि । सोऽपि सहर्षमूचे–देहि मे स्ववेषम् । ततो गुरुर्लाभ-धिया तस्मै दीक्षां दत्त्वा यथेच्छं भोजयामास, वर्त्तितव्यं शुद्धभावेने-त्यजल्पच्च । तावत्तस्य वान्तिरभूत्, तदा सर्वे साधवस्तद्वैयावृत्त्यमकुर्वत । तेन द्रमकः संयममनुमोदयन् कालं कृत्वा चोज्जयिन्यामशोकराजपुत्रस्य कुणालस्य भार्यायाः कुक्षौ पुत्रत्वेनाऽऽविरभूत् । अयं संप्रतिनामा जातमात्रः पितामहेन दत्तं त्रैखण्डिकं राज्यमन्वशात् । स चैकदा गवा-क्षस्थः पथि रथयात्रायां सङ्घेन यान्तमार्यसुहस्तिसूरिमवेक्ष्य, सञ्जात-जातिस्मृत्या प्राक्तने भिक्षुभवे स्वं साधुभूतमपश्यत् । नीचैरागत्य तच्च-रणयोः पपात । अपृच्छच्च–प्रभो ! अव्यक्तसामायिकेन किं फलं जा-यते ?, गुरव ऊचिरे–राज्यलब्धिः । पुनरप्राक्षीत्–मामुपलक्षयसि ?, गुरवोऽपि ज्ञानं प्रयुज्य जगदुः–पुरा त्वं मदन्तेवासी बभूविथ, तत्रभवे यदन्वमोदयँश्चारित्रं तन्महिम्नाऽत्र भवे राज्यं प्राप्तवानसि, अतस्त्व-मत्र राज्यमधिगत्य धर्मं बाहुल्येनार्जय, येनाग्रे शुभमेष्यसि । इति गुरु-वचो निशम्य द्वादशव्रतानि स्वीकृत्य सपादलक्षनूतनजिनचैत्यानि कारितवान्, प्रतिष्ठापितवाँश्च सपादकोटिजिनबिम्बानि, उद्धारितवाँश्च सहस्रं जीर्णचैत्यानाम्, अचीकरच्च पित्तलादिसप्तधातुमयप्रतिमानां पञ्चनवतिसहस्रम् । दानशालाश्च सप्तशतीरक्रियन्त । इत्थमनेकविध-

---

१–श्रेणिकभूपस्य पट्टे कोणिकस्तत्पट्टे उदायी, तत्पट्टे क्रमशो नापितजातीय नापिताऽभिधाना गणिकाकुक्ष्युद्भूतनन्दवंशीया वा नन्दनाम्ना प्रख्याता राजानस्तत्पट्टे मौर्यचन्द्रगुप्तस्त-त्पट्टे बिन्दुसारस्तत्पट्टे अशोकस्तत्पट्टे कुणालस्तत्पुत्रः संप्रति ( संपदि ) नामा भूभुगभूत् ।

धर्मकृत्यैरशेषामिमां पृथ्वीं प्राद्युतत्सः। विविधं करमपि मुमोच। साधुवेषेण निजभृत्याननार्यदेशे प्रेष्य तत्रत्याँल्लोकानार्यधर्मोपदेशेन धर्मज्ञाँश्च विदधे। तथा घृतगुडवस्त्रादिव्यापारिणः कान्दविकाँश्चादिशद्राजा-यद्भवन्तः सर्वे साधुभ्यः खल्वपेक्षितं वसनाऽशनादिकं विविधं ददन्ताम्, मूल्यं च तेषां राजकोषतो गृह्णन्तु, परमेतत्स्वरूपं साधवो न विजानीयुस्तथा सर्वैर्विधेयम्। तेन हेतुना सर्वे लोकाः साधून् वसनाऽशनादिविविधं प्रत्यहं प्रतिलाभयितुमारेभिरे। तेऽपि प्रासुकधिया ग्रहीतुं लग्नाः। एकदाऽऽर्यमहागिरिस्तानप्राक्षीत्-प्रत्यहमीदृशः सरसाऽऽहारः कथमानीयते ?, शिष्या ऊचुः-तत्कारणन्तु गवेषयन्तोऽपि वयं नाधिगच्छामः, हित्वैव तद्दोषान् गृह्णीमश्च। गुरुरुवाच-नूनमत्र केनापि कारणेन भवितव्यम्, तद्धेतुज्ञानाय यतितव्यम्। अन्यदा मोदकं खादन्तं शिशुमेकमपृच्छत्-भोस्तुभ्यं प्रत्यहमीदृशान्मोदकान् को ददाति ?। सोऽवक्-तवैव माहिम्ना प्रच्छन्नतया भवदर्थं सर्वत्र राज्ञा वसनादीनां कोशः कारितस्तत एव भवतः प्रतिलाभयामः, स्वयमपि भुञ्जमहे। एतच्छ्रुत्वा शिष्य आर्यमहागिरिमुवाच। सोऽपि राजपिण्डत्वादग्राह्यं विदित्वा सुहस्तिसूरिमवादीत्-महानुभावाः! आगताऽऽहारे शुद्धिं न गवेषयसि ?, सदैव राजकीयः समायाति, स च राजपिण्डत्वात्साधूनां नैव कल्पते। सुहस्तिरूचे-सर्वमेव राजकीयं विद्यते, तर्हि किं कार्यमित्याचक्षाणे तस्मिन्नार्यमहागिरिरजल्पत्-त्वमेवमाचारशैथिल्यं व्यनक्षि चेदतस्तव मम च साम्भोगिकादिव्यवहारः पृथगस्तु, इति व्याहृत्यान्यत्र विजहार। अयं गार्हस्थ्ये ३० वर्षाणि, दीक्षायाम् ४० वर्षाणि, युगप्रधानपदे च ३० वर्षाणि, एवं सर्वायुः शतवर्षाण्युपभुज्य वीरप्रभुनिर्वाणतः पञ्चचत्वारिंशच्छत २४५तमे वर्षे दशार्णपुरीयगजाग्रपदतीर्थोपरि स्वर्ययौ। आर्यसुहस्तिसूरिरपि

१-अस्य २६१ वर्षे स्वर्गमनमभूदिति केचित्।

गार्हस्थ्ये ३० वर्षाणि, दीक्षायाम् २४ वर्षाणि, युगप्रधानपदे च ४६ वर्षाणि, एवं सर्वायुः शतवर्षाणि परिपाल्य, वीरनिर्वाणादेकनवत्यधिक-द्विशततमे वर्षे स्वर्गमध्यगच्छत् ।

१२० श्रीसुस्थित–सुप्रतिबुद्धयोः कथा—

आर्यसुहस्तिसूरिपट्टे द्वौ शिष्यौ बभूवतुः–सुस्थितः सुप्रतिबुद्धश्च । तथाहि–चम्पापुरीवासिनौ राजवंशीयौ व्याघ्रापत्यगोत्रौ सुस्थित–सुप्रतिबुद्धौ सोदर्यावेतौ संवेगमधिगत्य श्रीमदार्यसुहस्तिपार्श्वे दीक्षामाददाते । बाहुल्येन कलिङ्गदेशे विहरतोरेतयोस्तद्देशीयः परमार्हतो भिक्षुराजभूपोऽतीवभक्तो बभूव । एतदुपदिष्टेनाऽमुना राज्ञा शासनोन्नतिकराणि धर्मकार्याणि विविधानि चक्रिरे । ध्यानस्थाभ्यामाभ्यां तद्देशे शत्रुञ्जयावतारापरनाम्ना प्रसिद्धस्य कुमारगिरेरुपरि कोटिकृत्वः सूरिमन्त्रमजापि, अतस्तदीयशिष्यसन्ततिः कौटिकीं शाखामुपेयुषी । प्रान्ते द्वावपि निजपरिवारानिन्द्रदिन्नसूरये समर्प्य कुमारगिरौ निरशनेन वीरनिर्वाणतः ३२७ वर्षे स्वर्गं जग्मतुः । तत्र च भिक्षुराजभूपेन महामहं विधाय तदभिधानलेखनपूर्वकौ स्तूपौ कारितौ । एतयोः पट्टे श्रीइन्द्रदिन्नसूरिः कौशिकगोत्रः, तत्पट्टे आर्यदिन्नसूरिर्गौतमगोत्रीयः, तत्पट्टे च श्रीसिंहगिरिसूरिः कौशिकगोत्रीयः समभवत्, स च जातिस्मृतिज्ञानवान् । तत्पट्टे आर्यवज्रसूरिर्गौतमगोत्रीयस्तत्पट्टे श्रीवज्रसेनसूरिरुत्कौशिकगोत्रीयो निषसाद ।

१२१ श्रीवज्रस्वामि–वज्रसेनयोः कथा—

इह खलु मालवदेशेऽवन्तिकाऽन्तिके तुम्बवनाभिधानं नगरं विलसति । तत्रैको धनाऽऽख्यो लक्ष्मीवाञ्छ्रेष्ठी निवसति स्म । तस्य धनगिरिनामा सूनुरासीत् । तस्यामेव पुर्यां न्यवात्सीच्च धनपालः श्रेष्ठी ।

१–केचन २९१ वर्षे स्वरगादिति मन्वते । २ कचिच्च काकन्द्यां जातत्वात्काकन्दिकावित्यपि दृश्यते ।

एतस्याऽऽर्यसमितनामा पुत्रः सुनन्दाभिधा दुहिता चासीत् । अथैकदा सिंहगिर्याचार्यपार्श्वे संसारमेनमसारं जानान आर्यसमितः प्रवृद्धेन भावेन दीक्षामादद्विवान् । प्रव्रजिते च पुत्रे धनपालः स्वपुत्रीं सुनन्दां योग्यतमेन बहुगुणनिलयेन महर्द्धिकेन धनगिरिणा महताग्रहेणोदवाहयत् । तामुद्वाह्य धर्मरसिको धनगिरिः संसारसुखं भुञ्जानस्तस्थिवान् । अथाऽष्टापदतीर्थोपरि गौतमस्वामिना प्रतिबोधितो वैश्रमणो देवश्च्युत्वा सुनन्दाकुक्षौ गर्भत्वेनोदपद्यत । अस्मिन्नेवाऽवसरेऽतिवैराग्यभावेनोल्लासितमानसो धनगिरिराचार्यसिंहागिरिणा दीक्षितो बभूवान् । ततः पत्यौ दीक्षिते सुनन्दा पुत्रं प्रासोष्ट, सम्बन्धिनश्च तज्जननोत्सवं चक्रिरे । तदोक्तं केनापि चेदद्यैतत्पिता धनगिरिरत्र तिष्ठेत्, तर्ह्येतज्जननमहामहो महीयाञ्जायेत । इत्याकर्ण्य जातमात्रोऽपि शिशुः प्राक्तनसंस्कारयोगाद्ध्यौ । यदेतदपारसंसारनिस्तारः परमार्थविचारे संयममन्तरा जात्वपि नैव सम्भवति, इति मयाऽप्यमुष्मिन्नेव सुपथे वर्त्तितव्यम्, नो चेदधः पतिष्यामि, एवं विमृश्य स शिशुः स्तन्यं पिपासुः सातत्येन रोदितुं लग्नः । तत्प्रतीकारं शतशः कृत्वापि तद्रोदनमपश्यन्ती व्याकुलीभूय कथमपि तन्माता षण्मासान् व्यत्यैत् ।

तत्रैकदा सिंहगिरिराचार्यः शिष्यगणैरनुगत इतस्ततो विहरन् समाययौ । गुर्वादेशेन धनगिरिरार्यसमितेन सत्रा गोचर्यै चचाल । गुरुणाऽभाणि–भोः ! चेदद्य गोचर्यां सचित्तमचित्तं मिश्रं वा लभ्येत, तर्हि दोषाऽदोषविमर्शमकृत्वैव तल्लातव्यम्, इति गुरुवचस्तथास्त्विति निगद्य सुनन्दासदनमगात् । साऽवक्–भोः ! तावकोऽसौ डिम्भकस्त्वमेव गृहाण, यदजस्रं रोरुयते, तद्रोदनेनाऽहं भृशमुद्विग्नास्मि, चेत्तवैव पार्श्वे स्थित्वाऽसौ सुखमनुभवेत्, तर्हि तत एव मानिष्येऽधिकं सुखमहमपि । धनगिरिस्तत्सखीः, तद्बन्धुमार्यसमितं च साक्षीकृत्य झोलिकायां तं शिशुं निधाय धर्मलाभं च दत्त्वा गुरोः पार्श्वमागात् । गुरुश्च तत्पाणेर्झो-

लिकां गृहीत्वा वज्रोपमं भारमवगत्य ‘ वज्र ’ इति तन्नाम चक्रे । तत्र तु मनागपि स नाऽरोदीत् । ततो गुरुस्तं बालं स्तन्यपानाद्यर्थं कस्याश्चिच्छ्राविकायाः समर्प्याऽन्यत्र विजहार । सा च वज्रं पालनायां स्वापयित्वोपाश्रये समानीय साध्वीनां पार्श्वे बहुधा लालयन्ती पालयन्ती चाऽऽसीत् । तत्र च साध्व्य एकादशाङ्गीं पौनःपुन्येनाऽऽवर्त्तयामासुः । तच्छ्रावं श्रावं पालनायां शयान एव वज्र एकादशाङ्गीं शिशिक्षे । ततो वज्रशिशोः शैशवलीलया मृदुवचनेन मनोरमया तन्वा च मोहिता सुनन्दा पुनस्तं वज्रं तामयाचत । साऽवोचत–सुनन्दे ! एष मे गुरुणाऽदायि, अतोऽहं गुर्वाज्ञां विना ते जात्वपि नैव दास्यामि । तदवसरे गुरवोऽपि विहरन्तस्तत्राऽऽययुः । सुनन्दा स्वशिशुं तं ययाचे । धनगिरिरवादीत्–भद्रे ! शिशुदानकाले यदवादीस्तत्किं व्यस्मार्षीः ?, यदस्मिन् साक्षिणोऽपीदानीं सन्ति । तदा गुरुसङ्घादिवर्गोऽपि तां बहुधाऽबोधयत्; परन्तु सर्वेषां वच उपेक्ष्य सा नृपान्तिकमागत्य जगाद–राजन् ! साधवो मे शिशुं जगृहुः, ते न दित्सन्ति, तेभ्यो मे पुत्रं दापय । ततो भूभुजा समाकारितो गुरुः सङ्घेन सार्धं नृपतेः सदसि समेत्य यथा बालमग्रहीत्, तत्सर्वं राजानमवोचत । तदोभयोर्वाच्यं श्रुत्वा नरनाथो न्यायमकरोदेवम्–भोः ! शृणुत, एष बालो निजेच्छया यदन्तिकं गमिष्यति, तस्यैव भविष्यतीति तथ्यं जानीत । तन्निशम्य प्रथमं सुनन्दा स्वपुत्रं नानाऽऽक्रीडनकमाभूषणं मिष्टान्नञ्च ग्रहीतुमाजुहाव, परन्तु तद्दिशमपि वज्रो नैक्षत । ततो धनगिरिर्धर्मध्वजमुन्नीय तमूचे–वत्स ! चारित्रं जिघृक्षसि चेदिदं धर्मध्वजं गृहीष्व । वज्रस्तदैव तद्धस्तात्तदादाय शिरसि धृत्वा नर्त्तितुं लग्नः । प्रमुदितः सङ्घो जय जयारवं व्यतत । गुरुर्वज्रं लात्वोपाश्रयमाययौ । ततः श्रेयसि लग्ने मुहूर्त्ते च शुभङ्करे महामहेन वज्रमदीक्षयद् गुरुः । तदा सुनन्दा व्यमृशत्–यद् भ्रातृ–पति–पुत्रेषु प्रव्राजितेष्वहमपि तदेव शरणं करवाणि चेद्वरमिति निश्चित्य सापि दीक्षामाददात् ।

लिकां गृहीत्वा वज्रोपमं भारमवगत्य ' वज्र ' इति तन्नाम चक्रे । तत्र तु मनागपि स नाऽरोदीत् । ततो गुरुस्तं बालं स्तन्यपानाद्यर्थं कस्याश्चिच्छ्राविकायाः समर्प्याऽन्यत्र विजहार । सा च वज्रं पालनायां स्वापयित्वोपाश्रये समानीय साध्वीनां पार्श्वे बहुधा लालयन्ती पालयन्ती चाऽऽसीत् । तत्र च साध्व्य एकादशाङ्गीं पौनःपुन्येनाऽऽवर्त्तयामासुः । तच्छ्रावं श्रावं पालनायां शयान एव वज्र एकादशाङ्गीं शिशिक्षे । ततो वज्रशिशोः शैशवलीलया मृदुवचनेन मनोरमया तन्वा च मोहिता सुनन्दा पुनस्तं वज्रं तासयाचत । साऽवोचत–सुनन्दे ! एष मे गुरुणाऽदायि, अतोऽहं गुर्वाज्ञां विना ते जात्वपि नैव दास्यामि । तदवसरे गुरवोऽपि विहरन्तस्तत्राऽऽययुः । सुनन्दा स्वशिशुं तं ययाचे । धनगिरिरवादीत्–भद्रे ! शिशुदानकाले यदवादीस्तत्किं व्यस्मार्षीः ?, यदस्मिन् साक्षिणोऽपीदानीं सन्ति । तदा गुरुसङ्घादिवर्गोऽपि तां बहुधाऽबोधयन्; परन्तु सर्वेषां वच उपेक्ष्य सा नृपान्तिकमागत्य जगाद–राजन् ! साधवो मे शिशुं जगृहुः, ते न दित्सन्ति, तेभ्यो मे पुत्रं दापय । ततो भूभुजा समाकारितो गुरुः सङ्घेन सार्धं नृपतेः सदसि समेत्य यथा बालमग्रहीत्, तत्सर्वं राजानमवोचत । तदोभयोर्वाच्यं श्रुत्वा नरनाथो न्यायमकरोदेवम्–भोः ! शृणुत, एष बालो निजेच्छया यदन्तिकं गमिष्यति, तस्यैव भविष्यतीति तथ्यं जानीत । तन्निशम्य प्रथमं सुनन्दा स्वपुत्रं नानाऽऽक्रीडनकमाभूषणं मिष्टान्नञ्च ग्रहीतुमाजुहाव, परन्तु तद्दिशमपि वज्रो नैक्षत । ततो धनगिरिर्धर्मध्वजमुन्नीय तमूचे–वत्स ! चारित्रं जिघृक्षसि चेदिदं धर्मध्वजं गृहाण । वज्रस्तदैव तद्धस्तात्तदादाय शिरसि धृत्वा नर्त्तितुं लग्नः । प्रमुदितः सङ्घो जय जयारवं व्यतत । गुरुर्वज्रं लात्वोपाश्रयमाययौ । ततः श्रेयसि लग्ने मुहूर्त्ते च शुभङ्करे महामहेन वज्रमदीक्षयद् गुरुः । तदा सुनन्दा व्यमृशत्–यद् भ्रातृ–पति–पुत्रेषु प्रव्रजितेष्वहमपि तदेव शरणं करवाणि चेद्वरमिति निश्चित्य सापि दीक्षामाददात् ।

ज्ञपन्—गुरो ! भवतः कृपया वज्रो वाचनादाने पटीयानस्ति, अतो नः सर्वेषां वाचनाचार्यमयमेव विधीयताम् । ततो गुरुर्वज्रमुनिं वाचनाचार्यमकरोत् । अथैनं वज्रमुनिं दशपुर ( मन्दसोर ) नगरादवन्तिकायां भद्रगुप्तसूरिपार्श्वेऽवशिष्टपूर्वाध्ययनार्थं प्रैषीद् गुरुः । ततः प्रस्थाय वज्रमुनिरुज्जयिनीपुरीमागत्य तां क्षणदां बहिरध्यतिष्ठत् । तस्यां रजन्यामेव भद्रगुप्तसूरिः स्वप्ने किलैवमपश्यत्—यन्मामकं क्षीरपूर्णपात्रं कोऽप्यतिथिरपासीत् । ततः प्राभातिकप्रतिक्रमणवेलायां स साधूनाचष्ट—भोः ! अहमस्यां रात्रावद्भुतं स्वप्नमद्राक्षम्, प्रग एव कोऽपि साधुरेष्यति, पठिष्यति च मत्पार्श्वे पूर्वान् । इति परस्पराऽऽलापो यावद् भवति, तावद् वज्रमुनिस्तत्राऽऽगत्य तमभिवन्द्य, गुरुप्रेषणादिवृत्तान्तमशेषं न्यवेदयत् । ततो भद्रगुप्ताचार्यस्तमाश्वास्य यथावत्पूर्वानध्याप्य दशपूर्वधरमकार्षीत् । ततः सिद्धान्तानुज्ञार्थमार्यसिंहगिरिपार्श्वे प्रैषीच्च । गुरुश्चानुयोगानुज्ञां दत्त्वा वज्रमुनेराचार्यपदं ददिवान् । पूर्वसङ्गतिदेवाश्च तत्र महामहं चक्रुः । अथ पाटलिपुत्राख्ये नगरे आर्यसिंहगिर्याचार्ये द्यां याते सति वज्रस्वामी सपरिवार आगात् । तत्र च साध्वीनां मुखारविन्दाद्वज्रस्वामिनो रूपं गुणांश्च श्रावं श्रावं जातानुरागा धनाभिधश्रेष्ठिनः पुत्री पितरं चचक्षे—पितः ! मदुद्वाहो वज्रस्वामिना सहैव विधीयताम्, यदहं तमेव प्रागवृणाम् । अन्यथा वह्नावेव प्रवेक्ष्यामीति तथ्यं जानीहि । ततः श्रेष्ठी लक्षदीनारसहितां स्वपुत्रीं वज्रस्वामिनः समीपमानीय प्रार्थयामास—भगवन् ! एषा मे दुहिता त्वामेव विवरीषति, अत एनां लक्षदीनारसहितां गृह्णीष्व । ततो वज्रस्वामी तां रुक्मिणीं प्रतिबोध्य, विषयभोगविमुखीं च विधाय तत्कालमेव दीक्षां ददौ । तत्पिता च तद्दीनारलक्षं तदीयदीक्षामहे व्ययैत् ।

अथैकदा महत्यवग्राहे जाते चराचरप्राणिसंहारी भयङ्करो महादुष्कालः पपात । तदा वज्रस्वामी आचाराङ्गसूत्रीयमहपरिज्ञाऽध्ययना-

दाकाशगामिनीं विद्यामुद्धृत्यैकस्मिन् महापटे शय्यातरेण सहितं श्रीसङ्घं समुपावेश्य व्योमवर्त्मना महापुरीं निनाय । तत्र च सौभिक्षेण सकलः सङ्घः सुखेन दिनानि गमयन्नासीत् । तत्रत्यो राज्ञा सौगतत्वात्पर्युषणपर्वादिदिनेऽपि पुष्पाणां त्रोटनं निषिषेध । अतो भगवदर्चार्थं पुष्पाणि लातुं बाधितः सङ्घः श्रीवज्रस्वामिनमाख्यातुमलगत्—प्रभो ! अत्र तु राज्ञा पुष्पाऽऽदानं सर्वथा प्रत्यरोधि, अतः प्रभोरर्चनं कथं कुर्याम् ?, वज्रस्वामी तदाकर्ण्य सङ्घमाश्वास्य तारापथेन माहेश्वरीं पुरीमीत्वा, क्षुल्लकाहिमवत्पर्वतोपरि लक्ष्म्याः पार्श्वमगात् । सा सहर्षं तस्मै सहस्रपत्रं कमलं ददौ, तल्लात्वा पुनर्माहेश्वरीमेत्य कुलसिंहाऽऽरामिकप्रदत्तविंशतिलक्षसुरभिसुमानि गृहीत्वा, जृम्भकरचितविमानाऽऽसीनो दैविकनृत्यगीतवाद्यानि शृण्वन् वज्रस्वामी पुनर्महापुरीमागात् । तदा समस्तः सङ्घः प्रमोदभागभूत् । ततो महीयसा भावेन स संघः प्रभुमानर्च । अथैनां चमत्कृतिं वीक्ष्य समागतं सौगतं नरनाथं जनताभिः सार्धं प्रतिबोध्य वज्रस्वामी जैनमकरोत् । एकदा स सूरिपुङ्गवो ग्रामानुग्रामं विहरन् दक्षिणदेशमागत्य, कस्यचिन्नगरस्य शुद्धोद्याने तस्थिवान् । तत्र च शैत्याधिक्यात्तस्य श्लेष्मा जातस्तच्छान्त्यै शुण्ठिकामानाययाञ्चक्रे । अवशिष्टामेकां ग्रन्थिं पुनश्चिखादिषया कर्णोपरि न्यधात्, परन्तु विस्मृत्या तां नाऽघसत् । सायन्तनप्रतिलेखनकाले मुखवस्त्रेणाङ्गानि परिमार्जन् अधःपतितां तामुदीक्ष्य दध्यौ—अहो ! इयत्या विस्मृत्या ममायुः शेषो दुष्कालश्चामुष्मिन् वर्षे पतिष्यतीति सूच्यते । इत्यवधार्य वज्रसेनाभिधशिष्यस्याऽऽचार्यपदं प्रदाय, त्वमिदानीं कोङ्कणदेशदिशि याहि, इत्यादिश्य चाऽभ्यधात्—भोः ! यदा सुकालः कदा भवितेति कश्चित्पृच्छेत्तदैवं वाच्यम्—यर्हि लक्षमूल्यक्रीतं शेटकपादप्रमितं तण्डुलं पक्तुं कस्यापि वेश्मनि हण्डिकां चुल्लिकोपरि स्थापयिष्यति,

तदैव सुभिक्षो भविता । ततो गुर्वादेशेन वज्रसेनसूरिः कोङ्कणदिशि ययौ । वज्रस्वामी च सम्प्राप्ते दुर्भिक्षे स्वसाधून् विद्यापिण्डं भोजयित्वा जगाद्–भोः ! द्वादश वर्षाणि विद्यापिण्डाऽशनादनशनमेव सर्वेषां श्रेयस्करं मन्ये । तच्छ्रुत्वा सर्वेषु साधुषु तथाकर्त्तुमुद्यतेषु वज्रस्वामी तैः सह कस्यचिद् गिरेर्दिशि व्रजन्मार्गे दीक्षार्थिनं कमपि बालकं दीक्षयित्वा व्याजहे— वयं सर्वेऽनशनं चिकीर्षवः पर्वतोपरि व्रजामः, शिशुत्वान्मृदुत्वाच्च त्वमत्रैव तिष्ठ । एवं गुरुणाऽभिहितोऽपि बालमुनिः सहैव गन्तुमाजग्रहे, परन्तु कथमपि तं तत्रैव मुक्त्वा ते सर्वे पुरोवर्त्तिनगोपरि ययुः । तदनु सोऽपि समागत्य तस्यैव गिरेरधस्तात्पाषाणशिलोपरि पादपोपगमनमनशनं विधाय, शुभध्यानेन मृत्वा देवोऽभवत् । वज्रस्वामी श्रुतोपयोगेन सर्वं विदित्वा, साधूनामग्रे तं भृशं प्रशस्य सर्वैः साधुभिः सह निरवद्यभूमावागत्याऽनशनं विदधौ । उपेक्षितजीवितमरणास्ते सकलाः समाधिना कालं कृत्वा देवलोकमापुः । प्राक्तनस्नेहादिन्द्रादयो देवा रथाऽऽरूढास्त्रिःप्रदक्षिणीकृत्यैनं ववन्दिरे । रथावर्त्तनात्तद्गिरे ‘ रथावर्त्त ’ नाम लोके प्रासिध्यत् । अमुष्मिन् स्वर्गते दशमः पूर्वस्तुर्यार्धनाराचसंहननं च व्यच्छिदत् । इत्थं वज्रस्वामी कौटिकगणीयो दशपूर्वधारिणां चरमः, शैशवादेव जातिस्मृतिमान्, प्रावचनिकत्व–धर्मकथित्व–विद्याबलित्वेन महाप्राभाविकश्च बोभोति स्म । अमुष्मात् ‘ अज्जवइरी ’ ( आर्यवज्री ) शाखा प्राकट्यं प्राप । असौ युगप्रधानपट्टावलीग्रन्थानुसारेण प्रथमोदयस्याऽष्टादशो युगप्रधानो बभूवान् । अमुष्य वीरनिर्वाणतः ४९६ विक्रमीये च २६ तमेऽब्दे जन्म, वीर० ५०४

१–असौ गिरिः प्रायो दक्षिणमालवदेशीयां विदिशां ( भिल्सां ) समया किलाऽऽसीत् । आचाराङ्गनिर्युक्तौ ‘ रहावत्तनगं ’ इत्युल्लेखात् । आचाराङ्गनिर्युक्तिरचयिता श्रुतकेवली भद्रबाहुस्वामीति मन्येत, तर्हि वज्रस्वामिनः स्वर्गमनात्प्रागपि स गिरीरथावर्त्तनामाऽऽसीदिति सङ्गच्छेत ।

विक्र० ३४ तमे वर्षे दीक्षा, वीर० ५४८ विक्र० ७६ तमे हायने युगप्रधानपदाप्तिः, वीर० ५८४ विक्र० ११४ तमे वत्सरे स्वर्गवासो जज्ञे । सुहस्तिसूरिवज्रस्वामिनावन्तरा १ गुणसुन्दरसूरि–२ कालिकाचार्य–३ स्कन्दिलाचार्य–४ रेवतिमित्र–५ धर्मसूरि–६ भद्रगुप्ताचार्य–७ श्रीगुप्ताचार्या एते युगप्रधाना बभूवुः, इति कियत्यः पट्टावल्यो निगदन्ति ।

वज्रसेनसूरिरपि विहरन् क्रमशः सोपारकं नगरमागत्य, जिनदत्तमहेभ्यस्य पत्न्या ईश्वरीश्राविकायाः सदने समायातः । तमायातं विलोक्य प्रहृष्यन्ती सा यथावदभिवन्द्य तमाख्यत्—' स्वामिन् ! सत्यपि धनप्राचुर्ये लक्षमूल्यदानेनाऽप्यन्नं नैव लभ्यते, तद्विनामितैर्धनैरप्यलम् । अमुनैव कष्टेनाऽद्याऽहं महता यत्नेन लक्षमूल्यैः शेटकतुरीयपादमितं तण्डुलं प्राप्य, पक्त्वा तत्र च विषं संमिश्र्य तदशनात्सपरिवारो मुमूर्षुरस्मि । ' इत्याकर्ण्य वज्रसेनसूरिणोक्तम्—धर्मशीले ! एवं माकृथाः, धीरा भव, यतो वज्रस्वामिना पुरैवमवादि ' यदा लक्षमूल्यप्राप्तयत्किञ्चिदन्नपाकाय चुल्लिकोपरि चटितां हण्डिकां द्रक्ष्यसि, तर्ह्येव सुभिक्षो भविता ' अत एनां कदिच्छां विजहाहि । ईश्वरी जगाद–भवदुक्तं प्रमाणमेव तत्र मनागपि नाऽहं संशये, परमेष प्रासुकाऽऽहारस्तत्रभवता गृह्यताम् । तदत्याग्रहात्सूरिस्तमग्रहीत् । ततो दिनान्तप्रायवेलायामेव समुद्रतीरे धान्यभृतां[1] पोतानां पञ्चशती समागच्छत् । सर्वे लोका यथायोग्यं धान्यानि क्रीत्वा स्वास्थ्यं प्रापुः । जिनदत्तमहेभ्यो भार्यया नागेन्द्र–निर्वृति–चन्द्र–विद्याधराख्यैश्चतुर्भिः पुत्रैश्च सत्रा वैराग्यभावेन वज्रसेनाचार्यपार्श्वे दीक्षामादत्त । तेषां नागेन्द्रादयश्चत्वार आचार्यपदभाजः किञ्चिदूनदशपूर्वधरा जाताः, अमीभ्य एव नागेन्द्री–नैर्वृती–चान्द्री–वैद्याधरीति चतस्रः शाखा निरगच्छन् । आर्यवज्रसेनो नन्दवर्षाणि

---

१ ते पोता युगन्धरी( जुआर )धान्यैर्भृता इत्यपि क्वचिद् दृश्यते ।

गृहवासे, ११६ श्रामण्ये, ३ युगप्राधान्ये चैवं सकलायुः १२८ वर्षाणि सम्पूर्य वीरनिर्वाणतः ६२० तमे वत्सरे द्यामियाय । वज्रस्वामिवज्रसेनयोर्मध्ये आर्यरक्षितदुर्बलिकापुष्पमित्रौ युगप्रधानावभूताम् ।

१२२ त्रैराशिकशाखोत्पत्तिः--

अथाग्रे येन यानि गण–शाखा–कुलानि निर्गतानि तानि प्रदर्श्यन्ते–श्रीभद्रबाहोः शिष्याद् गोदासाद् 'गोदासगणः' समुत्पेदे । ततस्ताम्रलिप्तिका, कोटीवर्षिका, पुण्ड्रवर्धनिका. दासीखर्बटिका इमाश्चतस्रः शाखाः पप्रथिरे । महागिरिशिष्योत्तरबलिसहाभ्यां 'उत्तरबलिसह' गणः प्रासिध्यात्, तत्र कोशाम्बिका, सूक्तिप्रत्यया, कौटुम्बिनी, चन्द्रनागरी एताश्चतस्रः शाखा अभूवन् । आर्यमहागिरेः शिष्याद्रोहगुप्तषडुलूकात्त्रैराशिकी शाखा निरगाच्छ्रीवीरनिर्वाणतः ५४४ तमे वर्षे । तथाहि—एकदा श्रीगुप्तसूरिरन्तरञ्जिकापुरीमायातः । तत्रैको महावादी पोट्टशालनामा तापसोऽप्यागतः । अयं हि वृश्चिक–सरीसृप–मूषक–मृग–शूकर–काक–पक्षीति सप्त प्राण्युत्पादिकां विद्यां वेत्ति । तेनातिदृप्तो लोकानेवं कथयति–कदाचिदुदरे स्फुटिते विद्या एता न निर्गच्छेयुः, इति हेतोः प्रतिबद्धोदरस्तिष्ठामि । जम्बूकलशं दर्शयन्नाचष्टे–किलैवं यदस्मिञ्जम्बूद्वीपे स नैवास्ति यो मां विद्यावादे जयेत् । दर्पाच्चैवं नृपाग्रे जल्पित्वा सर्वत्र नगरे पटहं वादयामास–'चेदस्ति कोऽपि विद्याभिमानी स नृपसदसि मां जयतु, नो चेन्मे विजयपत्रं ददातु' तन्निशम्य गोचर्यै समायातो रोहगुप्तमुनिरहमस्मि तेन सह विवदिषुः, इत्युच्चार्य पटहमरौत्सीत् । ततो गुर्वन्तिकमागत्य समूचे–तत्सर्वम् । गुरुरुवाच–नैतत्साध्वकृथाः, स मिथ्यात्वी तापसः क्रोधाद्विद्यायोगेन त्वामपकरिष्यति । सोऽवदत्–त्वादृशे जैनाचार्ये विलसति तस्मै विजयपत्रदानमपि हानिकरं जाने, अतो मामनुजानीहि, भवत्कृपया स किमपि कर्त्तुं नैव शक्ष्यति । गुरुस्तस्मै मयूरी–नकुली–विडाली–व्याघ्री–सिंही–उलूकी–

श्येनीति सप्त विद्या अदात्, अभ्यधाच्च—चेदधिकमुपसर्गं स विदध्यात्, तर्हि मन्त्रितमेतं रजोहरणं भ्रामयित्वा तच्छान्तिः कर्त्तव्या। अथाऽऽचार्यशिक्षितो रोहगुप्तमुनिर्बलश्रीनामकनृपसभायामाजगाम, तत्राऽऽख्यत्तापसम्—भोः ! स्ववादं प्रकटीकुरु। योगी जगाद—मया राशिद्वयी मन्यते—जीवराशिरजीवराशिश्च। रोहगुप्तेनाऽचिन्ति—' यद्यप्येनत्सर्वानुमतमाचष्टे, परमिदानीमेतत्स्वीकारे तस्यैव जयं मम च पराजयं वदिष्यन्ति सभ्याः, अतो मया ततो विपरीतमेव गदनीयम्।' इत्यवधार्य जगाद—भोः ! राशिद्वयकथनमसङ्गतमस्ति, यतः जीवराशिरजीवराशिर्नोजीवराशिश्चेति राशित्रय्या अपि सत्वात्। तापसोऽवदत्—नास्ति तृतीयो राशिः, प्रतिपादयसि चेद्युक्तिः प्रदर्श्यताम्, युक्तिं विना किमपि नैव प्रमीयते। तदा रोहगुप्तमुनिरेकं सूत्रं वंटयित्वा भूमौ निधाय तस्मिँश्चलिते तमब्रवीत्—भोः ! दृश्यतामयमेव नोजीवात्मकस्तृतीयो राशिः, एतस्मिँश्चलनादिकं प्रत्यक्षं दृश्यते। अतो जीवाजीवान्यतरत्वेन वक्तुं न शक्यते तर्हि नोजीवराशिस्तृतीयो मन्यताम्। इत्थं सकलं जगत्त्रैराशिकमस्ति, इति सर्वानुमतं त्वयापि मन्तव्यमेव। इति कल्पितयुक्त्या तं तापसं निरुत्तरीकृत्य व्यजेष्ट। ततस्तापसो विद्यया महतो वृश्चिकानुदपादयत्, ताँश्चलतो विलोकमानाः सर्वे सभ्यास्त्रेसुः। रोहगुप्तोऽपि मयूराञ्जनयामास, ते तान् वृश्चिकान् खादितवन्तः। ततस्तापसेन सरीसृपेषु महाकायेषु निर्मितेषु गुरुदत्तविद्यया रोहगुप्तेन नकुला असृज्यन्त। ततो योगी मूषकान् ससर्ज, रोहगुप्तस्तद्भक्षणाय महत ओतूनजीजनत्। योगी तीक्ष्णशृङ्गान्मृगान् निर्मितवान्, साधुरपि तद्विनाशाय चित्रकान् व्यकरोत्। योगी महारदाञ्छूकराञ्जनितवान्, तज्जिघांसया स सिंहान् प्रकटितवान्। योगिनिर्मिताऽमितकाकाविघाताय रोहगुप्त उलूकानुत्पादितवान्। पुनर्योग्युत्पादितपक्षिवृन्दभक्षणाय मुनिः श्येनान् सृष्टवान्। इत्थं विद्यास्वपि हारितो योगी गर्दभीं विद्यां

प्रायुङ्क्त, ता इतस्ततः पादौ क्षिपन्तीर्विलोक्य रोहगुप्तो रजोहरणमवभ्रामत्, ततस्तदीया सा विनाशमगात् । इत्थं योगिनं जित्वा बहुलोकैरनुगतो रोहगुप्तो गुर्वन्तिकमागात् ।

गुरुरपृच्छत्–कथमजैषीः ?, सोवाच–त्रिराशिस्थापनया । गुरुरुवाच–नैतत्साध्वकारि, शास्त्रे राशिद्वयमेव विद्यते, त्वया तत्रितयं व्यवस्थापितमतस्त्वं तत्र गत्वा सङ्घसमक्षं मिथ्यादुष्कृतं देहि, नो चेदुत्सूत्रभाषणादर्हदाज्ञाविघातनात्पापीयान् भविष्यसि । शिष्योऽवदत्—प्रभो ! एवं करणेन महती मे हानिर्भविष्यति, अतोऽहमेवं नैव विधित्सामि, मयोत्सूत्रं नाऽभाषि, राशिस्तु त्रयात्मिकैवास्ति । गुरुरजल्पत्—रे ! सत्यमप्युक्तं न मनुषे, मयापि सह विवादं चिकीर्षसि, तर्हि राज्ञः परिषदि त्वया मया च गन्तव्यम्, तमेव साक्षीकृत्य विवादं विधास्यावः । इति निगद्य शिष्येण सत्रा नृपपरिषदमागत्य व्याजहार—राजन् ! एष योगिनं विजेतुं यत्त्रैराशिकमतमस्थापयत, तदलीकमकरोत्, परमेष तन्नाङ्गीकुरुते, मयापि सह विवदिषति, अतस्त्वमावयोर्वादे साक्षी भव । राजोवाच–भविष्यामि साक्षी, प्रारभ्यतां विवादः । ततस्तौ मिथः षण्मासीं विवादमकुषातां जयपराजयौ कोऽपि नाप । अजल्पद्राजा–महान्तौ ! युवयोर्वादे षण्मासी जाता, निर्णयस्तु नैव जज्ञे, अतःपरं स्थातुं नेच्छामि, यतो मे राज्यकार्यं हीयते । गुरराख्यत्–श्वस्तन्यां सभायामवश्यमेवमेतन्निर्णीय समापयिष्यामि । प्रभाते जाते सभामागतो गुरुस्तमब्रवीत्—भोः ! आवां षण्मासीं विवादं कृतवन्तौ बहुधा युक्तिदर्शनेऽपि कदाग्रहं नो मुञ्चसि चेत्तर्हि कुत्रिकापणं व्रज, तत्र त्रिभुवनगतं सद्वस्तु सर्वं मिलति, त्वमपि नोजीवं समानीय लोकं दर्शय, तदा त्वदुक्तं राशित्रयीं प्रमिणुयाम् । इति गुरुणा भणितं मत्वा स कुत्रिकापणमागत्य जीवे मार्गिते देवो मूषकं ददिवान्, अजीवाऽर्थने प्रस्तरमदात् । नोजीवे याचिते तु प्रागानीतमेव पुनः पुनरयच्छत्,

नोजीवस्य गगनकुसुमकल्पत्वात् । तदा व्योमवागजायत–यदस्मिञ्जगति जीवाजीवात्मकौ द्वावेव राशी स्तः. नोजीवात्मकस्तृतीयो राशिस्तु नैवास्ति ! तन्निशम्य सर्वे सभ्याः गुरूक्तं साधु मेनिरे । गुरुणोक्तम्—रे ! अनया व्योमगिरा प्रत्यबुध्यथाश्चेन्मिथ्यादुष्कृतं ददस्व । रोहगुप्तोऽजल्पत्–मया यद्वादि तदेव सत्यं तदन्यन्नैव मन्ये। तदा चतुश्चत्वारिंशदधिकपृच्छाशतेन निरुत्तरीकृतोऽपि रोहगुप्तो निजहठममुञ्चन् प्रकुपितेन गुरुणा शिरसि खेलभस्म प्रक्षिप्य गच्छाद्बहिश्चक्रे । स वैशेषिकं मतं प्राकाशयत् । तत्र नव द्रव्याणि, सप्तदशगुणाः, पञ्चकर्माणि, त्रीणि सामान्यानि, एको विशेषः समवायश्चेति षडेव पदार्थाः, एषामवान्तरभेदाश्चत्वारिंशदधिकशतानि जायन्ते । ततो लोके षट्पदार्थप्ररूपकत्वादुलूकगोत्रोद्भवत्वाच्च 'षडुलूक' नाम्ना पप्रथे, तत एव प्रववृते च 'त्रैराशिकी'–शाखा ।

१२३ मध्यमाशाखोत्पत्तिः—

आर्यरोहणत 'उद्देहगणः' तत्रोदुम्बरीया–मासपूरिका–मतिप्रातिका–प्रज्ञपात्तिकाश्चतस्रः शाखाः, नागभूत–सोमभूतिक–आर्द्रगच्छ–हस्तलीय–नन्दीय–परिहासका इति षट् कुलान्यभवन् । आर्यभद्रयशसः 'उडुपाटिको गणः' तस्मिंश्चम्पीया–भद्रार्यिका–काकन्दीया–मेहलिजियाः शाखाः, भद्रयशस्क–भद्रगुप्तिक–यशोभद्र इति त्रीणि कुलानि प्रथितानि । श्रीकामर्द्धिकस्थविराद् वैश्यपाटिको गणः, तदीयाः श्रावस्तिका–राज्यपालिका–अन्तरीया–क्षेमिलियाः शाखाः । गणिक–मेधिक–कामर्द्धिक–इन्द्रपुरकाणीति चत्वारि कुलान्यभूवन् । सुस्थित–सुप्रतिबुद्धाभ्यां 'कोटिको गणः' एतस्मिन् उच्चनागरी–वैद्याधरी–वाज्री–मध्यमाश्चतस्रः शाखाः । ब्रह्मलीय–वत्सलीय–वाणिज्य–प्रश्नवाहनकानि चत्वारि कुलानि जज्ञिरे । प्रश्नवाहनकुलाच्च 'मलधारगच्छः' समजनि । ऋषिगुप्तस्थविरतो मानवगणः । तत्र काश्यपार्जिका–गौतमीया–वाशि-

ष्ठिका–सौराष्ट्रिकाः शाखाः। ऋषिगुप्तिक–ऋषिदत्तक–अभिजयन्त इति कुलानि बभूवुः। आर्यश्रीगुप्ततः 'चारणगणः'। एतस्मिंश्च हारितमालाकारी–शङ्काशिका–गवेधुका–विद्यानागरीति चतस्रः शाखाः। वत्सलीय–प्रीतिधार्मिक–हारीत–पुष्पमित्रीय–मालीय–आर्यचेटक–कृष्णसखेति सप्त कुलानि जातानि। आर्यप्रियग्रन्थसूरितो मध्यमा शाखा निरगच्छत्, तथाहि–श्रीहर्षपुरे (अजमेरनगरे) जिनचैत्यानि त्रीणि शतानि, शिवालयानि चतुःशतानि. अष्टसहस्रमितानि भूसुरादिसदनानि, श्राद्धगृहाणि षट्त्रिंशत्सहस्राणि, उपवनानि नवशतानि, वापिकाः सप्तशतानि, दानशालाश्च सप्तशतानि सन्ति। राजा च सुभटपालोऽस्ति। तत्रैकदा द्विजा यज्ञं प्रारेभिरे। तदवसरे प्रियग्रन्थसूरिस्तत्राऽऽययौ। स हि द्विजैरारब्धं हिंसामयं यज्ञं श्रुत्वा वासक्षेपमभिमन्त्र्य श्राद्धपाणौ दत्त्वाऽभ्यधात्—भोः! यज्ञे हनिष्यमाणपशूपरि क्षिपत। तेऽपि तत्र गत्वा तथाविहितवन्तः। प्रक्षिप्तवासचूर्णप्रभावेण तस्य होमीयाऽजस्याऽङ्गेऽम्बिका प्राविशत्। तेन सोऽजस्तत्कालं व्योम्नि समुड्डीय नृगिरा वक्तुमारेभे–रे विप्राः! यथा यूयं मादृशानमन्तूञ्जीवान्निहथ, तथाऽहमपि वः सकलान् हिंस्यां तर्हि किं स्यात्?, परन्तु युष्मानिव मां दया नोज्झति। अतो वो हितं ब्रवीमि—ये मूढाः पशून् हन्ति, ते पशुघातिनस्तदङ्गरोमप्रमितवर्षसहस्रं नरके तिष्ठन्ति। ये पुनरेनं रक्षन्ति, ते मेरुतुल्यस्वर्णदानात्समग्रपृथ्वीदानाच्चाऽधिकं फलं प्राप्नुवन्ति। किञ्चाऽभयदानफलन्त्वक्षय्यमेवास्ति, इति सर्वाधिकं न्यगादि शास्त्रकृद्भिः। द्विजा ऊचिरे–त्वं कोऽसि?, कथं वा यज्ञविहन्तुमेवमाचक्षे?। अजोऽवदत्–अहं हुताशनदेवोऽस्मि, अजो हि मे वाहनमस्ति। 'पशुहत्यापापेन वः समेषां घोरनरके नियतं वासो भविष्यति' अतो वो बोधयामि। विप्रा ऊचिरे–देव! धर्मार्थमेतान्निहन्मस्तत्र कथं पापं लगिष्यति?, नरके वा वसतिर्भाविनी?। देवोऽजल्पत्—हिंसनाज्जीवानां धर्मो जा-

स्वपि मनागपि नैव। चेदस्मिन्नाधिकं बुभुत्सथ, तर्हि समागतं प्रियग्रन्थसूरिं पृच्छत। ततः सर्वे विप्रास्तत्र गत्वा तमपृच्छन्—प्रभो! शुद्धो धर्मः कीदृशोऽस्ति ?, सूरिरार्हतं शुद्धं धर्ममहिंसालक्षणं तानब्रवीत्। तन्निशम्य सर्वे विप्रास्तमङ्गीकृतवन्तः, एतस्मादेव मध्यमा शाखा निरगादिति।

१२४ ब्रह्मद्वीपिकाशाखोत्पत्तिः—

विद्याधरगोपालस्थविराद्विद्याधरी, आर्यशान्तिसैनिकात्सैनिका, आर्यतापसात्तापसी, आर्यकुबेरात्कौबेरी, आर्यऋषिपालाद् ऋषिपालिका, आर्यवज्रस्थविराच्च वाज्री शाखा प्राकट्यं निनाय। आर्यसमितसूरेर्ब्रह्मद्वीपिका शाखा निरगात्, तथाहि—आभीरदेशेऽचलपुराऽऽसन्ने कन्ना—वेन्नानाम्न्यौ नद्यौ स्तः। तयोर्मध्ये ब्रह्मद्वीपो वर्त्तते। तत्र तापसानां पञ्चशती तिष्ठति। तेष्वेकः पादलेपप्रयोगेण परिहितपादुकस्ते नद्यावुत्तीर्य, अनार्द्रचरण एव नगरमागत्य पारणं कुरुते। लोकाश्च तमित्थं प्रशंसन्ति—यदस्य कीदृशी सिद्धिर्यथा भूमाविवाऽगाधजलेऽपि चलति। तद्धौर्त्यकलया बहवो जैना अपि मिथ्यात्विनो जज्ञिरे। तदवसरे तत्र श्राद्धाः श्रीसमितसूरिमाकारयन्। आगतं तमापृच्छञ्छ्राद्धाः—एतस्मिँस्तापसे कीदृशी तपःशक्तिः ?, गुरुरुवाच—कापि नास्ति, केवलं पादलेपप्रयोगेणैव लोकान् वञ्चयते। अत्र संशयश्चेदेनं 'स्वगृहे भोक्तुं निमन्त्र्य पादौ चोष्णवारिणा संधाव्य भोजयत, ततो वेदिष्यथ कथमसौ नदीं तरति ?, इति तेऽपि तथाचक्रुः। भोजनान्ते तेन सह श्राद्धा अपि नदीतीरमागताः। योगी च दध्यौ—चेत्किञ्चिदपि लेपस्तद्योगात्तरिष्यामीति धिया प्रागिव चलितुं प्राविशत; परन्तु लेपविरहात्पश्यत्सु सर्वेषु स ब्रूडितुं लग्नः। तदोपहसन्तः श्राद्धा दयया तमुद्धृतवन्तः। लोके तस्य महती निन्दा प्रससार। लोकानां प्रतिबुबोधयिषया सूरिरपि तत्राऽऽगात्,

अङ्गुलिं ध्वनयन्नुवाच–वेन्ने ! परम्पारं जिगमिषोर्मे मार्गं देहि । तदैव तस्यास्तटद्वयं मिमेल, लोका विस्मयमापुः । सूरिश्च लोकैः सह स्थलवद् ब्रह्मद्वीपमागत्य, तापसपञ्चशतीं प्रतिबोध्य, संदीक्ष्य तैः सह स्वस्थानमागात् । तैरेव ब्रह्मद्वीपिका शाखा जाता । आर्यवज्रसेनतो नागिली, पद्मसूरेः पद्मा, आर्यरथाज्जयन्ती, आर्यपोमिलात्पोमिला शाखा चाऽऽविरासीत् । तत्र समानवाचनाऽऽचारक्रियापरस्परापेक्षाऽनेककौलिकश्रमणसमूहो गण उच्यते । तत्तद्विशिष्टपुरुषीया, विवक्षितैकपुरुषीया वा सन्ततिपरम्परा शाखा निगद्यते । वाचनाऽऽचारक्रियासाम्यमुपेयुषामनेकगच्छानां समुदायः कुलं कथ्यते ।

एतस्याः स्थविरावल्याः प्रान्ते प्रक्षिप्तचतुर्दशप्राकृतगाथोक्तस्थविरेभ्यो गौतमफल्गुमित्र ( १ ) वासिष्ठ–धनगिरि ( २ ) कुत्स–शिवभूति ( ३ ) कौशिक–दुर्जयन्त ( ४ ) कौशिक–कृष्ण ( ५ ) काश्यप–भद्र ( ६ ) काश्यप–नक्षत्र ( ७ ) काश्यप–रक्षित ( ८ ) गौतमार्यनाग ( ९ ) वासिष्ठ–जेहिल ( १० ) माठर–विष्णु ( ११ ) गौतम–कालक ( १२ ) गौतम–संपलित ( १३ ) गौतम–भद्रक ( १४ ) गौतमार्यवृद्ध ( १५ ) गौतम–सङ्घपालित ( १६ ) काश्यपार्यहस्ती ( १७ ) सुव्रतार्यधर्म ( १८ ) काश्यप–हस्त ( १९ ) काश्यप–सिंह ( २० ) काश्यप–धर्म ( २१ ) गौतमार्यजम्बू ( २२ ) काश्यप–नन्दित ( २३ ) माठर–देशिगणिक्षमाश्रमण ( २४ ) वत्स–स्थिरगुप्त ( २५ ) गणिकुमारधर्म (२६) काश्यप–देवर्द्धिक्षमाश्रमणेभ्यः (२७) त्रिकरणयोगेन नमोऽस्तु ।



१२६ आर्यरक्षितसूरि-निबन्धः—

प्रस्तुतपट्टावल्यां यद्यप्यार्यरक्षितादीनां नाम नोदलेखि, परमेते स्थविराः श्रुतधराः शासनप्रभावकाश्चाऽऽसन् । अतएवैषामपि प्रासङ्गिकं किञ्चित्स्वरूपं ग्रन्थान्तरादिह लिख्यते । अथ मालवे जनपदे दशपुरे ( मन्दसोरनगरे ) नरपतिरुदयनाभिध आसीत् । तस्य च पुरोहितः सोमदेवाऽऽख्यस्तत्पत्नी च रुद्रसोमाऽभिधाना तत्रैव न्यवात्सीत् । अमुष्याऽऽर्यरक्षितफल्गुरक्षिताऽभिधौ पुत्रावभूताम् । द्वावपि वेदाङ्गादिविद्यासु पारदृश्वानौ जातौ । ज्यायांश्च पाटलीपुत्रनगरं गत्वा वेदोपनिषदोर्वैशिष्ट्येन नैपुण्यमधिजग्मिवान् । ततो गुरुमापृच्छ्य गृहाऽऽगतमेनं भूपतिर्महताऽऽडम्बरेण पौरजनैः सत्रा पुरं प्रावेश्य सदकरोत् । नृपतिदत्तमानपत्रेण सह निजसदनमागत्य पित्रादीन् प्रणम्य मातरं प्रणनाम । सा च विच्छायवदना सती स्वागतमात्रमापृच्छ्य मौनमाशिश्रियत । ततस्तां हर्षस्थानेऽप्युदासीनामुपलक्ष्य तत्कारणमप्राक्षीत् । माताऽभ्यधात् पुत्र ! यान्येतानि शास्त्राण्यध्यगीष्ठास्तानि सर्वाणि हिंसाप्राधान्याद् गर्हितानि संसारपरिवर्धकान्येव सन्ति,तदध्ययनेन मे कथङ्कारं हर्षो जायेत ?, चेदात्मविशोधकं भवसन्ततिच्छेदकरं च दृष्टिवादमधीत्य समायातो भवेस्तर्हि मनो मे मोमुद्येत । तेनोक्तम्—मातः ! इदानीमपि तवाऽऽज्ञां परीतुं शक्नोमि, परन्तु तदध्यापयिता कः कुत्र च वरीवर्ति ? । माताऽवदत्—एतत्पाठयिता तोसलीपुत्रजैनाचार्य इतः कियद्दूरे इक्षुवाटके सपरिवारो निवसति, तदन्तिकं गत्वा तमधीष्व । मातुरादेशं शिरसि निधाय प्रत्यूषस्येव स गृहान्निरगात् । अधिमार्गं कश्चिदेकः सार्धनवेक्षुपाणिः पितृसखो विप्रोऽमिलत् । सोऽतिप्रेम्णा तं जगाद—वत्स ! त्वदर्थमेवैतानिक्षूनानयम् । अमुना शकुनेनेयन्मात्रमेव तदध्यायं परिच्छेदं वाऽध्येतुं शक्ष्यामि, नाधिकमिति निश्चिन्वानः स विप्रं मातुरन्तिकं यातुं संप्रार्थ्याऽ-

१—सोऽवक्—मान्यतम ! अमीक्षवो मे मात्रे देयाः, अहमधुना किमपि कार्यं चिकीर्षुरन्यत्र व्रजामि । द्विजोऽपि तत्सदनमेत्य जनन्यै तानिक्षून् दत्त्वा सर्वमाचचक्षे । तदा तदम्बा निरचिनुत—यन्मे शिशुः साधिकनवपूर्वाण्यध्येतेति, एवमुपदेशप्रासादग्रन्थेऽलेखि ।

ग्रे चचाल। तत्र चागत्य द्वाःस्थो दध्यौ–यदहं केन प्रकारेणान्तः प्रविशेयम्, कथं वा गुरुमभिवन्देय ?। तदैव ढड्डराऽऽख्य एकः श्रावको गुरोर्वन्दनार्थमागात्। तेन सहैवाऽऽर्यरक्षितोऽपि तत्रागत्य तद्वदेव गुरुं ववन्दे। अदृष्टपूर्वस्याऽऽस्य यथावद्वन्दनादिकमुदीक्ष्याऽऽचार्योऽपृच्छत्–भोः! कश्चिन्नूतनः श्रावको लक्ष्यसे, त्वयेदृशः श्राद्धधर्मः कस्मादशिक्षि ?। तदैनमुपलक्ष्य कश्चिच्छ्रमणस्तमभाषत–प्रभो! रुद्रसोमाश्राविकायाः पुत्रोऽस्ति, अचिरादेव वेदेषु तदङ्गेषु च निष्णातो भूत्वा, गृहाऽऽगतो राज्ञा प्रजाभिश्च सत्कृतः क्षितिपतिदत्तबहुमानपत्रोऽस्ति। ततः स्वयमप्यागमनकारणं तस्मै न्यवेदयत्। गुरुणोक्तम्–दीक्षामृते दृष्टिवादो नैव पाठ्यते। सोऽवक्–भगवन्! अत्रत्यजनानां राज्ञश्च मयि महीयाननुरागो वर्तते, स्वजनेऽपि ममता दुस्त्यजैव भाति, इत्यन्यत्रैव गत्वा मे दीक्षां देहीति। गुरुरपि भविष्यल्लाभं विदित्वा ग्रामान्तरं गत्वा, तं दीक्षयित्वा साङ्गोपाङ्गानागमानध्याप्य तदाधिकपूर्वश्रुताऽध्ययनायाऽवन्तिकायां वज्रस्वामिपार्श्वे प्राहिणोत्। सोऽपि तदादेशेन ततश्चलित्वा क्रमश उज्जयिनीमागत्य भद्रगुप्ताऽऽचार्यान्तिकमाययौ। सोऽवक्–भद्र! त्वमधुना स्ववसरे किलाऽऽगाः, अहमिदानीमनशनचिकीरस्मि, तत्र साहाय्यं विधीयताम्। आर्यरक्षितस्तदादेशं सहर्षमुरीकृत्य तं पर्युपासितुमलगत्। अथैकदा भद्रगुप्ताचार्यस्तमेवमाख्यत्–भोः! वज्रस्वामिनः सुखेनाऽधीष्व, किन्तु तदभ्यासे रजन्यां मा स्थाः, आहारादिकमपि पृथगेव कर्त्तव्यम्। यतस्तेन सह सकृदपि यः शयिष्यते,

---

२–असौ द्वाविंशत्यब्दिके वयस्येव दीक्षामग्रहीदिति सुमतिगणिरचित 'गणधरसार्धशतकबृहद्वृत्तौ' सर्वराजगणिकृततदीयलघुवृत्तौ चाऽज्ञेखि। उत्तराध्ययनादिटीकाकृतः कियन्तस्तु वर्हीदां शिष्यचौर्योपलब्धामेव शासने न्याकुर्वन्ति स्म, वस्तुतः पित्रादेराज्ञां विना दीक्षापि स्तैन्यमदत्तादानमेव वास्ति।

भोक्ष्यते वा, सोऽपि तेन सत्रैव मरिष्यति । आर्यरक्षितोऽपि तदुररीकृत्य तस्मिन् स्वर्याते वज्रस्वामिनः समीपमागन्तुमचलत् । रात्रौ स्वप्ने स एवमपश्यत्–कश्चिदतिथिमुनिरागत्य मत्पात्रस्थं क्षीरं सर्वमपिबत्, किञ्चिदेवाऽवशिष्टं तस्थौ । इति नैशिकं स्वप्नं प्रभाते साधून् यावत्कथयति, तावदार्यरक्षितस्तत्रागत्य वन्दित्वा, स्वागमनकारणं भद्रगुप्तसूरिगदितवृत्तान्तञ्च व्याहृत्य, पृथगुपाश्रयस्थ एव सुखेन तत्पार्श्वे पूर्वानध्येतुं लग्नः । अल्पीयसा कालेनैव नवपूर्वानधीत्य दशमे पूर्वे चतुर्विंशति यमकानि सोऽध्यगीष्ट । तावत्तमाह्वातुं मातापितृभ्यां प्रेषितः कनीयान् फल्गुरक्षितनामा बन्धुस्तत्रागत्यैवमचकथत–बन्धो ! चिरात्त्वामपश्यन्तौ मातापितरौ चेखिद्येते, अत एकवारं तत्र चल, मातापितरौ सुखय । सोऽवक्–असारहेतोः सारवस्तुत्यागो मौर्ख्यमस्ति, सांसारिको मातापित्रादिसम्बन्धोऽसन्नेवास्ति, तेषु ममताप्यलीकैवास्ति, तत्र गत्वा किं करिष्यामि ? । फल्गुरक्षितोऽवादीत्–कुटुम्बानां धर्ममुपदेक्ष्यसि, तं श्रुत्वा बहवो जना मिथ्यात्वं विहाय शुद्धं धर्मं ग्रहीष्यन्ति, दीक्षां च लास्यन्ति, आर्यरक्षित उवाच–अन्येषां लाभस्तावदास्ताम्, इहागतस्त्वमधुना दीक्षामादेहि । तदैव फल्गुरक्षितो दीक्षां लात्वा चलितुं तमाग्रहीत् । ततो वज्रस्वामिनं सोऽपृच्छत्–भगवन् ! दशमे कियानध्येतुमवशिष्यते ? । गुरुरूचिवान्–इदानीं त्वया सर्षपप्रायोऽपाठि, मेरुतुल्यश्चाऽवशिष्यते । तदनु गुरुणा प्रोत्साहितः स पुनरध्येतुमारेभे, परन्तु फल्गुरक्षितस्य पुनः पुनः प्रेरणया पुनः स गुरुमवादीत्–प्रभो ! ममेदानीं ज्ञातीनां दिदृक्षा महती जायते, अतस्तत्र गन्तुमनुज्ञायताम्, तान्मिलित्वा पुनरागत्य शेषं पठिष्यामीति । तदाकर्ण्य वज्रस्वामी श्रुतोपयोगत इत्यवेदीत्–यदतः परं दशमपूर्वाऽवशिष्टो भागो मया सार्धमेव यास्यति, अतस्तत्र गन्तुं शुभाशीःपूर्वकं तमनुज्ञातवान् । तावुभावपि ततश्चलित्वा पाटलिपुत्रनगरे स्वगुरोस्तोसलीपुत्राचार्यस्य पार्श्वमागमताम् । सोऽपि तस्मा आचार्यपदं वितीर्य स्वरगात् ।

आर्यरक्षितसूरिर्भ्रात्रा सत्रा दशपुरमागत्य मातापितरौ मिमिलतुः । तदा सर्वे कौटुम्बिका मुमुदिरे । तदवसरे सूरिरपि मेघगम्भीरया गिरा संसारेऽस्मिन् पुत्र–कलत्र–धन–वाहन–सदनादयः सर्वे क्षणभङ्गुरा एव सन्ति, एषु ये ममतामावहन्ति, त एव भवाम्बुधौ मुहुर्मुहुर्निपतन्ति, मोहादयश्च सहसैव जीवमेनमधः पातयन्ति, येषां जेतुं साधीयान् पन्थाः शुद्धचारित्रमेव जागर्ति, इत्यादि सर्वानुपादिशत् । तच्छ्रुत्वा सर्वे मात्रादयः शुद्धभावेन तत्पार्श्वे दीक्षामाददिरे । एकः सोमदेवस्तत्पितैव मतिमान्द्येन तमेवमाभिदधौ–चेदुपानत्कमण्डलुच्छत्रोपवीतधौतान्येतानि पश्चाऽजहतो मे दीक्षां दित्ससि ? तर्हि मेऽपि दीक्षां देहि । तदाकर्ण्य पुनरग्रे सर्वमेतद्धापयिष्यामीतिधिया तदुक्तिमुरीकृत्य पितरमप्यदीक्षयदार्यरक्षितसूरिः । अथैकदा गुरुशिक्षिताः श्रावकशिशवो जिनचैत्ये व्रजन्तं तत आगच्छन्तश्च गुरुं वन्दित्वाऽन्यानपि साधून् सर्वान् ववन्दिरे, किन्तु वृद्धतरं सोमदेवमुनिं नाऽवन्दिषत । उपाश्रये समागतं गुरुं सोऽजल्पत्–ते बालका मां केन हेतुना नाऽवन्दन्त ?, गुरुरूचे–भवांश्छत्रं बिभर्त्ति, तद्धारणात्साधवो नाऽभिवन्द्यन्ते । तन्निशम्य वृद्धमुनिस्तदौज्झत् । एवं युक्त्यन्तरेण कमण्डलूपानदुपवीतान्यपि तेनाऽतित्यजत् । एकदा कश्चित्साधुर्व्यपद्यत, तच्छवं वोढुं गुरुशिक्षिताः सकला अपि साधवोऽहमहमिकयाऽऽजगृहुः । तदोक्तं गुरुणा–भोः ! एतदसाधारणं सुकृतं मत्सम्बन्धिन एव भवितुमर्हति, नेतरेषाम् । इति श्रुत्वा वृद्धमुनिरचष्ट–एवञ्चेदहमेक एवैनं वाहित्वा परिष्ठापयिष्यामि । गुरुरवादीत्–ईदृशं महत्पुण्यमधिगन्तुं त्वमेवाऽर्हसि, परमेतस्मिन्नुपसर्गो महानुपस्थास्यते, तं सहमानोऽधिमार्गं कुत्राप्यनुत्तार्य शुद्धभूमौ यः शवं परिष्ठापयिता स एवैतन्महत्पुण्यं लप्स्यते । सर्वमेतदाकर्ण्य सोमदेवो मुनिः सोत्साहेन चेतसा स्कन्धोपरि शवं निधाय चचाल । ततो गुरुशिक्षिता बालकाः कियन्तस्तमनुगच्छन्तः कियद्दूरं गत्वा, तस्य वृद्धमुनेर्धौतवस्त्रं

हठादपनिन्यिरे, स तु विघ्नोऽयमिति मन्वानः शवं वहमानो निर्भीः क्वचिदपि मार्गे शवमत्यजन्नग्न एव परिव्रजन् परिष्ठापनभूमौ समागत्य शवमुदतीतरत् । तदनु गुरुरपि सपरिवारस्तत्राऽऽगत्य तं नग्नमुदीक्ष्य, कमपि साधुं धौतमानेतुं समादिशत् । सोऽपि पुराकृतसङ्केतो गुरुमाख्यत्—धौतवसनं तु श्राद्धसद्मन्येवाऽधिगन्तुं शक्यते, चोलपट्टं जिघृक्षति चेत्प्रस्तुतमेवाऽस्ति । वृद्धेनोक्तम्—मामधुना सर्वे नग्नमद्राक्षुश्चेत् त्रपा मे गता, धौतं नाऽपेक्ष्यते चोलपट्टमेव दीयताम्, अद्यारभ्य तदेव परिधित्सामि । अमुनोपायेन धौतमपि तेनाऽजीहपत् । वृद्धो मुनिर्गोचरीं लातुमपि शिक्षतामितिधिया गुरुरेकदा त्रिचतुःश्रमणानुवाच—यूयं गोचरीमानीय स्वयमेव भुङ्ग्ध्वम्, वृद्धमुनये तु नैव देयम् । अहमद्य नैकटिकग्रामे प्रतिबोधयितुं व्रजामि, श्वःपरश्वोवाऽऽगमिष्यामि । गुरौ याते तेऽपि तथैवाऽकुषत । द्व्यहमतिक्रम्य समागतो गुरुस्तमपृच्छत्—भोः ! आहारादिक्लेशो भवतोऽभवत्किम् ? । वृद्धोऽवदत्—तावकाः सर्वेऽपि मुनय उदराम्भरा एव सन्ति, यदेते त्वयि गते सति गोचरिमानीय स्वयमेव बुभुजिरे । मह्यं तद्दानं तु दूरमस्तु, पृष्टमपि न, अद्योपवसतो मे तृतीयो घस्रो व्येति । तदा गुरुः सकोपः श्रमणानुपालभत । साधवोऽजल्पत्—स्वयमेवाऽऽनेतुमसौ कथं न याति ? । गुरुणोक्तम्—तात ! पराशा सदा निराशैव बोभवीति, अतः सुधिया हातुमेव सा युज्यते । भवतु, भवदर्थेऽहमेव भक्ष्यपेयादिकमानयामि । इत्थं भाषमाणे गुरौ सोमदेवोऽब्रवीत्—त्वयि गच्छाधिपतौ याते ममानुचितं लगत्यतोऽहं स्वयमेव गोचर्यै व्रजामि, इत्युदीर्य सोऽचलत् । अथासौ कस्यापि श्रेष्ठिनः सद्मनि पृष्ठद्वारेणैव प्राविशत् । श्रेष्ठी बभाषे—महाराज ! मुख्यद्वारं विहाय गौणेन कथमन्तः प्राविक्षः ? । मुनिरुवाच—अरे ! लक्ष्मीर्येनैव द्वारेणान्तः प्राविशेत् तदेव मुख्यमवगच्छतु भवान् । तच्छ्रुत्वा प्रहृष्टो गृहपतिः सोमदेवाय द्वात्रिंशन्मोदकान् प्रत्यलाभयत् । तानादाय स गुर्वन्तिकमागात् । गुरुः प्रथम-

भिक्षायामेव तस्य तावतीं लब्धिं विलोक्य निरचिनोत्–इयन्तो मे शिष्या भविष्यन्तीति । ततो गुरुणा सोमदेवस्य भावनाऽधिक्येन सर्वे मोदकाः सर्वेभ्यो मुनिभ्योऽदायिषत । सोमदेवमुनिः पुनरानीय पारणामकरोत् । आर्यरक्षिताऽऽचार्यगच्छे घृतपुष्पमित्र–वस्त्रपुष्पमित्र–दुर्बलपुष्पमित्रनामानस्त्रयो मुनिवरा आहारलब्धिमन्तोऽजायन्त । दुर्बलपुष्पमित्र–विन्ध्य–फल्गुरक्षित–गोष्ठामाहिलाऽऽख्याश्चत्वारः श्रमणा वादलब्धिमन्तो जज्ञिरे । वज्रस्वामिपर्यन्तमेते धर्मकथानुयोग–चरणकरणानुयोग–गणितानुयोग–द्रव्यानुयोगाश्चत्वारः सहैव सम्मिलिता आसन्, किन्तु विन्ध्यमुनेः प्रार्थनयाऽऽर्यरक्षितसूरिश्चतुरोऽनुयोगान् पृथक् पृथगकरोत् । एवममुना श्रमणानामनेकपात्ररक्षण आज्ञाऽकारि, न्यवर्ति च साध्वीनामालोचनादातृत्वम् । अत एवैतच्छासनसमयादेव श्रामण्याः प्राक्संस्कृतेः शैथिल्यं नव्याचारपद्धतेरेधनञ्च भवितुमलगादिति कथनमनौचित्यं नोपैति ।

अयमेकदा मथुरानगर्यां क्वचिदेकत्र व्यन्तरायतने तास्थिवान् । तदवसरे महाविदेहक्षेत्रे श्रीसीमन्धरस्वामिपार्श्वेऽभिवन्दनाय शक्रेन्द्रः समुपेयिवान् । तदग्रे भगवान् निगोदस्वरूपमवर्णयत । तदन्ते प्रसन्नः शक्रेन्द्रस्तमप्राक्षीत्—विभो ! भरतक्षेत्रे कश्चिदेतत्स्वरूपं वेत्ति, न वा ?। भगवानाचष्ट–अस्ति मथुरायामेतत्स्वरूपं विद्वान् यथावदहमिव वक्ताऽऽर्यरक्षितसूरिः । ततो विस्मितः शक्रस्तत्रागत्य वृद्धब्राह्मणरूपेणार्यरक्षितसूरिं तत्स्वरूपं पप्रच्छ । सोऽपि सीमन्धरस्वामीव निगोदानां स्वरूपं यथावद्वर्णयाञ्चक्रे । इन्द्रोऽपृच्छत्–ममाऽऽयुः कियदस्ति ?, सूरिस्तद्धस्ताऽवलोकनेन पक्षमासवर्षादिकं विमृश्य चचक्षे–न त्वं मनुष्यः, किन्तु प्रथमदेवलोकवासीन्द्रोऽसि, अस्ति चाऽऽयुस्तावकं द्विसागरोपमप्रमाणम् । शक्रेन्द्र आचार्यं भृशं प्रशस्य स्ववृत्तं निवेद्य, परावर्त्य चोपाश्रयद्वारं स्वस्थानमगच्छत् । बहिर्गताः श्रमणाः समेताः सन्तो द्वारं परा-

वृत्तं विलोक्य तत्कारणं गुरुमप्राक्षुः । गुरुः शक्राऽऽगमनादिसर्वमूचिवान् । साधुभिरुक्तम्—भगवन् ! किञ्चित्कालं स स्थापितश्चेद्वयमपि तं द्रक्ष्यामः । गुरुरवदत्—महापुण्यवतामेव तद्दर्शनं भवितुमर्हति । ततो मुनिगणैः सत्राऽऽचार्योऽन्यत्र व्यहार्षीत् । अथ मथुरायामेकदा कश्चिदेको विद्वज्जनजिगीषया विद्वानाययौ । स च सर्वत्र नगरे पटहं वादयन्नेवमुद्घोषयत—' यदत्र सुविद्वान् कश्चिदस्ति चेन्मयका सत्रा चर्चां विदधीत, अशक्तश्चेत्तर्हि मे विजयपत्रं ददीत । ' तदाकर्ण्य सङ्घ आवेदनपत्रं सम्प्रेष्य सर्वमेतत्तमसूचयत । तदाऽऽचार्यो गोष्ठामाहिलं मथुरायां तेन सार्धं विवदितुं प्रैषीत् । असौ तत्राऽऽगत्य राजपरिषदि समस्तश्री—सङ्घसमक्षं सुचिरं चर्चां कृत्वा प्रान्ते तं जिगाय, तदनु सङ्घाग्रहेण गोष्ठामाहिलस्तां चतुर्मासीं तत्रैवाऽकरोत् । इतश्चाऽऽर्यरक्षितसूरिः स्वायुषः क्षयं विदित्वा योग्याऽयोग्यञ्च विमृश्य, दुर्बलपुष्पमित्रमाचार्यपदे निधाय गच्छाधिपतिमकार्षीत् । स्वयमनशनं विधाय द्यामगात् । स्वर्याते चामुऽष्मिन् गोष्ठामाहिल ईर्ष्यया दुर्बलपुष्पमित्राचार्याय द्वेष्टुं लग्नः, अतएव सङ्घो मिलित्वा तं गच्छाद्बहिश्चक्रे । एवमार्यरक्षितसूरिर्वीरशासने प्रावचनिकः प्राभाविकश्च बभूवान् । एषको हि प्रथमोदयस्यैकोनविंशतितमो युगप्रधान आसीत् । एतस्य सकलायुः पञ्चसप्ततिहायनमभूत । वाल्लभीयुगप्रधानपट्टावलीग्रन्थानुसारादेतस्य वीरनिर्वाणतः ५२२ ( विक्रमीयसंवत् ५२ तमे वर्षे जन्म, वी० ५४४ ( वि० ७४ )तमेऽब्दे दीक्षा, वी० ५८४ ( वि० ११४ ) तमे वत्सरे युगप्रधानपदाप्तिः, वी० ५९७ ( वि० १२७ ) तमे हायने स्वर्गमनमधिजज्ञे ।

---

१ एवं गुरुगच्छशासनद्वेष्टृत्वादुत्तराध्ययनसूत्रादिटीकाकर्त्तारः सप्तमं निह्नवं लिखन्ति स्म । सविस्तरमेतद्वृत्तमुत्तराध्ययनसूत्रविशेषावश्यकभाष्यादिवृत्तितोऽवगन्तव्यमिति।

१२७ श्रीकालकाऽऽचार्यनिबन्धः--

मगधदेशे धारावासाभिधे नगरे राज्ञो वज्रसिंहाद्राज्ञी सुरसुन्दरी कालकनामानं तनयं सरस्वतीं नाम्नीं दुहितरञ्चाजीजनत्। सचाऽष्टमे हायने मातापितृभ्यां कलाचार्यान्तिकेऽध्ययनाय महामहेन स्थापितः। अल्पीयसा समयेनैव कलास्वनेकासु स पटीयानजायत, विशेषतश्च गजाश्ववाणपरीक्षायामद्वितीयतामियाय। अन्यदा खुरासानदेशादुपहारीकृता भूयांसस्तुरगा वज्रसिंहक्षितिपतेः पार्श्वे समीयुः। तान् परीक्षितुं राजा कालककुमारमादिदेश। ततः पञ्चशताश्ववारैः सवयस्कैः सह तान् भ्रामयितुमटव्यामुपागतः। तत्र च तांश्चिरं परिभ्राम्य क्वचिदाम्रच्छायायां कुमारो विशश्राम। तदासन्ने च मुनिगणैः परिवृतो गुणाकरसूरिः शिष्यान् पाठयन्नासीत्। तन्मधुरध्वनिमाकर्ण्य तदुपदेशं शुश्रूषुः कुमारस्तत्राऽऽगत्य तमवन्दत। सूरिः कुमारं जगत्यनित्यतां, श्रामण्यधर्मस्य सत्यतां, मोक्षदातृतां चाऽबूबुधत्। कुमारस्य स्वान्तेऽव्यभिचारिणी वैराग्यभावना किलोदियाय। कुमारेणोक्तम्—भगवन्! यावदहं मातापित्रोरनुमतिं लात्वाऽत्राऽऽगच्छानि तावत्त्वयाऽत्रैव स्थेयमित्युदीर्य स निजसदनमागात्। समागतः स पितरौ दीक्षां लातुमनुज्ञामयाचत। ताभ्यां बहुधा निवारितोऽपि यदा न न्यवर्तत, तदा वज्रसिंहो महीपतिर्महामहेन प्रियसूनोर्दीक्षामदापयत। भ्रातरि दीक्षामात्ते भगिनी सरस्वत्यपि तदैव दीक्षां ललौ। मात्रा पित्रा चोक्तम्—वत्स! ते कनीयसी भगिन्यस्ति, एतस्याः संभालनादि सदैव सयत्नेन त्वया विधेयमिति। अथैनं व्याकरण—न्याय—वेदान्तादिसाहित्यालङ्कारच्छन्दोज्योतिर्मन्त्रतन्त्रादिविविधविद्यासु निष्णातमवगत्य गुणाकरसूरिः कालकमुनये श्रीसंघाऽऽरब्धमहामहेनाऽऽचार्यपदं ददिवान्। ततोऽसौ सर्वत्र श्रीकालकाचार्यनाम्ना प्रपथे।

एकदा कालकाचार्य उज्जयिनीनगरीमासाद्य बहिरुद्याने तस्थौ।

तदैवाऽनेकसाध्वीगणपरिवृता सरस्वत्यपि तत्राऽऽगतवती । एषाऽनवरतं तद्देशनाशुश्रूषया गमाऽऽगमौ कुर्वाणाऽऽसीत् । तदा तत्र गर्दभिल्लनामा क्षितिपाल आसीत् । असौ ललनालम्पटो महाकामी कथञ्चिदेकदा सरस्वतीसाध्वीं प्रैक्षत । यर्ह्येव तामालोकत तर्ह्येव तन्मनसि कामाग्निः प्रजज्वाल । तदैव च कामाग्निना दन्दह्यमानो राजा तां बलादानाय्य स्वान्तःपुरं प्रावेशयत् । तत्कालमेव तत्सहचर्यः साध्व्यः समेत्य, सवमेतत्कालकाचार्यमूचिरे । सोऽपि नृपान्तिकमागत्य बहुधा प्रतिबोधितवान्, परन्तु मारपिशाचग्रस्तो नरपतिः किमपि नाऽमंस्त । तदनु सङ्घमेकत्रीकृत्य सर्वमाख्यदाचार्यः । ततः सङ्घीभूतेन सङ्घेनापि गत्वा तां मोक्तुं नृपः सुचिरं प्रार्थितस्तथापि राजा सरस्वतीं नैवाऽजहात् । ततो दण्डाऽऽहतः फणीन्द्र इव श्रीसङ्घापमानेन महापापाऽऽचरणेन च चोकुपीति स्म सः । तदा प्रकुपितस्य कालकाचार्यस्य कोपानलः प्रतिरोमं प्रससार । प्रत्यज्ञायि च सकलसङ्घसमक्षममुना–चेदेनं गर्दभिल्लं कद्राजं समूलं सराज्यं नोच्छिनदानि तर्हि कालकाचार्येति नाम नैव बिभराणि । एवं प्रतिज्ञाय राज्ञोऽमुष्मादत्याचाराद्विरामाय स उन्मत्तवन्नगरे सर्वत्र बम्भ्रमीति स्म । सर्वमेतत्प्रतिज्ञावादादिकं शृण्वन्नपि निस्त्रपो नरेशस्तां हातुं नैवाऽचीकमत । प्रान्ते गच्छभारं निजशिष्ये निधाय सिन्धुनदीतटाऽऽसन्नपारसकूलाभिधानदेशं प्रत्यचलत् । अत्रत्याश्च सर्वे राजानः साखी ( शाही )तिनाम्ना पप्रथिरे । अधिमार्गमेकस्मिन् ग्रामे बाह्ये चत्वरे कतिपये राजकुमाराः कन्दुकेन रमन्ते स्म । दैवात्स कन्दुकः कूपे पपात । तमुद्धर्त्तुं ते सर्वे महतीं चिन्तामापेदिरे । तदा समागत आचार्यः कूपोपकण्ठे निषण्णांश्चिन्तया विच्छायवदनांस्तानप्राक्षीत्–भोः ! यूयं किमत्र पश्यथ ?, ते जगदुः–मामकीनः कन्दुकः कूपकेऽस्मिनपप्तत्, अतस्तदुद्धरणोपायमपश्यन्तश्चिन्तायां निमग्नाः स्मः । आचार्योऽभ्यधात्–चिन्तां मा कृषत,

स्वस्वधनुर्बाणांश्चात्राऽऽनयत, तदैव ते धनुर्बाणानानिन्यिरे । तत आचार्यः प्रथमं कन्दुकोपरि गोमयानि क्षिप्त्वा तदुपरि ज्वलच्छष्पपुलकानि चिक्षेप । ततो धनुराकर्णान्तमाकृष्य बाणेनैकेन कन्दुकं विद्ध्वा बाणपारम्पर्येण लीलयैव पश्यत्सु तेषु स कूपान्तस्तमुद्दधार । तमादाय प्रहृष्यन्तः सर्वे राजपुत्रा आचार्यं भृशं प्रशंसन्तः सदनमागत्य, स्वस्वपितरौ तमद्भुतं तदीयकौशलमाचख्युः । सर्वत्र प्रसरन्ती वार्त्तैषा तत्रत्यस्य साखीराजस्य कर्णपर्यन्तमगात् । राजा सादरं कालकाचार्यं समाकार्य तत्कलाचातुर्येण भृशं सन्तुष्य पार्श्वे तमातिष्ठिपत् । सोऽपि ज्यौतिषनैमित्तिकादिविविधविद्यया साखीराजमनुरञ्जयंस्तत्रैव बहूनि दिनानि व्यतीयाय । अथैकस्मिन् दिने सदसि साखीनरपतेरग्रे समायातः कश्चिदेको दूत एकस्यां कटोरिकायां क्षुरिकां पत्रिकाञ्च न्यधत्त । तां वाचयित्वा राजा स्तब्धीभूय हतश्रीकः श्यामवदनो जज्ञिवान् । भूपतेरीदृशीं दशामालोक्य कालकाचार्योऽपृच्छत्—स्वामिना प्रेषितमुपायनं प्राप्य सर्वे जरीहृष्यन्ते, भवानीदृश उदासीनः कथं दृश्यते ?, राजोवाच—स्वामिन् ! नायमुपहारः, किन्तु कुपितः कृतान्त इव सद्यः प्राणहर एव ममेदानीमुपस्थितः । आचार्योऽवदत्—कथम् ?, नृपेणोक्तम्—चोकुपितः स्वामी मामेतदादिशति—' यत्त्वमधुनाऽनयैव क्षुरिकया स्वशिरश्छित्वा पात्रेऽमुके निधाय तूर्णमत्र प्रेष्यतामन्यथा सपरिवारं त्वां मारयिष्यामि । ' अयञ्चादेशः केवलं ममैव न, किन्तु समस्तसाखीनरपतीनामभूत्, तदा नृपोक्तं सर्वमाकर्ण्य स्वसमीहितसिषाधयिषुराचार्यः स्ववसरं विदित्वा सोत्साहेन राजानमवादीत्—राजन् ! कातर इव मा शोचीः, चिन्तां जहीहि, यूयं सर्वे साखीनरपाला मयका सत्रा गच्छत । अहमुज्जयिनीनाथं गर्दभिल्लक्षितिपतिमीदृशानर्थकरं समूलमुच्छिद्य तद्राज्यं वो दास्यामि । अथाचार्यवचसि विश्वस्याऽन्येषामपि राज्ञां पञ्चनवतिं समाहूय सर्वे कालकाचार्येण साकं प्रतस्थिरे । सिन्धुनदीमुत्तीर्य सौराष्ट्रमागतास्ते प्रा-

वृषि समुपस्थितायामाचार्यनिदेशात्तत्रैव सर्वे नृपा न्यूषुः । तत्र तस्थुषां समेषां क्षितिभुजां पार्श्विकं स्वापतेयं सर्वं वीतमभूत् । पार्श्वे स्तोकमपि नाऽस्थादतएव ते सर्वे चिन्तातुरा जाताः । तदाऽऽचार्यः शासनदेवीं समाराध्य स्वर्णसिद्धिं च कृत्वा सर्वेषां चिन्ताऽभनक् । चातुर्मासेऽपगतेऽग्रे चलित्वा लाटदेशमायन् । तत्र च तावुभौ महीपालौ बलमित्र–भानुमित्राभिधौ सार्थगावभूताम्, यौ कालकाचार्यस्य भागिनेयावास्ताम् । इतश्च गर्दभिल्लोऽपि स्वस्योपरि भविष्यदारातिकाऽऽक्रमणं कथञ्चिदभिज्ञाय सज्जीकृतचतुरङ्गसेनः प्रागेव समराय सम्मुखीनस्तस्थिवान् । तदनु साखीनृपैरपि सह पृतनाभिः समागत्योज्जयिन्या अधिसीमं स्वशिबिरमपाति । तदवसरे कालकाचार्यो गर्दभिल्लं राजानं दूतमजल्पयत–' इदानीमपि सरस्वतीं साध्वीमुज्झ, हठाऽऽधिक्यं मा कृथाः, नोचेदायतौ भावुकं फलं न द्रक्ष्यसि । ' परममुनाऽप्युपदेशेन कदाग्रही राजा तां नैवोज्झाञ्चकार । ततो दलद्वयिके सैन्ये परस्परं युयुधाते । तत्र च साखीनरपतेः सुभटा वैपक्षिकं दलं बलवत्तरं पराक्रममदीदृशन् । तदसहमानानि गर्दभिल्लबलानि कान्दिशीकानि नेशुः । नष्टेषु तेषु राजाऽपि गोपुरं पिधाय क्वाप्यनश्यत् । तदा कालकाचार्यबलानि परितः पुरमरुन्धन् । कियन्त्यपि दिनानि गढोपरि तदीय एकोऽपि पुमान्नाऽदृश्यत । ततः साखीनृपेण पृष्ट आचार्यः कथितवान्–' एष राजा गर्दभिल्लो गार्दभीं विद्यामिदानीं साधयति, अत्र मनागपि मा संशयीथाः, याहि विलोकय, किलोपरि काप्येका गर्दभी तिष्ठतीति । ' सोऽपि क्वचिदेकत्र स्थाने व्यात्तवदनामेकां गर्दभीमद्राक्षीत् । आचार्य ऊचे–' यदाऽमुष्य भूमीपतेर्विद्या सेत्स्यति, तदेयं वदिष्यति, यश्च नृपारातिस्तद्रवं श्रोष्यति, स रक्तं वमित्वा भूपौ निपत्य मरिष्यति । ' इति श्रुत्वा साखीनरेशाः सर्वे बेभीयन्ते स्म । अत आचार्यवचसा तदन्तिकेऽष्टोत्तरशतं धानुष्का-

१ प्रस्तवगालब्ध्या स्वप्रस्नावेणैव शिलामपि स्वर्णं चक्रिवानित्यपि क्वाचित्को दृश्यते लेखः ।

न्मुक्त्वा ससैन्यास्ते सकलाः क्रोशपञ्चकं ततो दूरङ्गत्वा तस्थुः । यर्हि सा गर्दभी रवितुं मुखं व्यादत्त, तर्ह्येवाऽऽचार्यवचसा ते धानुष्का युगपद्बाणांस्तथा मुमुचुर्यथा तैरेव शरैस्तस्या मुखं परिपूर्णमजनि, अत एव शब्दं कर्त्तुं नाऽशक्नोत् । ततः कुपिता सा विद्या नृपोपरि हदित्वा तिरोधत्त । तदनु परावृत्ताः साखीराजीयाः सैनिका उज्जयिन्याः प्राकारं भित्वान्तःप्राविशन्, गर्दभिल्लभूपं गाढं बद्ध्वाऽऽचार्याऽन्तिकं निन्यिरे च । अवादीदाचार्यः—पापिष्ठ ! त्वमेकस्याः शीलालङ्कृतश्रमणायाः संयमं यद्भाङ्क्षीस्तदुद्भूतमहापापस्य फलं नरके भोक्ष्यसे, यदेतच्चौर इव बन्धनादिकमनुभवसि, तत्तु तदंशमात्रमेव जानीहि । अतस्तच्छुद्धिकृते दीक्षामादेहि । यया ह्लादिन्या तन्महावृजिनगिरिं भेत्स्यसि, परमेतदुपदेशस्य महासारस्यापि प्रभावः पापीयसि कमलाद्दगिव तच्छृदये मनागपि नैवाऽपसत् । तदुक्तम्—‘ अङ्गारः शतधौतेन मालिन्यं नहि मुञ्चति ।’ तस्मिन्नवसरे साखीनरपतिरेनं जिघांसुरजायत, किन्तु ‘ पापी पापेनैव पच्यते ’ इत्याभाष्य स तममुमुचत् । ततः साखीनरनाथस्तं देशात्तूर्णं निरयीयपत् । निर्याते चामुके कालकाचार्य उज्जयिन्या राज्यासने साखीबादशाहं संस्थापितवान् । पञ्चनवतीतरनरपतिभ्यश्च मालवं विभज्य ददिवान् । साध्वीं सरस्वतीमपि पारतन्त्र्येण सञ्जातसङ्घर्षादिपापापनोदाय प्रायश्चित्तङ्कारयित्वा गच्छे निनाय । प्रान्ते स्वयमप्याचार्य आलोचनां लात्वा गच्छाधिपत्यं बिभरामास । अथैकदा लाटदेशांतःपातिभृगुकच्छ—( भरुच )नगराधिपतिबलामित्र—भानुमित्राऽभ्यर्थितः कालकाचार्यो भृगुकच्छमाययौ । तत्र शकुनिकातीर्थनायकं भगवन्तं श्रीमुनिसुव्रतनाथं प्रणम्य, धर्मदेशनां विधाय च तौ बलमित्र—भानुमित्रौ जैनधर्मिणौ व्यदधात्सः । तत्र च शास्त्रचर्चाविधित्सया मिथ्यात्वी राजपुरोधास्तदन्तिकमागतवान्, पराजितवांश्चैनमप्याचार्यः सद्युक्तिसूक्त्या राजपारिषद्येव । ‘ कालगायरियकहा ’ कर्त्तारस्त्वाहुरेवम्—यदयमेव काल-

काचार्यो बलमित्र–भानुमित्रप्रतिबोधयिता पञ्चमीमपहाय चतुर्थ्यां पर्युषणां न्ययुङ्क्त, इति प्रथमः।

द्वितीय एकदा विहरमाणो दाक्षिणात्ये प्रतिष्ठानपुरे समाययौ। तत्र च शालिवाहनो नरनाथो जैनधर्मी साधुभक्त आसीत्। अत एनं चतुर्मासीं यावत् तत्रैवाऽतिष्ठिपद्राजा। समासन्ने च पर्युषणपर्वणि स आचार्यं पप्रच्छ–प्रभो! पर्युषणं महापर्व कदा निरधारि?, सूरिणोक्तम्–'भाद्रपदसितपञ्चम्याम्।' राजोवाच–स्वामिन्! तस्मिन् वासरे कौलिकं सदा वार्षिकमिन्द्रार्चनं महतामहेन विधीयते मयका। ऐकाहिकमेवोभयं चेदुभयत्रममोपस्थितिः कथं भविष्यति?, अतः कृपां विधाय पञ्चम्याः स्थाने षष्ठ्येव निश्चीयताम्, यथाऽहमपि महापार्वणिकं पौषधादि शुभं कुर्याम्। आचार्य उवाच–राजन्! पञ्चम्या निशाया उलङ्घनं जात्वपि नैव भवितुमर्हति। राजा चचक्षे–एवञ्चेत्तर्हि चतुर्थ्यामेव तदवधार्यताम्। तदा कालकाचार्यो नरपतेर्लाभमालोक्य 'अन्तरा वि य से कप्पई' (अन्तरापि च तत्कल्पते) इति कल्पसूत्रोक्तपाठमनुसृत्य चतुर्थ्यामेव तन्निरचिन्वत। एवं पाक्षिकं चातुर्मासिकं च प्रतिक्रमणं पौर्णमासिकमपि चतुर्दश्यां स्थिरीचक्रे। तद्दिनादद्यापि श्वेताम्बरजैनसमाजे सैव पद्धतिः पाप्रथीतितरामिति द्वितीयः।

अपरश्चासौ कालकाचार्यः सुखेन विहरन् संयमञ्च समवन्नासीत्। परमेतच्छिष्याः प्रमादित्वाद् गुरुणा प्रेरिता अपि क्रियानुष्ठाने शिथिला जाताः। अतः स 'यदीदृशैरकर्मठैः प्रमादिभिः सहवासादेकाक्येव वरम्' इत्थं विमृश्य, शय्यातरं तत्सर्वमाभाष्य सुप्तानेवान्तेसदः प्रहाय, स्वर्णपुरमागत्य स्वान्तेवासिनः शिष्यस्य सागरचन्द्राचार्यस्याऽभ्यर्णमित्वा तत्रोपाश्रयस्यैकस्मिन् कोणेऽस्थादसौ। प्रभाते च सागरचन्द्राचार्यो मधुरध्वनिना व्याख्याय सभ्यसमक्षमप्राक्षीदेनम्–भोः! कथय, मया कीदृशं व्याख्यायि? वृद्धेनोक्तम्–सम्यक्। पुनः सगर्वमूचे–श्र-

मण ! सिद्धान्तादौ क्वचिदपि संशयालुश्चेन्मामधुना परीपृच्छयताम् । एवं साहङ्कारं ब्रुवाणमेवं तदखर्वगर्वं चिखण्डयिषुर्वृद्धोऽपृच्छत्–भो विद्वत्तम ! धर्मोऽस्ति न वा ?, सागरचन्द्रोऽवादीत्–अस्त्येव धर्मः । वृद्धउवाच–नास्ति धर्मः । इत्थं तावुभौ सुचिरं धर्मास्तित्वनास्तित्वयोर्व्यवदेताम् । प्रान्ते निरुत्तरीकृतः सागरचन्द्रो विवेद–नायं साधारणः श्रमणः, किन्तु कश्चिन्महाप्रभावी सकलागमपारगामी वयसा विद्यया च वरीयान् प्रतिभातीति । इतश्च प्रभाते जाते प्रमादिनस्ते शिष्या गुरुमपश्यन्तो महतीं व्रीडामापेदिरे । अज्ञासिषुश्च शय्यातरमुखात्, यन्नः शिष्याणां प्रमाददोषेणैव क्लिश्यन्तो गुरवो नोऽपहाय सुवर्णपुरे सागरचन्द्राचार्यान्तिकं जगन्वान् । ततस्त्रिधा विभक्तास्ते श्रमणा एकैकस्य पृष्ठे चलन्तः क्रोशन्तश्च सर्वे स्वर्णपुरोपकण्ठमाजग्मुः । गुर्वागमं श्रुत्वा प्रहृष्टः सागरचन्द्रः सम्मुखमागत्य तानपृच्छत्–क्वास्ते गुरुः ? । तैरुक्तम्–स तु प्रागेकाक्येव भवत्पार्श्वमागात् । सागरचन्द्रो विवेद–अहो ! येन सत्रा मयाऽकारि शास्त्रार्थः, यश्च मां निरुत्तरीकृत्य जिगाय, नूनं स कालकाचार्य एवाऽस्तीति । तदैव सर्वैः सार्धमुपाश्रयमागत्य गुरुमभिवन्द्य स्वापराधं क्षमयाञ्चक्रे । अथायं कालकाचार्यः शिष्यगणैः सह ततो विहृत्य प्रतिष्ठानपुरमागतवान् । तदवसरे शक्रेन्द्रः सीमन्धरस्वामिमुखान्निगोदविचारमाकर्ण्य पृष्टवांस्तम्–भगवन् ! भरतक्षेत्रे कोऽप्येवं निगोदस्वरूपं वेत्ति न वा ?, सोऽब्रवीत्–सम्प्रति प्रतिष्ठानपुरे कालकाचार्यस्तादृग्विद्वानस्ति । अथेन्द्रो विप्रवेषेण तत्राऽऽगत्य तं तत्स्वरूपमप्राक्षीत् । सोऽपि तत्स्वरूपं सौगम्येन तथा शक्रेन्द्रं वेदयाञ्चकार, यथाऽऽकर्ण्य स प्रासासदीत्तमाम् पुनः स पाणिं प्रसार्य पृच्छति स्म–ममायुः कियदस्ति ?, तमालोक्य गुरुराख्यत्–त्वं प्रथमदेवलोकीयः सुरेन्द्रः प्रतिभासि, आयुश्च तावकं द्विसागरोपमं वर्वर्त्ति । ततः शचीशः प्रत्यक्षीभूय दिशोदशप्रादिद्युतत् । अचकथच्च सीमन्धरोक्तं सर्वम् । अभिवन्द्य यियासन्तमेनमाचार्यो गो-

चर्यै गतानामन्तेवासिनामागमनावधिस्थातुमाजग्राह, परमसौ न तस्थिवान्। उपाश्रयस्य मुख्यद्वारं परावर्त्य गतवानेव । तदनु समागतास्ते द्वारं परावृत्तमालोक्य तत्कारणं गुरूनपृच्छन्, गुरुश्च शक्रागमनादिवृत्तान्तं व्याजहार । ततः सुचिरं निर्दोषं संयमं परिपालयन्नन्ते निरशनेन द्यामगादसाविति तृतीयः ।

त्रयाणाममीषां मात्रिकं पैत्रिकं दैक्षिकं च वृत्तं प्रायः साम्यमेवोपलभ्यते, किन्तु संस्कृतकथानकीयप्राक्षिप्तगाथायामेकस्येन्द्रं प्रति निगोदस्वरूपव्याख्यातुर्वीरनिर्वाणतः ३२५ तमे वत्सरे, सरस्वतीसाध्वीहेतोर्गर्दभिल्लनृपोच्छेत्तुर्द्वितीयस्य, वी० ४५३, पञ्चमीमुज्झित्वा चतुर्थ्यां पर्युषणमहापर्वप्रथयितुस्तृतीयस्य वी० ९९३ तमे च हायने सत्तामाचख्यौ ।

१२८ श्रीहरिभद्रसूरिनिबन्धः—

अथ चित्रकूटोपकण्ठवर्त्तिन्यां 'पिर्वगुई' इत्यभिधानायां ब्रह्मपुर्यां चतुर्दशविद्यानिष्णात एको हरिभद्रनामा ब्राह्मणो न्यवात्सीत्। आसीच्चाऽयं चित्रकूटाधिपतेर्जितारे राज्ञः पुरोधाः । पिता चास्य शङ्करभट्टः, प्रसूश्च गङ्गाऽभिधानाऽऽसीत् । परमसौ विद्याऽखर्वगर्वाज्जगति समस्तामपि विद्वन्मण्डलीं तृणाय मन्यमानस्त्रिभुवनस्थ–विबुधाजिगीषया सदैव पार्श्वे कुठारं, जालं, निःश्रेणिकां च बिभ्राणो द्वीपे चामुष्मिन् स्वमाद्वितीयं जानानः कदाचिज्जठरे परिस्फुटिते सर्वा मे विद्या न निर्गच्छेयुः, इति धियाऽनवरतं स्वर्णपट्टेन बद्धोदरो जम्बूद्वीपे कोऽपि मे जेता नास्तीति सूचनार्थं करधृतजम्बूशाखः प्रतिज्ञामकरोत्–'यद्वाक्यमाकर्ण्य तदर्थमहं न कुर्यां, तस्यैव भविष्यामि शिष्य इति ।' अयमेकदा बहलशिष्यगणैः

---

१ तिसयपणवीस इंदो, चउसयतिपन्नसरस्सई ।
नवसयतिनवइवीरा, चउत्थीए जो कालगायरिया ॥ १ ॥

सार्धं सुखासनाऽऽसीनो विपण्यामध्यतः क्षितिपतेः समज्यायां गच्छन्मध्ये जनान् भीपयन्तं मत्तमातङ्गमद्राक्षीत् । तदा तद्भीत्या सहसैव यानादुत्प्लुत्याऽऽसन्नजैनमन्दिरं प्राविशत्सः । तदाऽऽसन्नोपाश्रये तस्थुषीनां साध्वीनामग्रेसरी पुराऽभ्यस्तसिद्धान्तमावर्त्तयन्ती ' चक्की दुगं हरिपणगं, पणगं चक्कीण केसवो चक्की । केसवचक्की केसव, दुचक्की केसव चक्की य ॥ १ ॥ ' इति सैद्धान्तिकीं गाथामुदचारयत । हरिभद्र एनां गाथामेकमना निशम्य तदर्थं भूयो भूयो विमृश्य मनागपि नो विदाञ्चकार । ततः साध्वीमपृच्छत्–मातः ! त्वमिदं चकचकेति किमपाठीः ? । तयोक्तम्–' नेदमार्द्रगोमयेन विलिप्तं विद्धि ' तदुक्तमेवं श्रुत्वा व्रीडितो हरिभद्र उवाच–मातः ! तदर्थं मां भाषस्व । साऽवोचत–मम जिनागमानामभ्यसनमात्रस्यैवाऽऽदेशो वर्वर्त्ति, तदर्थान् परान् बोधयितुं नो नाऽदिक्षद्भगवान्, अतस्तदर्थं बुभुत्ससि चेन्मामकं गुरुं पृच्छ । सोऽब्रवीत्–क्वास्ते गुरुः ?, ततो याकिनी साध्वी हरिभद्रं जिनदत्तसूरिसमीपमानीतवती । तत्र च गुरुरेनं तद्गाथार्थमित्थं कथितवान् । तथाहि–आदौ भरत–सगरौ चक्रिणौ, ततस्त्रिपृष्ठ–द्विपृष्ठ–स्वयम्भूर–पुरुषोत्तम–पुरुषसिंहाः पञ्च वासुदेवाः, पुनर्मघव–सनत्कुमार–शान्ति–कुन्थ्वराः पञ्च चक्रिणः, तदनु पुरुषपुण्डरीकाऽऽख्यवासुदेवः, ततः सुभूमश्चक्री, पुनर्दत्तनामा वासुदेवः, ततो महापद्मश्चक्री, पुनर्लक्ष्मणवासुदेवः, ततो हरिषेण–जयौ चक्रीणौ, पुनः श्रीकृष्णवासुदेवः, ततो ब्रह्मदत्तचक्री समभूवन्नस्यामवसर्पिण्यामिति । ततो हरिभद्रो गुरुं पुराकृतप्रतिज्ञावार्तां श्रावयामास । गुरुरुवाच–त्वयैतस्या महत्तराया धर्मपुत्रेणं भवितव्यम् । तेनोक्तम्–भगवन् ! कीदृशोऽसौ धर्मस्तत्फलं च किम् ? । व्याजह्रे गुरुः–धर्मो द्विविधो वर्त्तते–सकामोऽकामश्च । सकामवृत्त्याऽनुष्ठितो धर्मः प्राणिनां स्वर्गादिफलं वितरति, निष्कामवृत्त्या विहितधर्मस्तु भवमुच्छिनत्ति । हरिभद्रोऽब्रवीत्–स्वामिन् ! अहमपि भवनिवृत्तिमेव वाञ्छामि,

अतस्तदुपायं सुगमं ब्रूहि । गुरुणोक्तम्—एवमस्ति चेत्तर्हि सर्वपापनिवृत्तिलक्षणं श्रामण्यं भज । ततोऽसौ तद्ग्राहिणीं स्वेच्छां व्यानञ्ज । तदैव गुरुस्तस्मै श्रामणीं दीक्षामदात् । ततो जैनागमेषु प्रावीण्यमीयिवांसमेनं जिनदत्तसूरिराचार्यपदं प्रदाय स्वपट्टधरमकृत । अथ हरिभद्रसूरिर्गुर्वादेशेन पृथिव्यां सर्वत्राप्रतिबद्धविहृत्याऽनेकभविकजीवान् धर्म्यान् कृतवान् । एकदा स्वजनानां कर्कशागिरा संसारविमुखौ चिन्तितौ निजभागिनेयौ हंसपरमहंसौ तत्राऽऽगत्य विधिवदभिवन्द्य तमूचाते—आवां संसाराऽसारतां जानानौ तत्स्थित्या विरक्तावभूव । गुरुराचष्ट—यद्येवमेवाऽस्ति, तर्हि दीक्षां गृह्णीतम् । ततस्तयोर्दीक्षां दत्त्वा 'जिनभद्र' 'वीरभद्र' इत्यभिधामकुरुत । कृतवांश्चैतौ व्याकरणतर्कादिशास्त्रेषु निष्णातौ । तत इमौ सौगताऽऽगमापिपठिषया गुरुणा वारितावपि बौद्धान्तिकमगच्छताम् । स्थित्वा च तन्मठे स्तोकेनैवाऽनेहसा तदागमानधीत्य कुशाग्रसमधियौ बलेन समस्ताऽध्येतॄणामग्रेसरौ जातौ । ततः किमेतौ सौगतावान्यमतीयौ वेति संशयानो मठपतिस्तद्विनिश्चेतुकामेनैकत्रभवने परीक्षादिनं नियम्य सर्वांश्छात्रानादिष्टवान्—' युष्मद्भिः सर्वैरिह परीक्षासदने द्वारि स्थितां जिनमूर्त्तिं पद्भ्यां स्पृशद्भिरन्तः प्रवेष्टव्यम्, यश्चैवं न करिष्यति, स प्राणदण्डं भोक्ष्यति । ' ततः सर्वे छात्रास्तथैव तत्र प्राविविशुः, हंस—परमहंसौ तु मनसि बहुधा विमृश्य प्रतिमाया हृदये खटिकया रेखात्रयं विधाय, तदुपरि चरणौ निधाय तदादेशं प्रत्यपालयताम् । तद्विलोकमानो मठपतिर्मनसि निरचिनोत्—' यदेतौ जैनौ स्तः ' ततो मठपतिरेतौ हन्तुं प्रयतमानोऽभवत् । एतत्स्वरूपं विदित्वा तौ हंस—परमहंसौ ततो निरैताम् । सौगताः सुभटाश्च क्रूरास्तत्पृष्ठे दधाविरे । समीपमागच्छतस्तानालोक्य हंसः परमहंसमुवाच—त्वमरं धावित्वाऽमुष्मिन्नासन्नग्रामे शूरपालनरपतिशरणे याहि, अहमेक एव तावत्सुभटैर्योत्स्ये ' परमहंसस्त-

थाऽकरोत् । इतश्च समागतास्ते सुभटा उचितत्राणावलीभिः शरीरं चालनीकल्पं विधाय प्रान्ते हंसं मारयित्वा समागत्य च शूरपालराजान्तिकं परमहंसं ययाचिरे, परमेनं नरपतिर्नाऽदात् । प्रान्ते शूरपालनृपतेः समक्षं परमहंसेन सत्रा शास्त्रचर्चा निरधारि । तदोपतस्थिरे चाऽतिप्रौढाः सौगताचार्याः शास्त्रार्थचिकीर्षया । परममूनशेषांस्तद्स्वादेवीदर्शितयुक्त्या परमहंसः सुचिरं तैः सत्रा चर्चां कृत्वा व्यजेष्ट । तदनु शूरपालनरपालाऽनुज्ञातः परमहंसश्चित्रकूटे स्वगुरोर्हरिभद्रसूरेरभ्यर्णमागात्, तत्र च सौगतनगरगमनं, तत्कृतां परीक्षाम्, ततः पलायनम्, मार्गे हंसस्य मरणम्, शूरपालनरपतिकृतस्वरक्षणम्, तत्समक्षं बौद्धाचार्याणां शास्त्रार्थे पराजयकरणम्, पुनश्चित्रकूटाऽऽगमनान्तं कथयन्नयमपि प्राणं तत्याज ।

एतदुभयसच्छिष्याऽकालमरणसञ्जातप्रभूतदुःसहदुःखेन चोकुपितो हरिभद्राचार्यस्तदैव ततो विहृत्य शूरपालक्षितिपतेः समीपमागतवान् । अत्र च शास्त्रार्थचिकीर्नृपालेन समस्तानपि बौद्धाचार्यानजूहवत् । तेऽपि तूर्णमेव तत्रोपतस्थिरे । ततो राजसभायां मिथः शास्त्रार्थः प्रावर्तत । प्रान्ते तानशेषानसौ जिगाय, परमियतैव क्रोधाग्निर्न शशाम, अत एव महामन्त्रं प्रयुज्यैकैकशस्तान् सौगतान् सशिष्यगणान् सन्तप्ततैलपूर्णकटाहे पातं पातं निजशिष्ययुगलघातजातशुचः कृताऽऽर्हतप्रतिमाऽऽशातनायाश्च प्रतीकारं विधातुं लग्नः । एतद्वध्यकृत्यं कथमपि विदित्वा जिनभद्रसूरिस्तदुपशमार्थं समरादित्यभवदर्शकगाथात्रयं लिखितपत्रं

---

१ हरिभद्राचार्यस्य सर्वशास्त्रकुशलौ जिनभद्र—वीरभद्रनामानावुभौ शिष्यावास्ताम् । तदा तत्र चित्रकूटे सौगता अपि प्राचुर्येणाऽवर्तन्त. परमेते हरिभद्राचार्येण सापत्न्यमधृषत ; अतएव गुप्त्या युक्त्या च तदुभयशिष्यौ ते घातितवन्तः । एतद्रहस्यं कथञ्चिद्विदित्वा चेखिद्यमानः स सूरिस्तदैव निरशनचिकीरभवत्परन्तु सङ्घप्रार्थनया तदकृत्वा शिष्यसन्तत्यामिवाऽनेकग्रन्थरचनायामेव मनो न्ययुङ्क्त । इत्यलेखि भद्रेश्वरकथावली ( प्राकृतभाषामय ) ग्रन्थे ।

दत्त्वा शिष्यौ तदन्तिकं प्रैषीत्, तत्पत्रं वाचयित्वा तत्क्रोधः शशाम। सति च कोपोपशमे गुरोः पार्श्वमागत्य गुरूपदिष्टां कृतैतत्पापशुद्ध्यर्थं घोरतरां तपस्यामारेभे हरिभद्राचार्यः, परन्तु मनसि निरपत्यताप्रयुक्त-शोकसागरः प्रतिदिनमवर्द्धधीदेव। तदाऽम्बिकादेवी प्रत्यक्षीभूय तमुक्तवती–भद्र! त्वया पुरा जन्मनि कुलवृद्धिकरं कर्म नोपार्जि, अतस्तदर्थं मा शोचीः, ग्रन्थानां रचनामेव यशस्करीं सुसन्ततिं जानीहि।' ततोऽनया देवीगिरा तच्छोकमपनीय 'दशवैकालिक–न्यायप्रवेशाऽऽवश्यकप्रमुखानां कियतां ग्रन्थानां याकिनीपुत्रेति नामाङ्किताष्टीकाः, समरादित्यचरित्राऽनेकान्तजयपताकाप्रभृतिभवविरहाङ्कितचतुर्दशशतग्रन्थरत्नानि निरमिनोत्। तांश्च ग्रन्थान् कार्पासिको जिनभद्र–वीरभद्रयोः पितृव्यः सल्लिगाऽऽख्यश्च तनीतनाश्चक्राते। किञ्चायं महानिशीथसूत्रं समुद्धृत्य भावुकांश्च प्रतिबोध्याऽतिविशालचतुरशीतिजिनमन्दिराणि

---

१ तदवसरे याकिनी महत्तरा श्राविकया सार्धं दिदृक्षया तत्रागत्य तमप्राक्षीत्–एषा श्राविका स्वहस्तेन कमप्येकं पञ्चेन्द्रियं जीवं जिहिंस, तत्प्रायश्चित्तं किमस्ति ?। आचार्य उवाच–'पञ्चकल्याणकं तपः' तयोक्तम्—अस्या एकस्मिन् पञ्चेन्द्रियजीवघाते सतीदृशं प्रायश्चित्तं लग्नं चेत्त्वया बहवः सौगता आहूयन्त. हूयन्ते चेदानीं तर्हि तव कियता प्रायश्चित्तेन भवितव्यम्। इत्याकर्ण्यैव समिद्धमपि कोपं तत्क्षणमुज्झाञ्चकार सः। इत्येकस्यां कथायां दृश्यते। प्रत्यन्तरे च–हरिभद्राचार्ये सौगतानेवं जुह्वति सति कोऽप्येको विज्ञः सुश्रावकस्तत्रागत्य तद्धवनमालोक्य महाश्चर्यं मन्वान उच्चैरिमां गाथामपठीत्—

जइ जलइ जलं लोए. कुसत्थपवणाहओ कसायग्गी।
तं जुत्तं न जिणवयण अमियसित्तो चिय पज्जलई ॥ १ ॥

यदि लोके कुशास्त्रपवनाऽऽहतः कषायाग्नि र्जलं–जडं डलयोरैक्यात्, ज्वलति–तपति तद्युक्तम्। जिनवचनाऽमृतसिक्तः. न चिय–नैव प्रज्वलतीति। एनां गाथां शृण्वन्नेव कोपाद्विरराम हरिभद्रसूरिः।

१ हरिभद्ररचितग्रन्थानां १४४० राजशेखरसूरिकृत प्रबन्धप्रकाशे। रत्नशेखरसूरिकृत 'श्राद्धप्रतिक्रमणार्थदीपिका' विजयलक्ष्मीसूरिरचितोपदेशप्रासाद—खरतरगच्छीयपट्टावलीषु १४४४ संख्यानमुदलेखि।

निर्माप्य तत्प्रतिष्ठां व्यधत्त । प्रान्ते च श्रुतोपयोगतः स्वायुःक्षयं विदित्वा गुरुसेवायां तिष्ठन्नसौ हरिभद्राचार्यः समाधिना स्वरगात् । बभूवांश्चैष वादी, प्रावचनिको, नैमित्तिकः, प्रभावकश्च ! विचारसारप्रकरण–जैनपट्टावलीलेखानुसृत्या विक्रमसं० ५८५ तमेऽब्दे स्वर्गमनमभूदेतस्येति प्रतीयते । परमेतद्विरचितग्रन्थेषु धर्मकीर्त्ति–कुमारिलप्रमुखानां नामोल्लेखो वर्वर्त्ति, समुपलभ्यते च जिनभद्रगणिक्षमाश्रमणरचित–विशेषाऽऽवश्यकभाष्यादिग्रन्थाऽवतरणम् । अत एतस्य स्वर्गवाससमयो विक्रम सं० ७८५ इत्येव निश्चेतव्यः । विद्याधराऽन्वयजानिमानयमान्तिमः श्रुतधरो बभूवेति विदाङ्कुर्वन्तु सुधियः । द्वितीयो हरिभद्रसूरिर्वैक्रमीये ९६२ तमे हायने बभूव । तदन्तेवासी सिद्धर्षिगणी बौद्धानां समीपमेकविंशतिवारान् गमाऽऽगमौ व्यधत्त । तत्प्रतिबोधाय ललितविस्तराऽऽख्यशक्रस्तववृत्तिं रचितवान् । तृतीयस्तु विक्रमस्य द्वादशशताब्यामभूत् । एतद्रचित–मुनिपतिचरित्रादयो ग्रन्था अद्याप्युपलभ्यन्ते ।

एवं जिनभद्रगणिक्षमाश्रमण–शीलाङ्काचार्याऽभयदेवसूरि–मलयगिरिप्रभृतयष्टीकाकाराः स्थविराः सकला अपि मान्यतमा अभूवन् । अबोभोच्च पादलिप्ताचार्यः, येन पादलेपादाकाशे समुड्डीय शत्रुञ्जय–गिरनार—नन्दिगिर्यष्टापद—सम्मेतशिखरादिबहुषु तीर्थेषु गत्वा जिनांश्च वन्दित्वा पारणमकारि । बोभवाञ्चकार श्रीबप्पभट्टिसूरिर्येन प्रतिबोधितो गोपनगराधिपतिरामराजस्तदुपदेशाच्छत्रुञ्जय तीर्थं समुदध्रे । अथाभिग्रहवतो व्रजतस्तस्य बप्पभट्टिसूरेस्तमाभिग्रहं खिवरसंडीनगरे शत्रुञ्जयावतारप्रासादं प्रतिमापादुकाभ्यां विभूषितं प्रदर्श्य देवता पूरयामास । तत आमभूभुजा गोपनगरे वसूत्तरशतदन्तिदघ्नप्रासादं निर्माय तत्राष्टादशभारस्वर्णमयी सर्वाऽर्थसम्पाद्विधायिनी श्रीवीरविभोः प्रतिमा स्थापिता ।

१२९ श्रीवादिदेवसूरिनिबन्धः—

तत्र गुर्जरदेशे अष्टादशशतीमण्डलान्तर्गतायां मद्दाहृतनगर्यां प्राग्वाटज्ञातीयवीरनागश्रावकस्य धर्मपत्न्या जिनदेव्याः कुक्षेः सं० ११४३ वत्सरे समुत्पेदिवान् भवान् । आसीच्च गार्हस्थ्ये तत्रभवतां ' पूर्णचन्द्र ' इति प्रसिद्धाभिधानम् । तत्र महामार्यामुत्पन्नायां सपरिकरोऽयं श्रेष्ठी नगरादमुष्मान्निर्गत्य दक्षिणगुर्जरीये पाटनगरस्तम्भतीर्थे ( भरुचनाम्ना प्रसिद्धे ) समाययौ । तदाऽप्रतिबद्धविहारी गुरुर्मुनिचन्द्रसूरिरपि तत्राऽऽगतवान् । अमुष्य वचसा तत्रत्यजैनसङ्घः सत्कृतवानेनं वीरनागम्, दत्तवांश्चाऽमुकस्मै सम्यगाश्रयम् । एतर्हि पूर्णचन्द्रः शिशुरवोभोदष्टवर्षीयान् । एनमालोक्य भाग्यशालिनं शासनप्रभावकश्चाऽवगत्य मुनिचन्द्रसूरिर्वीरनागं पूर्णचन्द्रं ययाचे । श्रेष्ठिना व्याहारि—स्वामिन् ! एक एवास्ति मे पुत्रः, वार्द्धक्ये चाऽयमेव ममाऽऽधारो भविता, तथापि भवदादेशं न लुम्पानि । तत्रभवतां जिघृक्षैव चेत्तर्हि मयादत्तमेवैनमवगच्छ । सूरिरुवाच—मद्गच्छे मुनीनां पञ्चशती विद्यते, तान् सर्वान् पुत्रानेव जानीहि, परमयं पूर्णचन्द्रः शासनप्रभावको भवितेत्यसौ दातव्य एव वरम् । गुर्वादेशं जीवितादप्यधिकं पाल्यम्, इति मन्वानः सुश्रावको वीरनागः स्वस्त्रियं सर्वं प्रतिबोध्य पूर्णचन्द्रं तस्मा अदात् । मुनिचन्द्रसूरिस्तस्मै नवाब्दाय संवत् ११५२ तमे हायने दीक्षां दत्तवान्, धृतवांश्च ' रामचन्द्र' इति तन्नाम । तदनु गुरुदेवाऽसीमकृपयाऽचिरादेवैष व्याकरणकाव्यालङ्कारतर्कज्योतिःप्रमुखानि सम्यगधीत्य स्वपरसमयवेदिनामसाधारण्यमाप । ततोऽसौ रामचन्द्रमुनिर्गुर्वादिष्टो धवलकपुरे द्वैतवादिशैववादिनः कोविदपुङ्गवान्, काश्मीरे, सागरे, सत्यपुरे, चाऽनेकशो

१ पुरा किलाऽर्बुदाचलोपत्यकाभूभागो ' अष्टादशशती, देशतया व्यवाह्रियत, प्रासिध्यच्च सर्वत्र गुर्जरीयैकप्रान्तौपम्येन । २ तदीयदक्षिणोपत्यकायां प्राकाराऽऽकारया गिरिमालया, परिवेष्टित इदानीन्तन ' मदुआजी' ग्राम एव तदानी 'मद्दाहृत' नाम्ना प्रथितो धनजनसमृद्ध्या सम्पन्नश्चाऽऽसीत् ।

त्रिपश्चिद्वरान्, नागपुरे गुणचन्द्रदिगम्बरम्, चित्रकूटे भागवत–शिवभूतिम्, गोपगिरौ पं० गङ्गाधरम्, धारापुर्यां धरणीधरभट्टाचार्यम्, पुष्करे पद्माकरभट्टम्, भृगुक्षेत्रे कृष्णभट्टं चर्चायामजैषीत्। लेभानश्च वादिविजयीत्युपाधिम्। आसंश्चाऽमुष्य विमलचन्द्र–प्रतिभानिधानहरिचन्द्र–पं० सोमचन्द्र–कुलभूषण–पार्श्वचन्द्र–प्राज्ञशान्तिचन्द्र–यशोवदशोकचन्द्रनामानः सप्त परमसखाः। वादिविजयिनमेनं रामचन्द्रमुनिपुङ्गवं योग्यतमं विदित्वा मुनिचन्द्रसूरिणा श्रीसङ्घकृतमहामहेनैतकस्मै सं ११७४ शरद्याचार्यपदं 'प्रादायि, अधारि च वादिदेवसूरिः' इत्याभिधानम्। अमुष्मिन्नेवाऽवसरे वादिदेवसूरिः श्रमणायै पितृष्वस्ने महत्तरापदं प्रदाय चन्दनबालेति तदभिधानमकरोत्। तदनु धवलकपुरं ( धोलकं ) गत्वोद्वयश्रावकेन कारिते 'ऊदावसही' नाम्ना प्रसिद्धे चैत्ये श्रीसीमन्धरस्वामिनो बिम्बं प्रातिष्ठिपदसकौ।

अथैकदाऽसौ विहरन्नर्बुदाचलं यात्रार्थमागात्, कतिपयैः श्रावकैरम्बाप्रसादमन्त्रिणा च सार्धमुपरि समारुरोह। अधिमार्गमम्बाप्रसादो मन्त्री प्रचण्डेन दन्दशूकेनाऽदश्यत, तदैव वादिदेवसूरिश्चरणोदकेन तद्विषमुददीतरत्। ततः सानन्दाः सर्वे युगादिदेवस्य यात्रामकार्षुः। अत्राऽम्बादेवी प्रत्यक्षा सती देवसूरिमभ्यधात्–'त्वयि सपादलक्षदेशे तिष्ठति सति त्वद्गुरुर्मुनिचन्द्रसूरिर्मामुवाच–'यन्मामकमायुरष्टमासिकमेवाऽस्ति' अतएवाऽन्यत्र कुत्राप्यगच्छन् केवलमणहिल्लपुरमेव याहि' इत्थं व्याहृत्य देवी तिरोहितवती। ततोऽसौ देवीगिराऽप्रतिबद्धविहारेण शीघ्रमेवाऽणहिल्लपुरे गुरोः पार्श्वमागतवान्। तदैव भागवतः कश्चिद्देवबोधनामा विद्वांस्तत्राऽऽगत्य राजद्वारोपरि—

१ असौ वादिवेतालश्रीशान्तिसूरेः प्रमाणशास्त्रं सम्यगधीत्य 'तार्किकशिरोमणि' रिति पदभागासीत्। अतएवाऽमुके निजान्तेसदि रामचन्द्रे स्वभ्यस्तं समस्तं प्रमाणशास्त्रं न्यधत्त।

एकद्वित्रिचतुःपञ्च–षण्मे न कमनेनकाः ।
देवबोधे मयि क्रुद्धे, षण्मेन कमनेन काः ॥ १ ॥

इमं श्लोकं लिखित्वा तत्रत्यान् सकलान् विदुष उवाच–भोः ! पण्डिताः ! 'श्लोकमेनं षण्मासैरपि व्याख्यात, तदभावे विजयपत्रं मे दद्त ।' परिपूर्णेऽपि तदवधौ कोऽपि विद्वांस्तच्छ्लोकार्थं कर्त्तुं नाऽचीकमत। तदवसरे राजानं गदितवानम्बाप्रसादो मन्त्री–स्वामिन्! एतस्यार्थं वक्तुमेको वादिदेवसूरिरेव शक्तिं बिभर्त्ति, नाऽपरः । स चाऽधुनाऽत्रैव जैनीयोपाश्रये वर्तते, अतः स एव पृच्छ्यताम् । नरनाथस्तदैव श्लोकेन सह प्रार्थनापत्रं तदन्तिके प्राहिणोत् । देवसूरिरपि तर्ह्येव गुरोरादेशमाश्रित्य "एकं प्रत्यक्षमात्रं चार्वाकीयम्, द्वे–प्रत्यक्षाऽनुमाने सौगत–वैशेषिकयोरभिमते, त्रयः–प्रत्यक्षानुमानाऽऽगमाः कापिलाः, चत्वारः–प्रत्यक्षानुमानोपमानाऽऽगमा नैयायिकीयाः, पञ्च–प्रत्यक्षानुमानोपमानाऽर्थापत्त्याऽऽगमाः प्रभाकरीयाः, षट्–प्रत्यक्षानुमानोपमानाऽर्थापत्त्याऽऽगमाऽभावा मैमांसका एते सकलाः प्रागुक्ता षण्मा प्रमाणं यस्य तादृशे मयि देवबोधे, पण्डिते, क्रुद्धे, सति को ब्रह्मा च मः शिवश्च नस्तरणिश्च, ईर्लक्ष्मीस्तस्या नो नेता–भर्त्ता विष्णुश्चैतेषां द्वंद्वे ते, ते च कायन्ति शब्दायन्त इति का जल्पाकाश्चेति कर्मधारये 'कमनेनकाः' ब्रह्म–शिव–सूर्य–विष्णवो वक्तारो न भवन्ति, किन्तु मूकन्त्येव । तर्हि षण्मासा माऽवधिर्यस्य तेन कमनेन–कामुकेन मनुष्येण का वार्त्ताः ?, अमीषां का गणनाः ?" इति तदर्थं वैशद्येन विलिख्य राज्ञः समीपे प्रैषीत् । तद्दर्शनेन देवबोधप्रभृतिविद्वन्मण्डली सकलापि वादिदेवसूरिमतोष्टवीत् ।

तत्रत्यः सर्वर्द्धिकः श्रेष्ठी नाहडाऽऽख्यः समेत्य नमस्कृत्य च सूरिमाचष्ट–प्रभो ! कोऽपि मे शुभादेशः क्रियताम्, येन मे लक्ष्मीः सदु-

प्रयुज्यत । सोऽवदत्—जिनसदनमेव निर्मापय, अमुना शुभकृत्येन यथा लक्ष्म्याः सदुपयोगो जायते, तथा नान्येन केनापि । तदादेशेन श्रेष्ठी हिमाचलोपमं महोन्नतं महार्हमणिगणमण्डितं चैत्यं श्रीवर्द्धमानप्रभोरद्भुतं कमनीयतमं बिम्बं च निरमीमपत् । विक्रम सं० ११७८ वर्षे मुनिचन्द्रगुरौ समाधिना द्यामुपगते सं० ११७९ तमे च नाहडश्रेष्ठी तत्र मन्दिरे वादिदेवसूरिणा महावीरप्रभोर्बिम्बं सहाञ्जनशलाकया प्रातिष्ठिपत् । तदनन्तरं सूरिस्ततो विहृत्य धन्वानि नागोरनगरमायातवान् । तत्राऽऽह्लादनो राजा दिदृक्षया तत्पार्श्वमागतवान् । तदोक्तवांश्च तद्वन्दनां विधाय देवबोधः—

यो वादिनो द्विजिह्वान्, साटोपं विषममानमुद्गिरतः ।
शमयति स देवसूरिर्नरेन्द्रवन्द्यः कथं न स्यात् ॥ १ ॥

अमुनोक्तेनाऽऽह्लादनः क्षितिपतिराचार्यगुणान् समवगत्य कतिचिद् दिनानि तत्रैव तमतिष्ठिपत् । अत्रान्तरे पाटणपुराधीशः सिद्धराजश्चतुरङ्गपृतनस्तत्रागात्, सर्वतो नगरीमवाऽरुणच्च । परन्तु तत्र विराजमानं देवसूरिं श्रुत्वा यथाऽगात्, तथैव निजपुर्यां परावर्तत । ततः स्वमन्त्रिणं प्रेष्य देवसूरिं निजपुर्यामजूहवत् । आगच्छदाचार्योऽपि ततो विहृत्य पट्टणपत्तने । तस्थिवांश्चात्रैव बहून् वासरान् नरपतेरत्याग्रहात् । ततः सिद्धराजः सह चतुरङ्गया चम्वा समागत्य नागोरे स्वाऽधिपत्यं चक्रिवान् । अथैकदा सङ्घाग्रहादसौ पट्टणपत्तनाद्विहृत्य कर्णावतीपुरीमेत्य चतुर्मासीमस्थात् । तत्र जयकेशिराजस्य गुरुः कुमुदचन्द्रो दिगम्बरस्तेन सत्रा चर्चाचिकीर्षाऽभ्यजायत, परन्तु समयाऽननुकूल्यं विमृश्य तमुवाच देवसूरिः—एवमेव कामयसे चेच्चतुर्मास्याः परं पट्टणपुराधीशसिद्धराजस्य समज्यायां नौ भाविनीयं संख्या श्रेयस्करीति । कुमुदचन्द्रोऽपीमामुररीकृतवान् । अथतावुभावपि चतुर्मासीपूर्त्यां पट्टणनगरमयाञ्चक्राते । तत्र कुमुदचन्द्रः सिद्धराजस्य गाङ्गलीप्रमुखकतिपयमन्त्रिणो द्रव्यप्रदानेनाऽऽत्मसाच्च-

कार । एतत्स्वरूपं तत्रत्यास्थाहड–नागदेवादयः श्रीमन्तः श्रावका देवसूरिं सूचयामासुः । सूरिरुवाच–कामपि चिन्तां मा कुरुत, सर्वं गुरुदेवकृपया भद्रमेव भविष्यति, अत्र मा संशयीध्वम् । वादिनः पक्षे केशवादिविद्वांसः कतिपयी साधारणजनताऽप्यासीत् । सूरिपक्षीयाश्च महाकविश्रीपाल¹–भानुप्रमुखा विद्वत्तमा बभूवुः । महर्षि–उत्साहसागर–रामा एते त्रयः प्राज्ञाः सभापतेः सिद्धराजस्य सम्मतिदाया न्ययुज्यन्त । ततो विक्रम सं० ११८१ वर्षीयवैशाख्यां पौर्णमास्यां राजकीयवादशालायां सभ्यसभापतिविहितोचितप्रबन्धे स्त्रीनिर्वाणोपरि द्वयोर्विचारणा प्रावर्त्तिष्टतमाम् । तत्र सुचिरं सद्युक्तिसूक्तियुक्त्या खण्डनमण्डने विधाय, सभ्यान् सुरञ्जयन् देवसूरिः प्रान्ते कुमुदचन्द्रमनुत्तरप्रमाणपटलेन निरुत्तरीकृत्य जेजयीति स्म । ततः सभापतिना समेषां सभ्यानां सहानुभूत्या देवसूरये विजयपत्रमदायि । आज्ञापि च पाखण्डिनं कुमुदचन्द्रं तन्नगरीमुज्झित्वाऽन्यत्र निर्गन्तुम् । व्यतानि किलैषा चर्चा स्वस्वग्रन्थेषु श्रीहेमचन्द्रसूरि–श्रीचन्द्रसूरि-राजवैतालिकादिविद्वद्भिः । प्रादायि च राज्ञा सिद्धराजेन देवसूरये विजयपारितोषिकं मुद्रालक्षम् । तदेष सूरिर्नाऽग्रहीत्, ततस्ताभिरेव लक्षमुद्राभी राजा गुर्वाज्ञया श्रीआदिनाथप्रासादं कारयित्वा तत्र विक्रमसं० ११८३ वर्षे देवसूरिप्रमुखैश्चतुर्भिराचार्यैरादिनाथीयबिम्बस्याऽञ्जनशलाकया सह प्रतिष्ठां कारितवान् । कृतवांश्चायं

---

१ असौ प्राग्वाटवंशीयपरमार्हत–महाकविलक्ष्मणस्य सूनुरभूत् । एनं जैना इतराश्च विद्वांसोऽणहिल्लपतिसिद्धराजसभायां महाकवि––कविराज––कविचक्रवर्त्ति––कवीन्द्रचूडामणि इत्युपाधिभिर्विभूषयामासुः । सिद्धराजोऽपि बालसखत्वाद् भ्रातृशब्देनैव सदाऽऽह्वयति स्म, आसीच्च संस्कृत–प्राकृतयोरद्वितीयो विद्वान्, बभूवांश्चासौ सिद्धराज–कुमारपालयोः प्रेमपात्रम्, लक्ष्म्याः सदनञ्च । सम्प्रत्यपि तद्विद्वत्तां तद्रचितेषूपलब्धौ चतुर्विंशतिजिनयमकस्तुति वडनगरप्राकारप्रशस्तिनामकौ ग्रन्थौ व्यङ्क्तः । अमुष्य पुत्रः सिद्धपालः पौत्रो विजयपालश्च महाकवी विद्वत्तमौ बभूवतुः । एषां मध्ये लक्ष्मणो विक्रमवत्सरतः ११००–११५०, श्रीपालः ११५१–१२१०, सिद्धपालः १२११–१२५०, विजयपालः १२५१–१३०० समय आसीत् ।

प्रसाढ्यं विद्वत्तापूर्णपरिचायकं प्रमाणनयतत्त्वालोकाऽलङ्कारनामकप्रमाणशास्त्रीयवृहद्विवरणलक्षणं स्याद्वादरत्नाकरं नामग्रन्थम्। कृतवन्तौ चैतन्निर्मितौ तदन्तेसदौ विद्वांसौ भद्रेश्वर–रत्नप्रभाचार्यौ साहाय्यम्। आसीच्चाऽमुष्य शिष्यसमुदाये कार्यदाक्षिण्यं, विद्याव्यसनित्वं चारित्रपात्रत्वं च। अतएवाऽनेकजिनमन्दिरसंभालनादिकारिताऽप्यमुष्मिन्नासीत्। निरैक्षिष्ट च स स्वयमेव तेषां सर्वेषां याथातथ्येन सर्वम्। धन्वनि जालोरनगरीयशतघ्नीप्रासादे वर्वर्त्तीदृशो लेखः–यत्स्वर्णगिरेरुपरि परमार्हतराजकुमारपालेन कारितं पार्श्वनाथचैत्यं वादीन्द्रदेवाचार्यीयशिष्यपरिवारस्य समर्पितमासीत्। अबोभोच्चासौ जैनशासने प्रखरो विद्वान्, दिग्गजदेश्यवादिप्रभावकश्च। अमुनैव हेतुना राजदत्तं वादीन्द्रपदप्रमाणपत्रमाचार्यपदं च युगपदेष बिभराञ्चकार। प्रान्ते च निजपट्टभारं भद्रेश्वरसूरिं विधाय सं० १२२६ तमे वर्षे नभःकृष्णसप्तमीगुरौ घस्त्रे समाधिना द्यामगादयम्। एतदीयगुरुशिष्यपरम्परावंशवृक्ष एवं वाचकीति–



१३० श्रीहेमचन्द्रसूरिनिबन्धः—

तत्र गुर्जरदेशे धन्धुकापुर्यां मोढवंशावतंसचाचाऽभिधानश्रेष्ठिनः 'पाहिनी' नाम्न्या धर्मपत्न्याः सुशीलायाः कुक्षितः सं० ११४५ वर्षे कार्त्तिक्यां पूर्णिमायां मध्यरात्रे प्रादुरासीदसौ । पप्रथे च गार्हस्थ्ये चङ्ग-देवाभिधानेन । ततः कौटिकगणीयवज्रशाखा–चन्द्रकुलयोराचार्यः श्री-देवचन्द्रसूरिः स्तम्भतीर्थस्य पार्श्वनाथचैत्ये वैक्रमे ११५० वत्सरे तपः-शुक्लचतुर्दशीशनौ पाहिनीमातुरादेशेन चङ्गदेवं दीक्षयित्वा 'सोमचन्द्र' इति नाम धृतवान् । ततो गुरुकुले वसन्नसकौ व्याकरणन्यायकाव्यसा-हित्यादीनि सम्यगधीत्याऽसाधारणं पाण्डित्यमाप। ततोऽप्यतिशयबुद्धि-विकाशाय सिद्धसारस्वतपदप्राप्तये च गुर्वाज्ञां लात्वा, कतिपयगीतार्थैः सह सोमचन्द्रः काश्मीरादिशि प्रययौ । प्रथमदिने स्तम्भतीर्थान्तिके रैवतावतारतीर्थमागत्य धर्मशालायां तस्थिवान् । तत्र गीतार्थमुनिगणा-नुमत्या सोमचन्द्र एकाग्रमनसा जपितुमलगत्सरस्वतीमन्त्रम् । अर्धरात्रे च सरस्वतीदेवी प्रत्यक्षीभूय 'सिद्धसारस्वतो भव' इति वरमस्मै दत्तवती, निगदितवती च–'भोः! काश्मीरजिगमिषामुज्झ, मत्प्रसादेन सर्वासु विद्यासु नैपुण्यं ते भविष्यति' एवं व्याहृत्य देवी तिरोदधे। तदनु प्रातरेव गुरोः पार्श्वमेत्य सरस्वत्या वरदानादिकमुवाच, तच्छ्रुत्वा गुरुः प्रामोमुदीत्तमाम् ।

विक्रम सं० ११६६ वर्षे वैशाखशुक्लतृतीयायां मध्याह्नवेलायां देव-चन्द्रसूरिः सोमचन्द्रायाऽऽचार्यपदं प्रदाय, हेमचन्द्रसूरिरित्याख्यां दधार। तदवसर एव स्वजनन्यै पाहिन्या अपि प्रवर्त्तिनीपदं दापयित्वा तत्पट्ट-मधिरोढुं गुरुणाऽऽदेशयच्च ताम्। ततो हेमचन्द्रसूरिरणहिल्लपुरमागतवान्। यातवांश्च तत्र सिद्धराजाक्षितिपतेरधिसभं मुख्यत्वम् । तत एतच्छुभद-र्शनप्रसङ्गात् सिद्धराजो मालवदेशं जित्वा, धारानगरे भोजराजसङ्गृहीत-मनेकविशिष्टवस्तुभिः सार्धं ज्ञानभाण्डागारं स्वायत्तमकरोत् । तत्र च

भोजराजकृतव्याकरण–तर्कालङ्कार–वैद्यक–ज्योति–र्वास्तुशास्त्राऽध्यात्म-शास्त्रसंग्रहमवलोक्य,नवीनव्याकरणादि निर्माप्य सङ्ग्रहीतुं मनासि चकमे। ततो राजा गुर्जरीयाऽनेकविदुषः समाकार्य निजेच्छां व्यानञ्ज। परन्तु तदानीन्तनानां गुर्जरीयविपश्चितामीदृशः कोऽपि नाऽऽसीत्, यो हीदृशं सर्वाङ्गीणं नव्यं व्याकरणं रचयेत। अत एतत्सम्पादनाय सर्वे हेमचन्द्र-स्यैव नामाऽब्रुवन्। तदनु सिद्धराजस्य महत्या प्रार्थनया हेमचन्द्रसूरिः सिद्धहेमशब्दानुशासनं नामाऽपरं व्याकरणं निरमिनोत्। पुनरेतल्लघु-वृत्ति–बृहद्वृत्ति–धातुपाठ–लिङ्गानुशासनाद्युपयुक्तान्यङ्गानि निर्माय सम-लङ्करोच्च। ततः सिद्धराजो नियतीकृतलेखकशतत्रय्या तस्या बह्वीः प्रतिलिपीरलेखयत्। तासु विंशतिं काश्मीरे सरस्वतीभाण्डागारे, शेषा-श्चाङ्ग–वङ्ग–कलिङ्ग–लाट–कर्णाट–कोकन–सौराष्ट्र–महाराष्ट्र–कच्छ–मालव–सिन्धु–सौवीर–नेपाल–पारसीक–मुरुण्डक–गङ्गापार–हरिद्वार–काशी–चेदि–गया–कुरुक्षेत्र–गौड–कामरूप–सपादलक्ष–जालन्धर–सिं-हल–महाबोधादिदेशेषु प्रैषीत्। एतदभिनवव्याकरणपठनपाठनार्थं गुरोरादेशेन काकलाख्यं कायस्थं व्याकरणादिविविधशास्त्राऽध्यापनपटी-यांसं न्ययुङ्क्त। प्रतिमासश्च शुक्लपञ्चम्यां परीक्ष्य समुत्तीर्णच्छात्रेभ्यः स्वर्णाभूषणानि ददते स्म स भूजानिः। सम्पूर्णं तदधीत्य पाण्डित्यं सम्पाद्य गृहं गच्छतस्ताञ्छिबिकासनच्छत्रस्वर्णाभरणादिप्रदानेन सत्कु-र्वन्नासीच्च। अतस्तत्पठनपाठनपरिपाटी सर्वत्र वरीवृधाञ्चक्रे।

इत्थं हेमचन्द्रसूरे राजसत्कारं दर्शं दर्शं मनसि दोदूयमाना भूसुराः सिद्धराजं ततो निवर्तयितुं यथाशक्ति प्रयेतिरे। अथैकदा हेमचन्द्रसूरि-श्चतुर्मुखचैत्ये व्याचक्षाणो बहुषु जैनजैनेतरश्रोतृवर्गेषु शृण्वत्सु पञ्चापि पाण्डवानां शत्रुञ्जयगिरौ सिद्धिगमनमब्रवीत्। तदाकर्ण्य तद्द्वेषिणो ब्राह्मणा राजानमब्रुवन्–राजन्! विरुद्धमिदं भाषते सूरिः, यतो महा-भारते कृष्णद्वैपायनो वेदव्यासस्तेषां स्वर्गमनं हिमाचलोपरि निजगाद।

अतएव विज्ञेन त्वयैतन्निर्णेतव्यम् । तत एतान्निश्चिचीषू राजा तमाचार्यमपृच्छत् । सोऽवक्-राजन् । भारतीयोक्त्या मदुक्तौ नास्त्यसामञ्जस्यम्, चेदुभयत्र पञ्चैव ते मन्येरंस्तर्ह्येव तत्सम्भाव्येत । राजोवाच-भगवन् । किन्ते पञ्चभ्योऽधिका आसन् ?, गुरुराख्यत्-अथ किम् ?, यतो भारतमेव तदाधिक्यं व्यनक्ति । यर्हि भैष्मं शवमुद्वाह्य कस्यचिन्नगस्योपरि तत्परिजनाः संस्कर्तुमलगन्, तर्हि दिव्यावागभवत्—

अत्र भीष्मशतं दग्धं, पाण्डवानां शतत्रयम् ।
द्रोणाचार्यसहस्रन्तु, कर्णसंख्या न विद्यते ॥

इति व्यक्तमेव तेषामनेकत्वम् । तत्राऽऽर्हतपञ्चानां तेषां सिद्धाचलोपरि निर्वाणोक्तौ को विरोधः ?, इत्याचार्यवचसा राजा प्रससाद, वैपक्षिकास्ते मौनमेव भेजिरे । एवमेवैकदा नृपसदसि राजपुरोहिताऽऽलिगप्रमुखा आख्यन्-राजन् ! जैनसाधूनां व्याख्याने महिला आयान्ति, ददति च ता एभ्यः सरसं भोजनम् । एवं सत्येषु ब्रह्मचर्यसंरक्षणं कथं सम्भवति ? । अस्याप्याचार्यः-

सिंहो बली द्विरदशूकरमांसभोजी, सम्वत्सरेण रतिमेति किलैकवेलम् ।
पारापतः खरशिलाकणभोजनोऽपि, कामी भवत्यनुदिनं वद कोऽत्र हेतुः ।१।

अमुना श्लोकेन मुखत्रोटमुत्तरमकृत, तच्छ्रुत्वा पुनस्ते किमपि वक्तुं नोत्सेहिरे। अथ पुत्रकामो राजा हेमचन्द्रसूरिणा सह शत्रुञ्जयगिरि-रैवतगिर्योर्यात्रां विधाय सोमेश्वरपत्तनं गत्वा ' कोडिनार ' पुर्यामम्बादेव्यादर्शनार्थमाययौ । अत्राचार्य उपवासत्रयीं विधाय देवीमारराध । प्रत्यक्षीभूय साऽऽख्यत्-' राजा सिद्धराजः पुत्रं ' नाऽप्स्यति, तदुत्तराधिकारी च तत्पितृव्यपुत्रस्य भ्रातुः प्रपौत्रः कुमारपालो भविता ।' इति व्याहृत्य साऽदृश्यतामापत् । आचार्यः सर्वमेतत्सिद्धराजमाचचक्षे । ततो राजा कुमारपालविघाताय यावच्छक्ति प्रायतत, परमेतस्याऽऽयुः

पुण्ययोः प्राबल्येन राज्ञः सर्वेऽपि यत्ना वैफल्यमेवाऽव्रजन् । यर्हि वैक्रमे ११९९ वर्षे राजनि सिद्धराजजयसिंहे स्त्वर्याते त्रिभुवनपालपुत्रः कुमारपालस्तदासनं जग्राह। अयं हि निजप्रचण्डभुजदण्डबलादरातिवर्गं सामस्त्येन विजित्य, दिग्जयश्रियं वितत्य स्वराज्यं विशालमकरोत् । ततो महामात्यवाग्भटप्रेरितो राजा कुमारपालो हेमचन्द्रसूरिमानाय्य मुदा तदुपदेशं श्रावं श्रावं जैनसिद्धान्तं समभ्यस्य तदन्तिके श्रावकीय-द्वादशव्रतं जग्राह । नह्येतावदेव, किन्तु स्वदेशेषु चतुर्दशमित्रराज्येषु[1] च सर्वत्राऽमारिपटहं सङ्घोष्य मद्य–मांस–देवनसेवन–वेश्यागमनाऽऽखे-टकरण–स्तैन्य–परदारागमनलक्षणसप्तव्यसनिनः स्वराज्यान्निरगमयच्च । अतएव 'परमार्हत' 'राजर्षि' 'राजपितामह' 'परनारीसहोदर' 'विचारचतुर्मुख' 'शरणागतवज्रपञ्जर' 'मेघवाहन' इत्युपाधिसप्तकेन सर्वत्र प्रख्यातिमागात् । अजहाच्चाऽपुत्राणां धनाऽऽदानम् । तारङ्गगिरि–रैवतगिरि–सिद्धाचल–स्वर्णगिर्याद्यनेकपावनस्थानेषु गगनचुम्बिजिनचैत्यानि कारयित्वा तेषां सहाञ्जनशलाकया प्रतिष्ठां गुरुणा हेमचन्द्रसूरिणाऽचीकरच्च । तेषु कतिपयानि तान्यद्यापि तत्कीर्त्तिं व्यञ्जन्ति ।

अथैकदा तस्य कुमारपालस्याऽऽर्हतोपासकतां हापयित्वा वैष्णवोपासकतां विधातुं कश्चिदेको वैष्णवाचार्यो देवबोधिः समागात् । अकरोच्च मान्त्रिक्या विद्यया राजानं संशयालुम् । ततो हेमचन्द्रसूरिर्नृपतेः सदसि मन्त्रशास्त्रे प्रमाणशास्त्रे च चर्चां कृत्वा देवबोधिं व्यजेष्ट । नह्येतावदेव किन्तु राज्ञः स्वान्ते प्रागिवाऽऽर्हतोपासकतां सुदृढामा-

---

१ प्राच्यां कुरु–शूरसेन–कुशावर्त्त–पञ्चाल–विदेह–दशार्ण–मगधाऽऽदीन्, उदीच्यां काश्मीरोड्डियाण–जालन्धर–सपादलक्षपर्वताऽऽदीन्, अवाच्यां लाट–महाराष्ट्र–तिलङ्गाऽऽदीन्, प्रतीच्यां सौराष्ट्र–ब्राह्मण–वाहक–पञ्चनद–सिन्धु–सौवीरादीन् देशानसावशिषदिति सोमसुन्दरसूरिशिष्यजिनमण्डनगणिकृतकुमारपालप्रबन्धेऽलेखि ।

नीय यावज्जीवं मानभ्रष्टस्तथा कारितो राज्ञा यथा स जात्वपि जैनमुनिना सत्रा शास्त्रार्थस्य नामापि नो गृह्णीयात् । अतएवाऽष्टादशदेशाधिपा राजान एकीभूय हेमचन्द्रसूरये ' कलिकालसर्वज्ञ ' इति विरुदं ददुः । राज्ञः कुमारपालस्य कुलदेव्यै महिषबलिराश्विनचैत्रमाघमासीयनवरात्रोत्सवे शाश्वतमासीत् । तमार्हतधर्मस्वीकारे कुमारपालो न्यवर्तयत् । तेन प्रकुपिता देवी राजानं पीडायितुं लग्ना । ततो हेमचन्द्रसूरिणा मन्त्रेणाऽऽकृष्य महाक्लिष्टा यावज्जीवं राज्ञो महिषबलिमजहात् । अग्रहीच्च स्वयमप्याजन्म सत्यमहिंसामयमार्हतमेव धर्मम् ।

असौ हेमचन्द्रसूरिरार्हते शासने प्रावचनिको धर्मोपदेष्टा, कविः, प्रभावकश्चाऽभूत्तमाम् । शासनसेवनमप्यसौ द्विधाऽकार्षीत्–तत्रैकन्तु राज्ञः प्रतिबोध्य जैनीकृत्वा तैश्च जैनसिद्धान्तं समस्तदेशे व्यतीतनत् । सर्वाङ्गसुन्दरसाहित्यविरचनेन जैनशासनस्य गुर्जरदेशमुखस्य च समुज्ज्वलीकरणमपरञ्च । एतद्रचितग्रन्थराशिमध्ये साम्प्रतम् १ योगशास्त्रम्, २ प्रमाणशास्त्रम्, ३ प्रमाणमीमांसा, ४ छन्दःशास्त्रम्, ५ अलङ्कारचूडामणिः, ६ अनेकार्थकोषः, ७ अभिधानचिन्तामणिः, ८ उणादिसूत्रवृत्तिः, ९ उणादिसूत्रविवरणम्, १० सवृत्तिधातुपाठः, ११ सवृत्तिधातुपारायणम्, १२ धातुमाला १३ निघण्टशेषः, १४ बलाऽबलसूत्रवृत्तिः, १५ शेषसंग्रहनाममाला, १६ शेषसंग्रहसारोद्धारः, १७ सवृत्तिविवरणलिङ्गानुशासनम्, १८ हेमवादानुशासनम्, १९ हेममञ्जूषा, २० महावीरद्वात्रिंशिका, २१ द्व्याश्रयकाव्यम्, २२ देशीनाममाला, २३ शीलोञ्छनाममाला, २४ वीतरागस्तवः, २५ त्रिषष्टिशलाकापुरुषचरित्रम्, २६ षड्दर्शनविचारः, २७ जातिव्यावृतिन्यायः, २८ अन्यदर्शनवादविवादः, २९ पाण्डवचरित्रम्, इत्यादयो ग्रन्था उपलभ्यन्ते । अमुष्य जीवनेऽनेकचमत्कारिघटनावार्त्तोपलभ्यते, सा तु श्रीकुमारपालमहाकाव्य–

कुमारपालप्रबन्धादिग्रन्थेभ्यो विज्ञैर्विज्ञेया । इत्थं शासनसेवां विधाय कलिकालसर्वज्ञो हेमचन्द्राचार्यः ९ वर्षाणि गार्हस्थ्ये, १२ वर्षाणि दीक्षायाम्, ६३ वर्षाणि सूरिपदे चेत्थं सर्वायुश्चतुरशीतिवर्षाण्युपभुज्य विक्रमसंवत् १२२९ तमे वर्षे समाधिना स्वर्लोकमध्यवात्सीत् । आसीच्चायं कोटिकगणीयवज्रशाखीयचन्द्रकुलस्याऽऽचार्यः, परन्तु त्रिषष्टिशलाकापुरुषचरित्रस्य प्रशस्त्यामसौ स्वं पूर्णतल्लीयमलेखीत्, अमुनाऽनुमीयते–यन्मूलगच्छः कौटिकगण एव, पूर्णतल्लगच्छस्तु तदवान्तरभेदः । एतत्पट्टधरः प्रखरविद्वान् कतिपयग्रन्थानां रचयिता श्रीरामचन्द्रसूरिरभूत् ।

१३१ श्रीरत्नप्रभसूरिनिबन्धः—

श्रीकेशीस्वामिनः पट्टालङ्करिष्णुः स्वयम्प्रभाचार्यः पञ्चशतमुनिमण्डल्या संजुष्यमाणः श्रीमालनगरे बहिरुद्याने स्थित आसीत् । तदवसरे वैताढ्यगिरिस्वामी मणिरत्नापरनामरत्नचूडविद्याधरो लक्षविमानैर्नन्दीश्वरद्वीपयात्रां विधाय सिद्धाचलतीर्थयात्राचिकीर्षुस्तेन पथा गच्छंस्तत्रोद्याने स्वयम्प्रभाचार्यमालोक्य सपरिवारो नीचैरवतीर्य तं यथावदवन्दत । तदा सोऽपि तस्मै हृदयग्राह्यां धर्मदेशनामदात् । तया प्रतिबुद्धो मणिरत्नः स्वपुत्राय राज्यासनं प्रदाय पञ्चशतविद्याधरैः सार्धं तत्पार्श्वे दीक्षां ललौ, स्थित्वा च गुरुसन्निधावचिरादेवाऽनवरताऽभ्यासेन चतुर्दशपूर्वधारी जज्ञे । ततो योग्यं तमवगत्य वीरनिर्वाणतो द्विपञ्चाशत्तमे वर्षे गुरुस्तस्मा आचार्यपदं प्रदाय 'श्रीरत्नप्रभसूरिः' इत्याख्यां दध्रे । ततोऽसौ निजोपदेशेन चमत्कारिप्रभावदर्शनेन च राजोपलदेवादिसपादलक्षक्षत्रियांस्तन्मन्त्रिण ऊहड–ऊधराद्यष्टादशसहस्रमहाजनकुटुम्बांश्च प्रतिबोध्य महाजनसङ्घमोशवंशञ्च स्थापयाञ्चक्रे । एवमेषां क्षत्रियाणां कुलदेवीं चण्डिकामपि दयाधर्मरसिकां कृत्वा 'सत्यकामाता' इत्याख्यां स्थिरयामास । श्रीवीरनिर्वाणतः सप्ततितमेऽब्दे ओशियानगरे ऊहड-

मन्त्रिकारिते कोरण्टनगरे च श्रीसङ्घकारिते मन्दिरे माघशुक्लपञ्चमीगुरु-घस्रे धनुर्लग्ने ब्राह्मे मुहूर्त्ते रत्नप्रभसूरी रूपद्वयं कृत्वा ओशियायां मूलरूपेण, वैक्रियरूपेण कोरण्टके च प्रातिष्ठिपत् ।

कतिपयपट्टावलीषु लिखन्त्येवम्—'असौ सहस्रशो जिनप्रतिमाः प्रत्य-ष्ठापयत्, प्रायो दशलक्षजैनेतरान् प्रतिबोध्याऽऽर्हतधर्मानुरागिणश्चाक्रि-वान्, कृतवांश्च महासङ्घेन सहैकविंशतिवारान् सिद्धाचलीयां यात्राम् ।' एवमसौ जैनशासनमहोन्नतिं विधाय, कृत्वा च मासिकीं संलेखनां सिद्धाचलोपरि स्वर्लोकमगात् । ' उएस ' इत्यस्य ओशवंशस्य च निदा-नमेष एवास्ति । वीरनिर्वाणतः ' वीए बावीसे ' ओशवंशस्थापनां जल्पन्ति कियन्तः कुलगुरवः, परमेतन्निर्मूलमेव । उपकेशगच्छचरित्र—नाभिनन्दनोद्धारप्रबन्ध—उपकेशगच्छपट्टावलीप्रमुखा ग्रन्था वीरनिर्वाणा-त्सप्ततितमवर्षमेव निगदन्ति । आसीच्चैष विद्याधरकुलोत्पन्नः पार्श्वनाथ सन्तानीयकेशिगणधरप्राशिष्यश्चतुर्दशपूर्वधर्त्ता श्रुतकेवली ।

१३२ वृद्धवादि—सिद्धसेनदिवाकरयोर्निबन्धः—

श्रीसुहस्तिसूरिशिष्याणामेको वृद्धसाधुरत्युच्चैरकाले पठन् राज्ञा दृष्ट्वाऽभाणि—भोः ! किमेवं मुसलमपि पुष्पयिष्यसि ? । नृपाऽवज्ञामसह-मानः स वाग्देवीमाराध्य तत्प्रसादेन सर्वविद्यासु पटीयान् भूत्वा शृङ्गा-टके मुसलमारोप्य फुल्लयामास, तेन च सर्वे नृपादयश्चमत्कृता जाताः । ततोऽसौ वृद्धवादिसूरिः प्राच्यलाटदेशमण्डनभृगुकच्छपुराऽलङ्कारिशकु-निकाविहारे समायातः । तत्र च ' यो मां जयेत्तस्याऽहं भविष्यामि शिष्यः ' इति कृतप्रतिज्ञं विद्याऽखर्वगर्वधरं दाक्षिणपथाऽऽयातं कर्णाट-भट्टं दिवाकराभिधानं शास्त्रचर्चायां विजित्य शिष्यमकरोत् ।

अयमेकदा गुरुमप्राक्षीत्—भगवन् ! सकलमपि जैनाऽऽगमं संस्कृ-तनयं चिकीर्षामि । गुरुराख्यत्—त्वयाऽमुना तीर्थकृद्वचसामाशातनाऽ-

कारि, अतस्तदुद्भूतप्रभूतपापाऽपनोदनार्थं द्वादशवर्षाणि यात्रां कृत्वा प्रान्ते कश्चिदेको महाराजो बोधितव्यः । इति गौरवीं गिरमुरीकृत्य तथाविधानान्ते विक्रमाऽऽख्यराजेन्द्रं प्रतिबोधयितुमुज्जयिन्यां कालाग्निरुद्रकुडगेश्वर ( महाकाल ) देवालये समेत्य शिवाऽभिमुखचरणः सुष्वाप । सेवकैस्ताडितेऽमुष्मिन्नन्तःपुरे राज्ञ्यस्ताडिता जाताः । तत्रैवं महाकोलाहले सञ्जाते तदाकर्ण्य चमत्कृतो राजा विक्रमो महता विनयेन तमप्राक्षीत् । सोऽब्रवीत्–राजन् ! शिवलिङ्गमेनं जर्ह्यैव नंस्यामि तर्ह्येव स्फुटिष्यति । ततो नरपतिप्रार्थनया सूरिणा नमस्कारस्तुतिं कुर्वता द्वात्रिंशद्–द्वात्रिंशिकाऽऽख्यकाव्यमपाठि, तेन च तल्लिङ्गं द्विधा जातम् । तस्माच्च सधूमे तेजसि निर्गते नाभेयमूर्त्तिर्निरगात् । तदाश्चर्यमुदीक्ष्य विक्रमार्कस्तच्छिष्यतां ( श्रद्धालुतां ) सपरिवारः समीयिवान् । एतदुपदेशादसौ राजा शत्रुञ्जयादियात्रां सङ्घेन सह कृतवान्, उद्धृतवांश्च, चालितवांश्च निजनाम्ना सम्वत्सरम् । विक्रमक्षितिपतिदत्तसम्मानप्रसङ्गेन सिद्धसेनो याप्ययाने समासितुं लग्नः, परन्तु गुरुवृद्धवादिसूरिणा वारितः पुनः संयमभावे तस्थौ । ततो गुरुरस्मा आचार्यपदं दत्त्वा गच्छीयभारमार्पयत् । प्राच्यपट्टावल्य एतत्सत्तां विक्रमीय प्रथमशताब्द्याम्, आधुनिकाः संशोधकास्तु पञ्चम्यां शताब्द्यां निगदन्ति । सम्प्रति तद्रचिता द्वात्रिंशिका, न्यायावतारः, सन्मतितर्क इत्यादयो ग्रन्था उपलभ्यन्ते । इत्थमयमपि जैनशासने महावादी, महातार्किको महानैयायिकश्च समभूत् ।

१३३ षंडेरकगच्छीययशोभद्रसूरिनिबन्धः—

अर्बुदाचलोपकण्ठं पलासीपुर्यां पुण्यसारश्रेष्ठिनः पत्नी गुणसुन्दरी सुधर्मानामानं पुत्रं प्रासोष्ट । असौ पञ्चमेऽब्दे लेखनशालायामुपावेशितः

१ कल्याणमन्दिरस्तवेन स्तवनाच्छिवलिङ्गे स्फुटिते श्रीपार्श्वनाथीयप्रतिमा प्राकट्यं निन्ये । अयमपि लेखः कियत्सु ग्रन्थेषु दृश्यते ।

तत्र चानेकाद्विजातयैर्वणिग्जातयैश्च शिशुभिः सहाऽसावभ्यसितुमलगत्। अथैकदा कोसियाऽऽख्य–द्विजतनुजस्य मसिपात्रमेष जग्राह, तच्चाऽऽदीयमानमेव पाणेः पतित्वाऽस्फुटत् । तदनु तेन शिशुना याचिते मसिपात्रे तद्विशिष्टं तत्तुल्यमन्यद्दातुमलगदसौ । तदोवाच सः–अहं तदेव लास्यामि, तदलाभे तव शिरःकपालमेव, तर्ह्येव मां ब्रह्मप्रभवमवगच्छेः । तदुत्तरमदात्सुधर्मा–चेदहं मृत्वापि त्वां न हन्यां तर्हि वणिक्पुत्रो न स्यामिति तथ्यं विदाङ्कुरु । ततो नवाऽब्दिकः सुधर्मा पित्रोरादेशमादाय श्रीईश्वरसूरिपार्श्वे दीक्षामाददिवान्। अधीतवांश्चाऽचिरादेव श्रुताध्ययनीयानि । ततोऽसौ मुडाराग्रामे बदरीदेवीमाराध्य वादिविजयित्वमध्यगच्छत् । तदनु गुरुरस्मा आचार्यपदं दत्त्वा यशोभद्रसूरिरित्याख्यां कृतवान् । यावज्जीवमेष विकृतिषट्कत्यागेन कवलाऽष्टकमेव भोक्तुमभिजग्राह । एतदतिदुष्करतपोमहिम्नाऽनेकाऽतिशयांश्चाऽसौ लब्धवान् । अन्यदा गुरुणादिष्टोऽसौ पालीनगरमागात् । तत्र यस्यां दिश्यसौ स्थण्डिलार्थं याति स्म, तन्मार्गे सूर्यमन्दिर आसीत् । स चैतत्साधव्यकर्मणा प्रसद्य तस्मा एकामञ्जनकुप्पिकां सिद्धविद्यावल्याः स्वर्णाक्षरीयमेकं पुस्तकञ्च समर्पयाञ्चक्रे । तदञ्जनाऽभ्यक्तलोचनः स त्रिलोकीस्थं सकलं वस्तु करामलकमिव द्रष्टुं लग्नः । स्वर्णाक्षर पुस्तकेन च गगनगामिनी–रूपपरावर्त्तिनीप्रमुखाः सिद्धविद्याः शिक्षित्वाऽग्रेतनाशिष्यादिष्वेतदर्हतामपश्यंस्तत्पुस्तकं पुनस्तत्रैव सूर्यमंदिरे बलभद्रमुनिना न्यासितवान्। स तु तत्पुस्तकात्पत्रत्रयं रक्षित्वा पुस्तकं तत्राऽतिष्ठिपत् । परन्तु सूर्यदेवेनाऽपहृतेषु तेषु बलभद्रो रोरुदीति स्म, ततो गुरोर्वचसा दिनमणिस्तस्मै तानि पत्राणि पुनर्ददौ । घोरतरदुष्करतपोविधानमाहात्म्येनाऽमुष्याऽष्टापि महासिद्धयः समुत्पेदिरे। यद्बलेनैष प्रत्यहं चम्पा–ऽष्टापद–सम्मेतशिखर–शत्रुञ्जय–रैवताचलानामेषां पञ्चानामपि तीर्थानां यात्रां कृत्वैवाऽभ्यवहरति स्म । सच्चातिशयाऽभ्यर्थनादयं

घण्डेरकग्रामे महामहेन प्रतिष्ठाकार्याणि प्रावर्त्तयत, परन्तु समागत-जनताया बाहुल्येन जेमनवारे घृतानि रिक्ततामापेदिरे, अतः सङ्घस्य महती चिन्ता समुत्पेदे । एतां वार्त्तामाकर्ण्य तदैवाऽयं विद्याबलेन पालीपुरीयधनराजशाहगृहाद् घृतमानाय्य तत्र जेमनशालायां घृतपात्र-मपिपः । एवं सङ्घचिन्तां निरस्य जरीहृष्यताऽमुना प्रतिष्ठामपारयत् । तदनु मेदपाटदेशे चाऽऽघाटनगर्यामल्लटराजमन्त्रिकारिते चैत्ये पार्श्व-नाथबिम्बं प्रातिष्ठिपत् । तत आहड–करहेट–कविलाण–शाकम्भरी–भेस-रेति पञ्चस्वपि ग्रामेषु सङ्घात्याग्रहेण पञ्चधा भूत्वा युगपदेकस्मिन्नेव लग्ने सर्वत्र प्रतिष्ठामकरोत् । तत्र कविलाणग्रामे प्रतिष्ठोत्सवे दर्शकानां संख्याऽऽधिक्ये समुपस्थिते कूपादिजलाशयेषु शुष्कतामुपनीतेषु जलाऽ-भावेन सर्वेषु जनेषु त्रायस्व त्रायस्वेति कुर्वत्सु निजनखैश्चन्दनं क्षिप्त्वा पञ्चनवतिं कूपानसौ तत्कालमेव सुपेयजलपूर्णानकार्षीत् । पप्रथे च तेष्वेको मुख्यः कूपो ' नखसूत ' नाम्ना ।

अथैकदा आहडनगरनिवासी भद्रव्यवहारी शत्रुञ्जयरैवतयोर्या-त्रार्थं महान्तं सङ्घं निर्गमयाम्बभूव । तत्र सङ्घपतेरत्याग्रहेण सपरिवारो यशोभद्रसूरिरपि यात्रायै चचाल । क्रमशः पत्तनपुराऽऽसन्नमागते तत्सङ्घे तत्रत्यो राजा मूलदेवः सङ्घेन सहैनमाचार्यमत्यर्थं सच्चक्रे । ततोऽ-ग्रे चलितोऽधिमार्गं जलमलभमानाः सर्वे व्याकुलतां निन्यिरे । तदा सङ्घपतिभद्रप्रार्थितोऽसकौ शुष्कमेकं सरो विद्यायोगेन सुमिष्टवारिपूर्ण-मकृत । तदालोकमानः सकलः सङ्घोऽजहृषीत् । अमुनैव हेतुना ततः प्रभृति तत्सरः ' साधुसरोवरं ' इति नाम्ना प्रासिध्यत्तमाम् । इत्थमा-चार्येण स्त्रावितः सङ्घः सिद्धाचलयात्रां विधाय रैवतगिरिमायात् । तत्र सङ्घपतिरष्टादिवसान् स्थित्वाऽऽष्टाहिकमहोत्सवं वितन्वानो मणिरत्नज-टितमहार्हविभूषणं श्रीनेमिनाथविभोः प्रतिमोपरि निधाय समानर्चे । परन्तु कश्चिच्चौरः कस्यापि भेदेन तदाभूषणमपाहार्षीत् । तदवेदयदा-

चार्यं सर्वं सङ्घः । सूरिरब्रवीत्—भद्र ! चिन्तां त्यज, एतदपहारिणमद्य-दिनाद्विंशतितमे दिवसे दीव्यन्तमाघाटपुरस्थं भवद्भटो नूनं ग्रहीष्यति । समस्तमाभूषणमेकस्यां वाप्यां शिलातलेऽमुना गोपितं वरीवृत्यते । सर्वं श्रद्दधानः संघाधिपतिस्तदैव स्वभटं तत्र प्रेष्य तथावस्थं चौरं गृहीत्वा लात्वा च सर्वमाभूषणं निबध्य च गाढं स्वान्तिकमानीनयत् । ततो भगवतः सकलाऽऽभरणं परिधाप्य गुरोराज्ञया तं स्तेनममुञ्चत । तदनन्तरमाचार्यं पुरस्कृत्याऽऽघाटनगरमुपगतवान् सङ्घः ।

अथाऽसौ तन्नगराद्विहृत्य नाडलाईग्राममागत्य चतुर्मासीं तत्रैव तस्थिवान् । अत्र स एव विप्रबालः केसियानामा नूनं त्वच्छिरः कपालमादास्यामि, इति पुरा कृतप्रतिज्ञोऽधिगताऽनेकसिद्धविद्यो योगिवेषं कृत्वा व्याख्यानवेलायां सदसि समायातः । स च निजजटाजूटतः फणिद्वयं महाभीषणं निर्गमयाञ्चकार, तेन सर्वे सभ्याः क्षोभमापन्ना भृशमाचुक्रुशुः । तत आचार्यस्तत्कालमेव मुखवस्त्रिकां द्विधाकृत्य नकुलद्वयीमजीजनत्, तौ च परिसरन्तौ भोगिनौ पश्यत्सु सर्वेषु गृहीत्वा निरगच्छतां बहिः । ततः सर्वे शान्तिमापुः । अयमेव योगी पुनरेकदा श्रमणीमेकां प्रमत्तामर्हत्प्रतिमाञ्च विमुखां कृत्वाऽऽचार्यसमीपमागात् । समायातमेनं सम्मान्याऽऽसन्नाऽभिमन्त्रितपट्टान्तरे समुपावेश्य घटीद्वयमाललाप सः । गोचरीवेलायामाचार्ये उत्तिष्ठति सति योग्यपि समुत्थितुमलगत्, परन्तु पट्टस्य संसक्तत्वेन समुत्थितुमक्षमो भृशं खिद्यमानः, किङ्कर्त्तव्यतामूढः, स योगी मनसि विवेद—साध्व्याः प्रतिमायाश्च वैरूप्यकरणस्य फलं मयका सम्प्रत्येषोऽनुभावयते । ततोऽष्टोत्तरशतकूपोदकमानाय्य मन्त्रितेन तेनोदकेन तयोः सज्जीकरणानन्तरमाचार्यो योगिनं तत्पीडातोऽमोचयत् । अथैकदा योगी राजानं विज्ञप्य यशोभद्रसूरिं चर्चार्थमाकारयाञ्चक्रे । ततः सूरी राजसदसि समागत्य पश्यत्स्वेव नृपादिवर्गेषु मान्त्रिकं शास्त्रीयञ्च वादं विधाय,

चतुरशीतिवारान् विक्रमीय १०१० वर्षे व्यजेष्ट । प्रान्ते राजसभायामेव-मुवाच योगी—राजन्! आवयोर्मध्ये योहि वल्लभीपुरान्निजनिजाऽभीष्ट-मन्दिरमुड्डाय्याऽत्राऽऽनयेत, प्रत्यूषे च तृतीयवारं कौक्कुटं रवं श्रुत्वा यथास्थानमेव तिष्ठेत् स विजयी, यो हि नियममममुमतिक्रामेत्स हारितः। आचार्योऽप्येनमन्वमन्यत । ततो द्वावपि स्वस्वाभीष्टमन्दिरमुड्डाय्य व्योम-पथेन नारदपुरीपरिसरमानिन्याते । तदा मत्तः प्रागयं मा यातु पुरी-मिति धिया योगी कुक्कुटीभूय ग्रामे जल्पितुं लग्नः । तदारवं शृण्वताऽऽ-चार्येण तत्रैव तस्थे, अस्थापि च ग्रामाद्बहिरेव तन्मन्दिरम् । योगी च प्रतिज्ञां भङ्क्त्वा निजाऽऽनीतशिवालयं नगरान्तरानयत । प्रभाते च नृपादयः सर्वे सभ्यास्तत्कपटं विदित्वा सूरेर्जयं योगिनः पराजयं च बभाषिरे ।

अथाऽऽचार्य एकदा सङ्घमब्रवीत्—आयुर्मे स्वल्पमेवाऽस्त्यतः परम्। विपन्ने च मयि मन्मौलिरत्नमादातुं योगी यथाशक्ति प्रयतिष्यते, करिष्यते चाऽग्निसंस्कारसमये महावृष्टिवाताभ्यामुपसर्गम् । अतः प्रागेव मन्मस्तकमणिं स्फोटयित्वाऽग्निना संस्कर्त्तव्यः शवः । क्वचिच्चै-वम्- यर्हि योगी शूकररूपेण मे मस्तकमणिमादित्सुरागच्छेत्तर्हि मयका तत्रैव सोऽपि दाह्य एव यतस्तस्यापि मृत्युरेवंभूत एव विहितः, विद्यते लेखः इत्थं सर्वं सूचयित्वा यशोभद्रसूरिः समाधिना विक्रम सं० १०२९ संस्कृतचरित्रलेखानुसृत्या १०३९ तमे वर्षे द्यावि न्यवात्सीत्। ततो महो त्सवं वितन्वानः सङ्घस्तच्छवं देवविमानोपमायां वैकुण्ठ्यां निधाय श्मशानभूमौ समानीय चन्दनेन्धनरचितायां चितायां स्थापयाञ्चक्रे । सोऽपि योगी चितोपरिच्छत्रं तदुपरि क्षरत्क्षीरपात्रं संस्थाप्य व्योम्न्यति-ष्ठत् । तदवसरे श्रावका गुरुदत्ताऽऽदेशानुसारेण गुरोः शिरोमणिं स्फोट-यित्वा वह्निं संयोजयामासुः । तदा शिरोमणेर्ब्रह्माण्डस्फोटिनि शब्दे जाते स्फुटितहृदयो योगी स्वत एव गगनात्तस्यामेव ज्वलन्त्यां

चितायां निपत्य भस्मसाद्बभूव । अमुना च ‘ मृतोऽपि त्वां न हन्यां तर्हि वणिक्पुत्रो न स्याम् ’ इति पुरातनी शैशवी प्रतिज्ञा तस्याऽक्षरशः सत्या जाता । आसीच्चैष षण्डेरकगच्छीयः, बभूवांश्च जैनशासनमहाप्रभावकः । एतस्य विक्रमसं० ९५७ वर्षे जनिः, सं० ९६६ वर्षे दीक्षा, सं० ९६८ वर्षे चाऽऽचार्यता जाता । प्रान्ते बलभद्रमुनेर्गच्छभारं दत्त्वा वसुदेवसूरिरित्याख्याञ्च कृत्वा नारदपूर्यामेव स्वरगात् ।

१३४ जगद्गुरुश्रीहीरविजयसूरिनिबंधः—

प्रह्लादनपुरनगरे उपकेशवंशजस्य कुँराशाहश्रेष्ठिनः पत्नी नाथीनाम्नी तेजिष्ठं पुत्रं विक्रमीये १५८३ वर्षे सहसि शुक्लपक्षे नवम्यां तिथ्यां चन्द्रवासरे सन्मुहूर्त्ते सुषुवे । ‘ हीरा ’ इत्यभिधानेन स पप्रथे च । अयमल्पेनैव कालेन व्यावहारिकमशेषमभ्यस्य पित्रोरनुमत्या पाटणपुरे विक्रम १५९६ वत्सरे कार्त्तिककृष्णद्वितीयायां तपोगच्छीयविजयदानसूरिपार्श्वे दीक्षितो बभूव, गुरुणा तदभिधानं ‘ हीरहर्ष ’ इत्यधारि । असौ गुरोरेवाऽनवरतमधीयानः शब्दशास्त्रे पटीयान् भूत्वा, दक्षिणे देवगिरिपुरे गत्वा विद्वत्तमेभ्यस्तर्कालङ्कार—साहित्य—सामुद्रिक—ज्योतिष—प्रमाणशास्त्राणि सम्यगधीत्य निरुपमं पाण्डित्यमाससाद । ततः शास्त्रनिष्णातममुं योग्यतममवगत्य गुरुरेतस्मै नारदपुरे पंन्यासपदम्, वरकाणातीर्थे चोपाध्यायपदं प्रदाय, सिरोहीनगरे चांगामन्त्रिविहितमहामहेनाऽऽचार्यपदं वि० १६१० वर्षे पौषशुक्लपञ्चम्यां दत्त्वा श्रीहीरविजयसूरिरित्यभिधानमकृत । गच्छाधिपतिरेष हीरविजयसूरिर्मरु—मालव—मेदपाद—गुर्जर—पञ्चालप्रमुखदेशेऽप्रतिबद्धविहारेण निजोपदेशतः सहस्रशो जनाञ्जैनरसिकानकरोत् । सिरोही—स्तम्भतीर्थ—सौरीपुर—फतेपुराऽऽगरा—विराटनगर—वटपल्लीत्यादिपुरेषु महतामहेन सङ्घसम्मेलनपुरस्सराऽनेकाऽऽर्हतप्रतिमानां प्रतिष्ठाञ्जनशलाका अमुना-

ऽकारिषत । एतस्य विहारे प्रतिस्थानं विदुषामादरो याचकानां दानसम्माने, पदे पदे मौक्तिकैः स्वस्तिकरचनाः, स्वर्णकुसुमैर्वर्धापनानि च भवन्ति स्म । वैक्रमीय १६२८ वत्सरे फाल्गुनशुक्लसप्तम्यामहमदाबादस्थाऽकमीपुरप्रतोल्यां निजगुरुभ्रात्रे जयविमलाभिधानाय मूलाश्रेष्ठिविहितमहोत्सवेनाऽऽचार्यपदं दत्त्वा विजयसेनसूरिरिति कृतवान्नाम । कृतवांश्च स्वकीयपट्टाधिकारिणम् । तस्मिन्नेवाऽवसरे लौंकागच्छीयपूज्यमेघर्षिः पञ्चविंशतिशिष्यैः सह तपोगच्छीयदीक्षां दत्त्वा विधाय च स्वशिष्यमुद्योतविजयेति नाम धृतवान् । शिष्या द्विसहस्रं श्रमण्यश्च चतुःशतमभूवन् । तेषु पंन्यासाः १५१, जैनविद्वत्तमा उपाध्यायाश्च सप्ताऽऽसन् । तच्छिष्येषु विमल–विजय–सागर–सुन्दरप्रमुखा अनेकाः शाखाः, आनन्द–हर्ष–सौभाग्य–विशाल–कुशलाऽऽदयः प्रशाखाश्चानेका बभूवुः । यदेतत्प्रशिष्याणां समुदायोऽपि भूयानासीत् । नानामुनिपरिवारमण्डितैतद्विहारे युगप्रधानसमानमेवातिशयत्वमदृश्यत ।

वैक्रम १६३९ वत्सरीयचतुर्मासानन्तरं गन्धारबन्दरतो विहृत्य सौराष्ट्र–गुर्जर–मेदपाट–मालवेषु प्राचीनजैनतीर्थयात्राचिकीः पथक्रमाऽऽगतग्रामेषु निजदेशनाऽमृतं वर्षं वर्षं भव्याञ्जनांस्तपर्यन्नकब्बरपातिसाहस्याऽऽमन्त्रणेनाऽसौ विजयहीरसूरिर्ज्येष्ठकृष्णत्रयोदश्यां फतेपुरसीकरीमागत्य, साहीमहोत्सवेन नानद्यमानेषु नानाविधवादित्रेषु महताऽऽडम्बरेण पुरम्प्रविश्य, जगमल्लकच्छवाहमहेभ्यसद्मनि तस्थिवान् । तत्रैनं सर्वसम्मानविधानपुरस्सरं बादशाहः स्वसभायामाकारयत् । असौ च भूयो भूयः कृतशास्त्रगोष्ठ्या बादशाहमकरोज्जीवदयानुपालिनम् । तदुपदेशेन प्रतिबुद्धो राजाऽकब्बरो गुर्जर–सौराष्ट्रदेशीय १ मेवात–मण्डलीय २ मरुधरदेशीय ३ मालवदेशीय ४ पञ्चालदेशीय ५ सार्थे रक्षितुं

१ देवविमलरचित–हीरसौभाग्यकाव्ये त्रिंशद्भिर्वीरविद्याधरकृत–हीरविजयसलोकाऽऽख्यभाषाकाव्ये च सप्तविंशतिभिः शिष्यैः सहैतद्दीक्षामुवाच ।

सूरये साधारणं च स्वीयमुद्राङ्कितमाज्ञा ( फुरमान ) पत्रषट्कं वितीर्य पर्युषणादिद्वादशदिवसेषु, प्रतिरविवारे, संक्रान्त्यां सर्वस्याम्, नवरोजीयमासे, सर्वस्मिन्नीदीवासरेषु, सर्वमिहिरवासरेषु, सोफीयानवासरेषु च सर्वत्र हिंसनं न्यषेधीत्, तत्याज च जीजीयाऽऽख्यं करम् । इत्थं सूरेरुपदेशतो डामर—जयनलङ्काभिधानमहातटाकयोर्मीनमारणं तत्सीम्नि मृगयाकरणञ्च वारयितुं सर्वत्र मुद्राङ्कितं फुरमानपत्रं प्रेषयाश्चक्रे । ततोऽदाच्चास्मै स्वसंगृहीतं हस्तलिखितदर्शनासिद्धान्तपुस्तकैर्भृतं सकलमेव ज्ञानभाण्डागारं सः । सूरिस्तत्सर्वमानीयाऽऽगरानगरीयज्ञानकोशेऽतिष्ठिपत् । ततो लक्षव्ययाऽऽरब्धमहामहं वितन्वानोऽकब्बरसम्राट् समस्तविद्वद्मीरोमरावगणमण्डितसभायामेतस्मै हीरविजयसूरये ' जगद्गुरु ' इत्युपाधिं विततार । तेनैतस्मिन्ननेके यवनभूभुजो नितरामन्वरज्यन्, प्रतिपक्षिणोऽपि भूयांसो यावज्जीवं भक्तीभूयाऽसेवन्त ।

अकारि चामुनाऽन्तिमश्चातुर्मास उन्नतपुरे ( ऊनानगरे ), तत्र मासिकीं संलेखनामाराधनां च विधाय सं० १६५२ तमे वर्षे भाद्रपदसितैकादश्या रात्रौ स्वर्गवासं व्यदधात् । तत्रत्यसङ्घो बादशाहीयमहोत्सवं वितन्वन्नग्निसंस्कारमकरोत् । तत्र च द्वीपबन्दरवासी पारखगोत्रीयमेघाऽऽख्यः श्रेष्ठी स्तूपेन सह चरणेऽतिष्ठिपत् । तत्प्रतिष्ठा च श्रीविजयदेवसूरिपाणिसरोजेन जज्ञे । तदर्चार्थमकब्बरो द्वाविंशतिकुडवमिता भूमीः प्रददे । एवमेष विजयहीरसूरिरपि जैनशासने महाप्राभाविको बभूव ।

१३५ श्रीविजयदेवसूरिनिबंधः—

श्रीराजदेशमण्डन ईडरगढनगरे वैक्रमे १६३४ वर्षे जनिमीयिवानसौ । सं० १६४३ तमे वत्सरे मात्रा सत्रा दीक्षां जग्राह । सं० १६५५ तमे हायने पण्डितपदभागजायत । सं० १६५६ तमेऽब्दे च स्तम्भतीर्थे

आचार्यपदेन शुशुभे । अत्रोत्सवे सर्वव्यवहारिश्रेणिशिरोमणिः श्रीमल्लश्रेष्ठी निजभ्रातृजेन सोमाऽऽख्यश्रेष्ठिना सह न्यायार्जितं निजरायं व्येतुमना धन्व–मेदपाट–लाट–सौराष्ट्र–कच्छ–कुङ्कण–गुर्जरादिदेशीयनगरेषु सर्वेषु कुंकमपत्रिकाः सम्प्रेष्य समस्तसङ्घमामन्त्रयामास । अगण्याः श्रावकाः श्राविकाश्च तत्रोपतस्थिरे । श्रीमल्लश्रेष्ठी स्वर्गस्पर्द्धिनं दिव्यतमं मण्डपं निर्माप्य गच्छाधिपतिं विजयसेनसूरिं च सूरिपदप्रदित्सया सादरमानाय्य, महता महोत्सवेन वैशाखशुक्लचतुर्थीदिने शुभे च लग्ने तस्मा आचार्यपदं प्रादापयत्, निरचिनोच्च ' विजयदेवसूरिः ' इत्याख्यानम् । मल्लश्रेष्ठिना सुसेवितः समस्तसङ्घ एनं भृशं प्रशशंस । अस्मिंश्च महामहे श्रीमल्लश्रेष्ठी १०,००० ठक्कुर–कीकाभिधः श्रावकश्च ८००० रूप्यकाणि व्यैत् । ततो सं० १६५८ वर्षे पत्तननगरनिवासी परीक्षक–सहस्रवीराऽऽख्यः पञ्चसहस्रं दीनारान् वीत्य गच्छानुज्ञानन्दिमहोत्सवं वितेने । एतर्ह्येव हायने विजयदेवसूरिरहमदाबादे द्वे, पत्तने चतस्रः, स्तम्भतीर्थे तिस्रः प्रतिष्ठाः कृत्वा, इलादुर्गे चतुर्मासीमकृत । तत्रत्यः सङ्घस्तदुपदेशेन जैनदर्शनमाहिमाऽऽदर्शभूताऽनेकमहोत्सवानकार्षीत् । यानुदीक्ष्येलादुर्गपती राजा कल्याणमल्लो नितरां प्रसद्यैकदा स्वभट्टैः सहाऽऽचार्येण तर्कवादं कारितवान् । आचार्यादिष्टः पं० पद्मसागरस्तस्यां सभायां जायमाने च तर्कवादे लीलयैव प्रकाण्डतर्कशक्त्या भट्टांस्तानजेजयीति स्म । तदा भट्टैः सार्धं नरनाथ आचार्यचरणसरोजौ सादरं ववन्दे ।

चतुर्मासानन्तरमसौ बृहन्नगर ( वडनगर )मागत्याऽऽष्टाहिकमहोत्सवेन श्रीवीरप्रतिमां प्रतिष्ठाप्य समागत्य चाहमदावादनगरं चतुरो मासांस्तस्थिवान् सङ्घातिशयप्रार्थनया । बभूव चैतदुपदेशेन तत्राऽनेकधर्मकार्यम् । तदवसाने नटीपद ( नडियाद )नगरमागत्य महामहेन प्रतिष्ठां कृतवानयमाचार्यः । इलादुर्गनगरीय–दुर्गस्थचैत्य–श्रीआदिनाथ-

प्रतिमा यवनैः खण्डिताऽऽसीत्, अत एव तत्रत्यसङ्घस्तत्प्रतिमां नवां कारयित्वा नाडियादे प्रैषीत् तस्या अप्यञ्जनशलाकाऽस्यामेव प्रतिष्ठायाममुना विजयदेवसूरिणाऽकारि। अस्थापि च निजकरकमलाभ्यामिलादुर्गस्थितसमुद्धारितं सुचैत्ये। अथैकदा स्तम्भतीर्थस्थितमेनमाचार्यं मण्डपाचलादकब्बरबादशाहसूनुर्जहांगीरशाह आमन्त्रणपत्रं प्रदाय समाह्वयत। तत्र गमनेनाऽनेकविधलाभपर्यालोचनया सोऽपि ततो विहृत्य क्रमशस्तत्राऽऽगात्। तदा जहांगीरशाहस्तेजोमयीं तन्मूर्तिमालोक्य संश्रुत्य च पीयूषस्यन्दिनीं विद्वत्ताऽऽढ्यां तद्देशनां नितरां प्रससाद। ततो निजकृताऽद्भुताऽद्भुतप्रश्नोत्तरश्रुत्या च वैपक्षिकजनजानितो विभ्रमस्तन्मनसस्तदैव निरगच्छत्। अब्रवीच्चैवम्—श्रीहीरविजयसूरेः पट्टाधिरोही सर्वाधिपतिश्च भवितुमर्हत्ययमेव विजयदेवसूरिः। ततो महामहं वितत्य 'जहांगिरीमहातपाः' इति विरुदं विजयदेवसूरये ददिवान्।

आचार्यस्ततो विहृत्य गुर्जरं गत्वा सौराष्ट्रदेशीयद्वीपबन्दरमागत्य फिरङ्गीबादशाहस्याऽत्याग्रहेण चतुर्मासद्वयीं तस्थिवान्। ततो विहृत्य हालारप्रान्तीयनवानगरमागत्य भव्याञ्जनान् प्रतिबोध्य, सिद्धाचलतीर्थयात्राञ्च कृत्वा स्तम्भतीर्थे चतुर्मासीं यावदतिष्ठदसकौ। तदनु ततो विहृत्य सांभलीनगरमगात्। तत्राऽयं मासत्रयीं तीव्रक्रियानुष्ठानं विदधत्सूरिमन्त्रमजापीत्, अकार्षीच्च सङ्घाऽऽग्रहेण चातुर्मास्यं तत्रैव। तदनन्तरं महता महेन द्वे प्रतिष्ठे विधिवद्विधाय तस्माद्विहृत्य समागतवानीडरदुर्गम्। अत्रापि तिस्रः प्रतिष्ठाः कृत्वा सह सङ्घेनाऽऽरासणतीर्थयात्रामकृत। ततः पोसीनानगरमागत्य पञ्चजीर्णचैत्यानि समुद्धार्य प्रतिष्ठापयाम्बभूव, तस्मिन्नेवाऽवसरे आरासणतीर्थहेतवेऽपि मूलनायकबिम्बाञ्जनशलाकाञ्चक्रे। ततः कतिपयग्रामेषु जनान् धर्ममुपादिशन्नेष राज्ञः कल्याणमल्लस्याऽत्याग्रहादिलादुर्गमाजगाम। अत्र सुश्रावक—सहजूमहेभ्यप्रारब्धमहामहेन सं० १६८१ वर्षे वैशाखशुक्लषष्ठ्यां विजयसिंह-

स्याऽऽचार्यपदं ददिवानसौ । एतत्सदुपदेशात् कल्याणमल्लो राजा 'रणमल्लचोकी' नामनि गिरौ भव्यमेकं सुमन्दिरमचीकरत् ।

चातुर्मासाऽनन्तरमनेकमुनिभिः संघैश्च समुदितैः परिवृतोऽयमर्बुदाचलतीर्थयात्रां कृत्वा सिरोहीनगरमीयिवानाचार्यवर्यः । संघाऽत्यनुनयेन चतुर्मासीमपि तत्राऽकरोत् । चातुर्मासे चाऽनेकपुरनगरेभ्यो बहुसंख्यान्वितः सङ्घसमुदाय एतस्य सूरेर्दिदृक्षया समैत्, अबोभोच्च महीयसी शासनसमुन्नतिः । अत्रान्तरे सादडीनगरे समेता लुम्पका एकीभूय जिनप्रतिमानिन्दां व्यातन्वते स्म । तदसहमानस्तत्रत्यः सङ्घस्तदैवैतदन्तिके विज्ञप्तिपत्रमप्रैषीत्—"स्वामिन् ! त्वादृशे विजयमाने प्रभाविके चाऽऽचार्ये विद्यमाने लुम्पका आर्हतीः प्रतिमा निन्दन्तो नः सर्वान् भृशं खेदयन्ति । अतस्तानाशु विजित्य सङ्घे सुखं वितनितुमिहाऽऽगम्यताम् ।" तद्वाचयित्वा स गीतार्थान् मुनिवरांस्तत्र गन्तुं समादिदेश । तेऽप्यप्रतिबद्धविहारेण सादडीमागमन्, तदागमनमाकर्ण्यैव लुम्पकास्ततः पलायन्त । मुनयोऽपि तानेवाऽनुगच्छन्त उदयपुरमागत्य महाराणाकर्णसिंहस्य सभायां चर्चां कृत्वा, ताँल्लुम्पकान् विजिग्यिरे । ततो महाराणा कर्णसिंहो भृशं प्रसद्य सर्वत्रोद्घोषयामास-'तपोगच्छः सत्यः, लुम्पको मिथ्यैवाऽस्ति ।' ततो मुनिवरा राणाप्रदत्तमुद्राङ्कितं विजयपत्रमादाय सादडीमागत्य श्रीसङ्घमदर्शयन् । तद्वाचनेन सङ्घसमुदाये महानानन्दस्तपोगच्छे महती प्रभावना च प्रससार, तदनु जोधपुराधीशगजसिंहनरेशस्य प्रधानमन्त्रिजयमल्लप्रार्थनया जालोरगढमागात्सः । तत्र च स्वर्णगिरितीर्थस्य—मन्दिरेषु प्रतिष्ठां व्यदधात् । एतदुपदेशेन सं० १६८४ वर्षे मन्त्री जयमल्लो विजयसिंहसूरेर्गच्छानुज्ञानन्दीमहोत्सवं ततान । ततः स मेडतानगरमागत्य प्रतिष्ठाश्च विधाय, विन्ध्यपुरे ( बीजोवायां ) चातुर्मासं चक्राणः, तदैव महाराणाजगत्सिंह आचार्यस्याऽपूर्वज्ञानेन रञ्जितो भूत्वा वरकाणापार्श्वनाथ-

यात्रां कुर्वतां करादानमुज्झाञ्चकार । तदन्ते सङ्घेन सार्धमसौ राणकपुरादितीर्थानां यात्रां सुखेन कृतवान् । तत्र ' झालाकल्याणजी ' मेदपाटं पवित्रयितुमाचार्यं भृशमाजग्राह । तदभ्यर्थितस्तद्दिश्येव स विजह्रे । अधिमार्गं खाणोरग्रामे द्वे, देवकुलपाटके चैकम्, नाहीग्रामे एकाम्, अबोटापुर्यामेकाम्, एवं पञ्चप्रतिष्ठां कृत्वाऽयमुदयपुरमागत्य चातुर्मासमकृत । ततो दशबादलाऽभिधाने राजहर्म्ये चतुर्मासीं चक्रिवान् । अत्र हि महाराणा जगत्सिंहस्तद्देशनाश्रवणेन पीछोलाऽऽख्याने, उदयसागराभिधाने महासरोवरे च मीनानां घातनं ग्रहणं च १, राज्याभिषेकादिवसेऽमारीपालनम् २, भाद्रपदे जीवानामहिंसनम् ३, मचिन्ददुर्गे जीर्णकुम्भलविहाराऽऽख्यचैत्योद्धरणम् ४, इतीमांश्चतुरो नियमानग्रहीत् । तद्दिवसात्कुमारपालनरनाथो हेमचन्द्राचार्यमिव महाराणा विजयदेवसूरिं सम्मानयितुमलगत् ।

अयमाचार्यो हि मालवेऽवन्तिकादौ, दक्षिणे बीजापुरवदनीपुरादौ, कच्छदेशे भुजनगरादौ, धन्वनि जाबालिपुरमेदिनीपुरादौ जीर्णोद्धारपूर्वकं शतशो जिनबिम्बानां प्रतिष्ठाञ्जनशलाका अकरोत्, अदाच्चाऽनेकश्रमणेभ्यः पंन्यासपदम्, पाठकपदमाचार्यपदञ्च । इत्थमेष यवनराजाननेकाञ्जीवहिंसां त्याजयित्वाऽऽर्हतधर्माभिमुखान् कुर्वन् विजयसिंहसूरिप्रमुखमुनिवरैः शतशः सत्रा विहरन् प्रभावकत्वपदभागजायत । अमुष्मिञ्जीवति सति कियन्त्यपि चित्राणि कार्याणि जातानि । तथाहि—सं० १६७२ तमे वर्षे विनिर्गतोपाधिमतानुयायिन्यौ खंभातनिवासिनो देवचन्द्रश्रेष्ठिनो द्वे भार्येऽवर्तेताम् । कालान्तरे च श्रेष्ठी मृत्वा देवीभूय ते स्वस्त्रियौ देवसूरेरुपासिन्यौ विधाय स्वयमष्टादशदेवैस्तद्भक्तिमकरोदित्येकमाश्चर्यम् । गोघाबन्दरे सोमाख्यश्रेष्ठिनः कुटुम्बवर्गो देवसूरेर्विमुखीबभूव, केवलमेक एव श्रेष्ठी सूरिं जुषमाण आसीत् । स च कालं कृत्वा देवत्वमधिगत्य सकलं स्वकुटुम्बमेतद्भक्तमकार्षीदिति द्वितीयम् ।

अथैकदा स सूरिरर्बुदपाचलं व्रजन्मार्गे सेहरखीग्रामवासिपरमारठक्कुरसूनुः कर्मानामा प्रेतग्रस्तो लोकान् हन्तुं परितो धावमानः कृपयाऽमुना सूरिणा शिरसि वासः क्षिप्त्वा प्रेतमुक्तश्चक्रे, इति तृतीयम् । अहमदाबादे कस्यचिन्महाजनस्य तनयो विक्षिप्तचेता आसीत् । सोऽप्यनेन शिरसि करकमलं निधाय स्वास्थ्यमनायीति तुरीयम् । एवं मेडतानगरे खीमसरागोत्रीयथानाशाहो नवमासीं क्षेत्रपालेनाऽभिभूयमान आसीत्, तस्यापि मस्तके सूरिणा वासक्षेपे कृते क्षेत्रपालः स्वमन्तुं क्षमयित्वा पलायाञ्चक्रे इति पञ्चमम् । गुर्जरमरुदेशयोरेष सूरिरनेकधा दुष्कालपीडितासु जनतासु निजवशम्वदैर्देवैः शान्तिमचीकरच्च ।

इत्थमेष आचार्यस्तपोगच्छे चरमः प्रभावको जगद्गुरोर्हीरविजयसूरेः प्रशिष्य आसीत् । असौ निजासने विजयसिंहसूरिं नियम्य विक्रमीय १६८५ तमे वर्षे स्वर्गवासं कृतवान् । इति स्थविरावल्यधिकारः ।

१३६ सदृष्टान्तसाधुसमाचारी—

( १ ) प्रावृषि गृहमेधिभिरात्मार्थमाच्छादन—विलेपनादिसकलोपचारकरणेन प्रासुकीकृते सदने आषाढपूर्णिमातः पञ्चाशत्तमे दिवसे कर्त्तव्यमेव पर्युषणम् । तच्च भाद्रशुक्लपञ्चम्यादिकार्त्तिकपूर्णिमान्तं सप्ततिदिनात्मकम् । चेत्प्रागेवैतत्कुर्वीरंस्तर्हि गृहिणस्तदर्थमप्याऽऽस्तरणविलेपनाद्यारभेरन्, कर्षकाश्च वृष्टिमवधार्य क्षेत्रं कृषेयुः, तद्दोषेण साधवोऽपि दूष्येरन्नतः प्रागेतन्नैव निश्चेतव्यमिति शाश्वती मर्यादा जागर्त्ति, इत्थमेवाऽकारि श्रीवीरविभुना । तदेव चान्वसारि गणधरप्रमुखैः शिष्योपशिष्यैरपि । परमेतदपवादतो भाद्रपदसितचतुर्थ्यामप्यनुष्ठातुं कल्प्यते, पञ्चम्याः परं तदनुष्ठानमकल्प्यमेव ' अंतरा वि य से कप्पइ ' इत्यागमप्रामाण्यात् ।

( २ ) प्रावृषि स्थितः साधुः साध्वी च परितः पञ्चक्रोशीं गमाऽऽ-

गमौ कर्त्तुमवगृह्णीयात्, अवग्रहात्परं क्षणमपि नाऽवतिष्ठेत् । एतावन्तं क्रोशं गोचर्या अपि गन्तुमर्हतीति गमाऽऽगमविषया द्वितीया ।

( ३ ) चतुर्मास्यामेकत्रस्थैः साधुभिः साध्वीभिश्चाऽन्तराले काचिद्बहुलजला तटिनी वहन्ती चेत्तामुत्तीर्य नैव गन्तव्यम् । यत्र तु कुणालानगराऽऽसन्ना विपुलतरैरावती नदीव प्रावृष्यपि विच्छिन्नप्रवाहेण स्तोकजला नदी वहति, तत्रैकं पादं वारि स्थले चाऽपरं निधाय तामुत्तीर्य चतुर्दिशं पञ्चक्रोशीं गच्छेयुः, इति नद्युत्तरणसम्बधिनी तृतीया ।

( ४ ) गुर्वाज्ञया ग्लानसाधवे साधुराहारादिकमानेतुं कल्पते नेतरथा । गुरुनिर्देशादात्मार्थमानीतं परस्मै दातुं न कल्प्यते, परन्तु गुरुरेवमादिशेत्त्वं याहि, ग्लानार्थं परार्थं स्वार्थञ्चाऽपेक्षितमानीयतामिति चेत्कल्प्यमेव तदिति साधूनां मिथोदानाऽऽदानविषया चतुर्थी ।

( ५ ) चतुर्मासीस्थैः साधुभिः साध्वीभिश्च दधि–क्षीर–नवनीत–घृत–तैल–गुड–मधु–मद्य–मांसेतिनवविकृतिषु मद्य–मांस–मधु–नवनीतेति विकृतिचतुष्टयं सदा हेयमेव । शेषाश्चाऽपि नीरोगसबलैर्नैयत्येनाऽनादेयाः, सति च कारणे ग्राह्याः, पर्युषणे तु शेषा अपि त्याज्या एव । सति च कारणमहत्वे बाह्यपरिभोगार्थं शास्त्रोक्तदिशा मद्य–मांसौ, भैषज्यार्थं मधु–नवनीतौ चाऽपवादतया ग्राह्याविति विकृतिविषया पञ्चमी ।

( ६ ) कश्चिद्द्ग्लानमुनिः श्रावकसदनादपेक्षितं किमपि लातुं वदेत्, तर्हि गुरुं विज्ञप्यैव साधुस्तदर्थं तल्लातुमर्हति । तदप्यधिकं दीयमानमपि नाऽऽददीत, तस्य यावन्मात्रं यदपेक्षितं तदर्थं तावन्मात्रमेव ग्राह्यं, न न्यूनाधिकम् । यदि लाभयिताऽऽगृह्याऽभ्यर्थयेत–साधो ! गृहे चैतद्बहुलं विद्यते, यथेष्टं गृहाण, स्वस्याऽनुपयोगे परस्मा अपि देयम्,

तदाऽनपेक्षितं तदधिकमपि ग्राह्यमितरथा नेति ग्लानिनामपेक्षिताऽऽनीत-वस्तुदानविषयिणी षष्ठी ।

( ७ ) समस्तसाधुभ्यः साम्यधिया दित्सूनां श्राद्धानां नवश्रद्धा-वतां वा सदने गत्वाऽदृष्टं किमपि नैव याचेरन् साधवः । यतस्ते सर्व-प्रदत्वाच्छ्रद्धाऽऽधिक्याद्वा सदने तदभावेऽदत्तं क्रयेण वाऽप्यानीय दद्यु-श्चेत्साधवो दोषमीयुरतस्तदकल्प्यमेव श्रमणानामित्यदृष्टवस्तुयाचन-विषया सप्तमी ।

( ८ ) चातुर्मास्यां साधुभिः साध्वीभिश्चाऽसति प्रतिबन्धके प्रत्यहं सकृदेव भोक्तव्यम् । स्वार्थं परार्थं वा गोचर्या अपि श्रावकौकसि सकृ-देव गन्तव्यम् । परमाचार्योपाध्यायग्लानतपस्विनां शिशूनामनङ्कुरितकू-र्चकानां साधूनां, अजातरजस्कानां साध्वीनाञ्च हेतवे द्वित्रिवारमाहारा-द्यानयने प्रतिबन्धो नास्ति । उपवासिनोऽपि मुनयः पारणादिवसे श्रावकसदनादेकवारमानीय भुक्त्वा तृप्तीभूय पात्रादिकं प्रमार्ज्य पुन-र्गोचर्यै नो व्रजेत्, अतृप्तश्चेत्पुनर्गमने न क्षतिः । विहितषष्ठतपसस्तु द्विवारमानीय भुञ्जीरन् । अष्टमं तपो विधाय त्रिवारं गोचरीमानीय भोक्तुमर्हेत् । इतोऽधिकतपो विदधतां पारणायै यथेच्छं गोचर्यै गमने न कापि हानिरिति गोचरीगमनविषयाऽष्टमी ।

( ९ ) प्रावृषि नित्यमेकाशिनः साधोराचाराङ्गसूत्रोक्तानि सर्वाण्ये-कविंशतिविधानि[1] पानकानि ग्रहीतुं कल्पन्ते । एकान्तरोपवासिनः साधोः पिष्टादिलिप्तपात्रप्रक्षालनजलम्, कथितपत्रादिसेचनजलम्, तण्डुल-

---

१ उत्सेदिमम् १, संस्वेदिमम् २, तण्डुलधावनम् ३, तुषोदकम् ४, तिलधावनम् ५, यवोदकम् ६, अवश्रावणम् ७, सौवीरम् ८, उष्णोदकम् ९, आम्रोदकम् १०, अम्बाडोदकम् ११, कपित्थोदकम् १२, मातुलिङ्गोदकम् १३, द्राक्षोदकम् १४, दाडिमधावनम् १५, खर्जूरधावनम् १६, श्रीफलोदकम् १७, करीरधावनम् १८, बदरधावनम् १९, आमलकोदकम् २०, चिञ्चाधावनम् २१; इत्येकविंशतिपानकानि ।

क्षालनजलश्चेति त्रीण्येव कल्पन्ते पानीयानि । नित्यं षष्ठं तपः कुर्वतान्तु तिलधावनतुषक्षालन—यवप्रक्षालन जलानि त्रिविधान्येव ग्रहीतव्यानि । सदाष्टमतपस्विनस्तु साधोरवश्रावणकाञ्जिकोष्णोदकानीति त्रैधान्येव जलानि लातुं कल्पन्ते । इतोऽधिकमुपवसतः साधोर्वस्त्रगलितमेकमुष्णोदकमर्हति ग्रहीतुम् । विहिताऽनशनस्य साधोरेकमात्रमुष्णं वारि कल्पते, तदपि स्तोकं स्तोकं गलितं परिमितञ्च कल्प्यते, इति जलपानसम्बन्धिनी नवमी ।

( १० ) प्रावृषि संस्थितः साधुर्यावद्दत्तिप्रमाणमाहारं पानकं वाऽभिगृह्णीयात्, तावतीमेव दत्तिं स गृह्णीत, न्यूनाधिकं व्यत्यस्तं वा न । यदेकधारेण स्तोकं बहु वा दीयते सा दत्तिरुच्यते । इति दत्तिप्रमाणविषया दशमी ।

( ११ ) चतुर्मास्यां मुनिर्यस्मिन्नुपाश्रये तिष्ठेत्तमारभ्य सप्तगृहेषु न भिक्षेत, तत्रैकं शय्यातरमितराणि षडासन्नत्वेन साधुगुणानुरागादुद्गमादिदोषोद्भवसम्भवाच्च । सोपाश्रयं सप्तगृहवर्ज्यं, शय्यातरगृहादितरगृहाणि च सप्त वर्जयन्त्येके । एतत्सप्ताष्टगृहेषु जातीयजेमनवारेऽपि नो भिक्षेत, इति संखडीविषयिण्येकादशी ।

( १२ ) प्रावृषि फुसारमात्रेऽपि जलनिपाते सति जिनकल्पिनः साधवः श्रावकागारे भक्तार्थं पानार्थं वा नो गच्छेयुर्न वा करपात्रस्य साधोर्भिक्षामादाय निरावरणे देशेऽवस्थातुं कल्पते । निरावृते प्रदेशे भुञ्जानः करपात्रः साधुरकस्माद्वृष्टिकाये पतितुं लग्ने सति भुक्ताऽवशिष्टं पाणिना पिधाय वक्षसि कक्षे वा गुप्तं कृत्वा स्वार्थाऽऽच्छादितगृहिसदने वृक्षादितले वा समागत्य जलाददूषितश्चेद् भुञ्जीत, जलार्द्रश्चेत्त्यजेदेवेति जिनकल्पिनां गोचरीगमनविषया द्वादशी ।

( १३ ) प्रावृषि स्थविरकल्पिनां साधूनां निरवच्छिन्नधारया मेघे

वर्षति सति भक्तपानार्थं नैव गन्तव्यम् । कस्यचिद्ग्लानस्याऽशक्तस्य क्षुधातुरस्य चिरोपोषितस्य वा हेतवे वृष्टिकायाऽल्पत्वे सौत्रोर्णिकाभ्यां वसनाभ्यां सावृतो भिक्षार्थं निर्गच्छेच्चेन्न हानिः। गृहस्थसदनप्रवेशानन्तरं विरम्य विरम्य स्तोकवृष्टौ साधुरारामे मण्डपाऽधस्तरोस्तले उपाश्रये वा समागच्छेत् । भिक्षितुं सदनमनुप्रविष्टस्तु समागतायाश्च वृष्टौ प्राग् निष्पादितमोदनादिकं लातुं कल्पते, पश्चादुत्तारितं यद्यद् भवेत्तत्तन्नैव कल्प्यम् । इत्थं साधोरागमनात्प्राक् स्वहेतवे यद्यत्पाचितं गृहिभिस्तदेव प्रासुकभक्तसूपव्यञ्जनादिकं प्रतिग्राह्यम् । श्रावकैराहारे प्रतिलाभिते स्थित्वा स्थित्वा वर्षा पतेच्चेदारामे तरोस्तले वा सावृतदेशमागत्य भुञ्जीत भोजनवेलां नातिक्रामेत् । तत्रस्थेनापि साधुना भुक्त्वा पीत्वा पात्राणि निर्लिप्तानि कृत्वा कक्षीकृतपात्राद्युपकरणः प्रावृतगात्रो वर्षत्यपि जलदे सूर्यास्तात्प्रागेवोपाश्रये समागच्छेद्रात्रावेकाकी बहिर्नावतिष्ठेत, बहिःस्थस्य साधोरनेके दोषा उत्पद्यन्ते वसतिस्थिता वा साधवोऽधृतिं विदधाति । साधोः साध्व्याश्च गोचर्यै गृहस्थसदनमुपगतस्य वृष्टेरविरतौ सत्यामारामादौ केन विधिना स्थातुं कल्पते ?, तदाह–

साधुना सहैकत्र साध्वी नैवाऽवतिष्ठेत, वा द्वौ साधू नैकया साध्व्या, एको वा साधुर्द्वाभ्यां साध्वीभ्यां, वा द्वौ साधू द्वाभ्यां सहैकत्र नैवाऽवतिष्ठेयाताम् । तत्रापवादमाह–क्षुल्लकः क्षुल्लिका वा पञ्चमस्तन्मध्यपाती चेदेकस्मिन्नपि सर्वतो द्वारे सकललोकदृश्ये स्थाने स्थातुं कल्पते । एवं चतुर्भङ्गः साधोः श्राविकया, साध्व्याश्च श्रावकेनाप्यवगन्तव्यः । अथवा क्षुल्लकादिपञ्चमं विनापि वर्षति मेघे नियतकर्मकलोहकारादौ निजकर्मतत्परे पश्यति सति निरावृतस्थाने साधोः साध्व्याश्च सहस्थितिः कल्पत इति गोचर्यै गतानां साधुसाध्वीनामेकत्रवासविषया त्रयोदशी ।

( १४ ) साधुः साध्वी वा कथनमन्तरा कस्यापि हेतोराहारादिकमा-

नेतुं नैव कल्पते। पृष्ट्वा वा यावन्मात्रं लातुमुच्येत तदर्थं तावदेवाऽऽनेतव्यं न्यूनाधिकं न। यदपृच्छयाऽऽहाराद्यानयने कलहादिदोषा उत्पद्यन्ते, इति कथनमन्तरा परार्थाऽऽनयनविषया चतुर्दशी।

( १५ ) प्रावृषि यावन्तं कालमार्द्रदेहस्तावतीं वेलां साधुः साध्वी वा नाऽभ्यवहरेत, यतो बाहुल्येन पाणी, पाणिरेखा, नखाः, नखाग्रं, भ्रुवोर्नेत्रयोश्चोर्ध्वरोमाणि, दाढिका श्मश्रूणि चैतानि सप्तस्थानानि क्लिन्नानि भवन्ति। अत एतानि शुष्काणि कृत्वैवाऽशनादिकमशितव्यमिति क्लिन्नशरीरवतामाहारनिषेधविषया पञ्चदशी।

( १६ ) प्रावृषि प्राण–पनक–बीज–हरित–पुष्पाऽण्ड–बिल–स्नेहकायिका अष्टौ सूक्ष्माः कृष्णनीलपीतरक्तासितेति पञ्चवर्णा बहुश उत्पद्यन्ते। तत्र प्राणसूक्ष्माः–कुन्थ्वादयो जीवाः, पनकसूक्ष्माः साधारणसूक्ष्मवनस्पतिविशेषाः, बीजसूक्ष्माः–शाल्यादयः, हरितसूक्ष्मा–नवोद्भिन्नाङ्कुरवनस्पतिरूपाः पृथ्वीसमानवर्णाः, पुष्पसूक्ष्मा–वटोदुम्बरादयः, अण्डसूक्ष्मा–मक्षिकामत्कुणलूतापिपीलिकाहलिकाशरटीप्रमुखाः, बिलसूक्ष्मा–वल्मीकशुष्कभूमिपर्पटिकाशुण्डिकादिजीवानां सदनानि, स्नेहसूक्ष्माः–तुषार–धूमरी–करका–कुशाग्रस्थजलबिन्दवः। अतिसौक्ष्म्याच्छद्मस्थैर्द्रष्टुमशक्यत्वाच्चैतेषां रक्षणार्थं पुनः पुनरवलोकेरन्, प्रतिलिखेयुः, परिहरणीयतया विचारयेयुश्चेति सूक्ष्मरक्षणविषया षोडशी।

( १७ ) प्रावृषि संस्थितः साधुः साध्वी वाऽऽहाराद्यानयन–जिनालयगमन–स्थण्डिलभूमिगमन–स्वाध्यायध्यान–धर्मजागरण–दधिक्षीराद्यानयन–भैषज्यानयनादिसर्वं गणधराऽऽचार्योपाध्यायस्थविरगणिगणावच्छेदकान्, यं वा पुरस्कृत्य विहरेत् तमापृच्छ्यैव कुर्यादितरथा न, यदेते प्रत्युपायवेत्तारः। एवं प्रशस्तमुपसर्गहरं कल्याणकारि, महाप्रभाविकं तपःप्रमुखमपि गुर्वाद्यादेशेनैव विधातुं कल्पते नेतरथा। अन-

शनचिकीरपि साधुः साध्वी वा गुर्वाद्यनुज्ञातः समुज्झितदेहाभिमानः प्रत्याख्याताऽऽहारपानः, संलेखनां द्रव्यभावभेदाभिन्नां जुषमाणः, कृतपादपोपगमनो जीवितमर्त्तव्यकालमनिच्छन् संस्तारके शयीतेति गुर्वादेशेनैव सकलकार्यकरणविषया सप्तदशी ।

( १८ ) प्रावृषि पर्युषणानन्तरं साधुः साध्वीवोपधिं घर्मादौ सन्तापयितुमिच्छेत्तर्हि तावन्तङ्कालं तत्पश्यँस्तत्र तिष्ठेत्, कमप्यन्यं वा तद्द्रष्टुं नियोज्य कार्यान्तरं विदध्यादितरथा नेत्युपधिसन्तापनविषयाऽष्टादशी ।

( १९ ) चतुर्मास्यामनभिगृहीतशय्यासनकः साधुः साध्वी वा मणिकुट्टिमभूमितलादावपि हस्तोन्नतसुस्थिरपीठफलकादिमाश्रित्यैव तिष्ठेत् । तच्च पौनःपुन्येन प्रतीक्षेत, घर्मे तापयेन्नोचेज्जीवविराधना संयमविराधना च स्यादिति शय्याऽऽसनग्रहणविषयैकोनविंशतितमा ।

( २० ) प्रावृषि साधूनां साध्वीनाञ्चोच्चारप्रस्रावभूमित्रयी कल्पते—दूरे मध्ये समीपे च । ताश्च प्रत्यहं प्रतिलेखनीयाः, हेमन्तग्रीष्मयोरिव वर्षासु न कर्त्तव्यम् । यतः प्रावृषि हरितकायजीवादेर्बाहुल्येन जननं जायत इति प्रस्रावोच्चारभूमिविषया विंशतितमा ।

( २१ ) प्रावृषि साधुभिः साध्वीभिश्चोच्चारमात्रकप्रस्रावमात्रक—श्लेष्ममात्रकाणीति त्रीणि ग्राह्याणि । तदभावे समयातिक्रमाद् वेगरोधे चाऽऽत्मविराधना, वर्षति च मेघे बहिर्गमनात्संयमविराधना स्यादिति मात्रकविषयिण्येकविंशतितमा ।

( २२ ) युवानः साधवस्तरुण्यः साध्व्यश्च चतुर्भिश्चतुर्भिर्मासैः, वृद्धा षड्षण्मासैः, स्थविराः प्रतिवर्षेण कचानां लुञ्चनमवश्यमेव कुर्वीरन् । साम्वत्सरिकप्रतिक्रमणे तु गोलोममात्रेणापि केशेन शिरसि नैव भवितव्यम्, नो चेदप्कायविराधना यूकादेरुत्पत्तिश्च जायेत, कण्डूयने तु

नखक्षतान्यपि समुत्पद्येरन् । ये पुनरशक्तग्लानबालखञ्जाः सन्ति लुञ्चने ज्वरादिपरिबाधिताः साधवः साध्व्यश्च भवेयुः, तैरपवादतः प्रतिमासे क्षुरमुण्डनं, प्रतिपक्षे कर्तर्या कुन्तनं वा विधाय क्रमशो गुरुमासिकं लघुमासिकं च प्रायश्चित्तं कर्त्तव्यमिति केशलुञ्चनविषया द्वाविंशतितमा ।

( २३ ) साम्वत्सरिकप्रतिक्रमणं समाप्य ज्ञानादज्ञानाद्वा जातमपराधं साधुः साध्वी च मिथः क्षामयेदेव, प्रमादादिना मनसि नैव धारयेत्तम् । चेत्कश्चित्कुर्वीत तर्हि स इतरैरेवं भाष्यः—आर्य ! कथमेवमयोग्यमाचरसि ?, इत्थं प्रतिबोधितोऽपि कषायं नोज्झेत्तदा शटितपर्णवत्तं सङ्घतो बाहिः कुर्यादित्यधिकरणोदीरणाविषया त्रयोविंशतितमा ।

( २४ ) प्रावृषि स्थिताः साधवः साध्व्यश्च वा चेत्पर्युषणादिने कलहायेरन्, कटूनि वा भाषेरन्, उद्विजेरन् वा तर्हि शिष्या रत्नाधिकादिकं क्षामयेयुः । रत्नाधिकादयोऽपीदृशाश्चेच्छिष्यादिकं क्षमापयेयुरेव । इत्थं क्षमयित्वा मिथः कषायमुपशमयितुं यतितव्यम् । तदुपशमकर्त्तारो ज्ञानादेराराधकाः, अन्यथा विराधका जायन्ते । अस्यैव हि सारत्वं भगवता प्रत्यपादि, अतः सकलसाधुसाध्वीभिस्तदर्थं यतितव्यमेवेतितत्त्वामिति मिथः क्षमणक्षमापणविषया चतुर्विंशतितमा ।

१३७ क्षमापणमावश्यकं तदुपरि उदायननृपदृष्टान्तः—

यो हि ज्ञानादज्ञानाद्वा जातं जायमानं कलहं न क्षमयते स निकाचितं कर्म बध्नाति, तस्य जपतपःप्रतिक्रमाणादिसकलापि धर्मक्रिया वैफल्यं व्रजति । अत एव सूत्रकृतो लिखन्ति 'जो उवसमइ तस्स अत्थि अराहणा, जो न उवसमइ तस्स नत्थि आराहणा' योह्युपशाम्यति तस्याऽऽराधनास्ति, यो नोपशाम्यति तस्य नास्त्याराधना, किन्तु विराधनैव भवति । अत उदायनराजेव कृतकलहं क्षमयित्वैव साम्वत्सरिक—प्रतिक्रमणं विदधान आराधको भवितुमर्हति नेतरथा । तथाहि—

चम्पापुरीनिवासी पञ्चशतरमणीप्रियः स्वर्णकारः कुमारनन्दी कदा-

चिदेकदा हासा-प्रहासादेव्यौ विलोक्य मदनातुरस्तल्लिप्सया तद्दर्शितोपायेन श्रावकेण नागिलसखेन वारितोऽपि ज्वलन्त्यां चितायां निपत्य तयोः पतिर्विद्युन्माली देवोऽजायत । अथैकदा शक्रेन्द्रः सपरिवारो नन्दीश्वरद्वीपयात्रायै कृतप्रयाणः पटहवादयन्नग्रेऽग्रे चलितुं विद्युन्मालिनमादिदेश । ततो हासा-प्रहासे तद्गले पटहं निदधाते, परमसौ तथा कर्त्तुं नैव चक्रमे । तदोक्तं ताभ्याम्-स्वामिन् ! गले पतितोऽसौ नैवाऽधुनोत्तरिष्यति, अत एनं वादयता त्वयाऽग्रे चलितव्यमेव ' ततोऽनिच्छन्नपि स तदकरोत् । तदवसरे द्वादशे देवलोके समुत्पन्नो नागिलजीवोऽपि शक्रेण सार्धं गच्छन्नेनमुवाच-पुरा भवे मदुक्तिं नामंस्थाः, अतस्त्वं नीचदेवयोनावुदपद्यथाः, परमधुनापि मद्गिरं मनुषे चेद् गोशीर्षचन्दनमयीं महावीरविभोः प्रतिमां विधाय समुपास्व, येन सम्यक्त्वमधिगम्य श्रेष्ठगतिमाप्स्यसि । तद्वचसाऽसौ तथाकुर्वाणः प्रान्ते स्वच्यवनमासन्नमवगत्य तां प्रतिमां मञ्जूषान्तर्निधाय पिधाय देवाधिदेवस्य प्रतिमेति कथयित्वा च पोतस्वामिना सह वीतभयपत्तने उदायनभूभुजः पार्श्वे प्रैषीत् । सोऽपि समेत्य राज्ञे तां दत्त्वा देवाधिदेवप्रतिमाऽस्त्यस्यां केनचिद्देवेन भवते मद्धस्तेन प्रेषिता । ततो नरनाथः प्रसद्य ब्रह्मविष्णुमहेशाद्यन्यदेवनाम्ना तामुद्घाटयितुं प्रायतत, परन्तु तस्या उद्घाटनं नाऽभूत् । तावद्राज्ञी प्रभावती तत्राऽऽगत्य ' चेद्देवाधिदेवः श्रीअर्हन् भगवाँस्तर्हि समुद्घट्यतामेषा पेटिका ' इति व्याजह्रे । तदैवोद्घाटिता सा, तदन्तः प्रतिमां निष्काश्य चैत्येऽतिष्ठिपत्, सदा राज्ञी तामानर्च । अथैकदा पूजाकालिकं सितं वस्त्रमानेतुं दासीमादिशत्तयापि तदानीय आदायि । दृष्टिदोषेण राज्ञी सितमपि तद्वसनं रक्तं मत्वा दास्यै चुकोप । कालान्तरे पुनस्तं वसनं सितं विदती राज्ञा ' ममायुः षण्मासिकमात्रमवशिष्यते ' इत्यवधार्य राजानं दीक्षार्थमादेष्टुं प्रार्थयत । ' चेन्मे कष्टे पतिते स्वर्लोकादागत्य समुद्धरेस्तर्हि दीक्षां ग्रहीतुमादिशानि ' इति

नृपोऽचकथत । प्रभावत्यपि नृपोक्तं स्वीकृत्य दीक्षिता सती संयममवित्वा स्वायुषः क्षये देवगतिमाप्नोत् । अथैकदा प्रभावतीदेवस्तापसरूपेणाऽमृतफलं दर्शयित्वा नृपं वनमानीय सर्वे योगिनस्तं हन्तुमलगन् । तदवसरे नरपतिः प्रभावतीदेवं सस्मार । सोऽपि तत्क्षणं तत्राऽऽगत्य नृपमुत्पाद्य साधुसमीपे तत्याज । तत्र सर्वतः सारं धर्ममेवेति मत्वा श्राद्धव्रतं प्रतिपद्य स्वस्थानमाजगाम ।

अथ प्रव्रज्याकाले तां वीरप्रतिमामर्चितुं प्रभावती दासीमादिदेश, सैवार्चति नित्यम् । तत्रैकदा प्रतिनगरं प्रतिचैत्यमर्चितुं निर्गतः कश्चिद् गान्धारनामा श्रावकः समागत्य तामपि प्रतिमामानर्च । ततस्तं समुत्पन्नज्वरार्दितं दासी–देवदत्ता पथ्यौषधदानेन स्वस्थीकृतवती । तस्यै च गुटिकाद्वयं समर्प्य तद्गुणश्चाऽऽभाष्य गान्धारोऽन्यत्र गतः । ततः सा प्रथमगुटिकामशित्वाऽप्सरा इव सुरूपा जाता, ततएव स्वर्णगुलिकेति नाम्ना सर्वत्र पप्रथे । चण्डप्रद्योतनं राजानं मनसि भर्त्तारं कृत्वा द्वितीयगुटिकाञ्च ववल्भे । तेन तदधिष्ठातृदेवतोज्जयिन्यामागत्य नृपाग्रे तथा दासीरूपमवर्णयद्यथा तत्कालमेव स नरपतिस्तस्यामेव रात्रावनलागिरिगजारूढस्तत्रागात् । दासीमाकार्य गन्तुमुवाच, तयोक्तं प्रतिमां विना नाहं गन्तुमर्हामि । ततो राजा तादृशीमपरां प्रतिमां तत्र संस्थाप्य देवार्पितां प्रतिमां चाऽऽदाय दास्या सह स्वपुरमाययौ । प्रातःकाले उदायनराजा मदविधुरं निजगजराजमालोक्य ' अनलागिरिकरिणमारुह्याऽत्राऽऽगत्य चण्डप्रद्योतनः खलु दास्या सह वीरप्रतिमामहरत् ' इत्यवगत्य कोपाटोपाद्रक्तीकृतलोचनो दशभिर्मुकुटबद्धभूपतिभिः सहामितचतुरङ्गचमूपरिवृत उदायनराजोज्जयिनीम्प्रतस्थे । मार्गे च जैसलमेरु–ब्रह्मसरःसमीपमागत्य जलमलभमानस्तृषाक्रान्तो राजा प्रभावतीदेवं सस्मार । स शीघ्रमागत्य देवशक्त्या पुष्करप्रमुखं मिष्टवारिपूर्णमनेकं तटाकमकरोत्, तैश्च सर्वे

सैनिकाः सुखिनो जाता। इत्थं क्षितीशो विपक्षनगरसीम्नि समागत्य तस्थौ। 'भोः। दासीं जिघृक्षासि चेद् गृहाण, न मे तेन कापि क्षतिः, प्रतिमामिष्टतमां प्रत्यर्पय, नो चेत्समराय समुद्यतो भव' इति दूतमुखेन तमुवाच। दूतोक्तमाकर्ण्य चण्डप्रद्योतनोऽपि चतुर्दशमुकुटधारिनरपालैः सह सम्मुखमाययौ। ततो मिथो युद्धे प्रवर्त्तमाने पुराऽनलगिरिकरिवरमनारुह्यैव योद्धव्यम्, इति निश्चितामपि प्रतिज्ञां भङ्क्त्वा चण्डप्रद्योतनस्तमेव गजमारुह्य योद्धुमलगत्; परन्तु तमञ्जसा गजस्कन्धादधो निपात्य 'एष चण्डप्रद्योतनो मम दास्याः पतिः' इति तल्ललाटपट्टेऽङ्कयित्वा प्रतिमां ग्रहीतुमलगत्, तदाऽनुत्तिष्ठन्त्यां प्रतिमायां व्योमगीरभूत्–'राजन्! प्रतिमां नोत्थापय, अत्रैव मुञ्च। यतो हि वीतभयपत्तनीयविनाश आसन्नोऽस्ति।' तामाकर्ण्य प्रतिमां तत्रैव मुक्त्वा चण्डपद्योतनं बद्ध्वा नीत्वा च चचाल। अधिमार्गं समागतं पर्युषणं विज्ञाय ससैन्यस्तत्रैव शिबिरं कर्त्तुमादिशदुदायनराजा। तच्च विधिवदाराधयन् स्वयमुपवसन् 'यथारुचि पक्त्वा चण्डपद्योतनो भोजयितव्यः' इति पक्तारमादिश्य जिनार्चनादि कृत्यं प्रारेभे। पाचकस्तमपृच्छत्–अद्य किं पक्तुमादिशसि ?, सोऽवदत्–तव राज्ञे यद्यद्रोचेत। सूपकारोऽजल्पत्–अद्य पर्युषणत्वात्स नाऽशिष्यति, अतो भवते यद्रोचेत तदुच्यताम्। 'नूनमद्य मां विषमाशयितुं पृथगेव पिपाचयिषति' इत्यवधार्य चण्डप्रद्योतनो जगाद–अहमप्युपवत्स्यामि, मदर्थं मा पाक्षीः। तव राजास्ति मे सधर्मी, अहमप्यार्हतमेव धर्मं सेवे। इति तद्वचनं पाचको निजस्वामिनमवोचत। तद्धौर्त्यं जानान उदायनभूपतिः 'भयादपि साधर्म्यमुपगतमेनं क्षमयित्वैव प्रतिक्रमणकरणमुचितम्' इति विचार्य कारागारात्समानाय्य क्षमयित्वा तल्ललाटपट्टे सौवर्णं पट्टं बन्धयित्वा सत्कृत्य च चण्डप्रद्योतनं स्वराजधानीं यातुमादिशत्। इत्थमन्यैरपि क्रोधं महान्तमपि त्यक्त्वा द्विडपि क्षाम्य एवेति हार्दम्।

१३८ अक्षमापणे ग्राम्यलोकदृष्टान्तः—

यो हि परस्मै द्विष्ट्वा न क्षमयाति, तस्याऽनर्थो वर्द्धते, ग्राम्यलोकवत्तथाहि—कश्चिद् ग्रामे भाण्डैर्भृतं शकटं लात्वा कश्चित्कुम्भकारो विक्रेतुमागात्। तस्यैकं वृषभमपहर्त्तुं तद्ग्राम्याः सकला धूर्त्तास्तत्र मिथो जल्पितुं लग्नाः—भो भो लोकाः! पश्यत पश्यत, महदाश्चर्यमेतदसौ समागतः शकट एकेनैव वृषभेण याति। तच्छ्रुत्वा कुम्भकारः—' एते सकला अपि चौराः सन्ति, यन्ममैकं वृषभं चोरयितुं वृषभद्वयवाह्यमप्येकवाह्यं ब्रुवन्ति ' इति निरचिनोत्। भाण्डविक्रयणे दत्तचित्तं तमवगत्य तदीयमेकं वृषभमपहृत्य गोपयामासुस्ते धूर्त्ताः। गमनवेलायामेकं वृषभमपश्यन् भृशमाक्रोशन् ग्राम्यान् पृच्छन्नपि नैव लेभे। यं यं वृषभापहारमभाषत, ते ते ' मयात्वेक एव वृषभोऽदर्शि ' इत्येव निगदन्। ततः स निरस्तो भूत्वा दुःखेन स्वसदनमाययौ, परमेष तत्क्रोधेन सप्ताब्दीं तन्नगरीयं क्षेत्रं खलं च सकलं भस्मसाच्चक्रे। तेन ते धूर्त्ता महादुःखिनो भवन्तस्तद्दाहकमपश्यन्त एकदा यक्षयात्रायां मिलित्वा उच्चैः पटहं वादितवन्तः—यो नः क्षेत्रखले दहति, स प्रकटीभवतु। तदवसरे रूपान्तरेण सोऽजल्पत्—यस्यैकवृषभवाह्यं शकटं भवन्तो ह्यलोकिरे, तमेव दाहकमवगच्छत। इति श्रुत्वा ते विविदुः—यस्य पुरा वयं चौर्येणैकं वृषभमपहार्ष्म स एव कुम्भकारो दहति। अतस्तस्मै वृषभं दत्त्वा पुराकृतमपराधं क्षामयेम चेदग्रे पुनर्नो धक्ष्यति। इत्यवधार्य ते तस्मै वृषभं ददुः, क्षमयामासुश्च। तेन ते सुखभाजो बभूवुः। इत्थमपरैः कस्यचित्तादृशो मन्तुर्नैव कर्त्तव्यः, कदाचिज्जायेत तर्हि तत्कालमेव तेन तत्क्षमयेत यदुदर्के कश्चिदनर्थो नोत्पद्येत।

१३९ अनुज्झितरोषोपरि कृषकविप्रदृष्टान्तः—

यो हि कदाग्रहादिकारणेन पर्युषणपर्वणि क्रोधं नोज्झेत्स साधुः साध्वी वा शटितपर्णमिव सङ्घतो बहिष्कर्त्तव्यः कृषकविप्रवत्तथाहि—

एकस्यां ग्रामटिकायामेकः कृषीवलो विप्रो निवसति स्म । क्षेत्रं कृषतस्तस्यैकदा वृषभोऽतिवहनाच्छ्रान्तो वहनकाल एव निषसाद । तदा कुपितेन तेन पार्ष्णिना लकुटेन भृशं ताड्यमानोऽपि नैवोत्तस्थौ । ततश्च कुप्यमानो ब्राह्मणस्तदुपरि तावन्ति लोष्ठानि चिक्षेप, यावद्भिस्तैश्छन्नः भूत्वा रुद्धश्वासो वृषभो ममार । मृते च तस्मिन् स पण्डितपार्श्वे तद्वृत्तं यथावन्निगद्य गोवधपापापनोदाय प्रायश्चित्तमयाचत । पण्डितोऽब्रवीत्-येन क्रोधेन तज्जघान सकोपस्ते शशाम वा न? । विप्रोऽवदत्–चेदधुनापि स ममाग्रे जीवन्नाऽऽगच्छेत्, तर्हि पुनरपि तं हन्यामेव । तदुक्तिमाकर्ण्य पापिष्ठं मत्वा नैव पापान्मुच्यसे त्वमिति निगद्य जात्या बहिश्चक्रे । तद्वदेव सत्यपराधे यो न क्षमयेत, सोऽपि सर्वैर्बहिरेव कर्त्तव्यः ।

१४० अज्ञानकृतमन्तौ मृगावतीदृष्टान्तः—

कदाचिदज्ञानतो जातेऽपि मन्तौ मृगावतीव क्षमापयेत । तथाहि-एकदा वीरविभुः कौशाम्ब्यां पुर्यां समवससार, तत्र भगवतो वन्दनार्थं सहैव चन्द्रसूर्यावुभौ मूलविमानेन समागतौ । चन्दनबालामृगावतीप्रभृतयस्तदा तत्रैव विभोर्देशनां शृण्वन्त्य आसन् । तासु चन्दनबालाप्रभृतयस्तु दिनान्तकाल एवोपाश्रयमाजग्मुः । मृगावती प्रभुदेशनाऽवहितमनास्तत्रैव तस्थौ । चन्द्रसूर्ययोर्गतयोरन्धकारे सर्वत्र प्रसृते बह्वी गता रजनी, इति ज्ञात्वा चन्दनादिका अपश्यन्ती सत्येकाकिनी मृगावती त्वरया व्रजन्ती स्वस्थानमागत्येर्यापथिप्रतिक्रम्य चन्दनायाश्चरणौ चम्पयन्ती 'अहमियतीं वेलां तत्रैकाकिनी स्थित्वा निशि समागतास्मीति ममापराधं क्षमस्व, पुनरग्रे नैवं करिष्यामि' इत्युवाच । 'त्वमुत्तमकुले जातासि, अतस्त्वया पुनरेवं न विधेयम्' इति चन्दनादत्तशिक्षणं शृण्वती शुद्धेन मनसा कृतापराधं क्षमयन्ती तत्क्षणं केवलज्ञानमलब्ध । चन्दना तु निदद्रौ, तदवसरेऽन्धतमसेऽपि केवलज्ञानत आगच्छन्तं फणिनं विदित्वा मृगावती चन्दनाया अधःपतितं पाणि-

मुत्थाप्य संस्तारोपरि न्यधित । जागृता चन्दनाऽप्राक्षीत्—मद्धस्तं कः केन कारणेनोद्पाटयत ?, मृगावत्योक्तम्—स्वामिनि ! मयैव सर्पदृशन-भिया तथाऽकारि । अपृच्छच्चन्दना—ईदृशे गाढेऽन्धकारे समायातं सर्पं कथमवेदीः ?, किं ते केवलमुत्पेदे ? । तयोक्तम्—भवत्याः प्रसादतस्त-दुत्पन्नम् । 'हन्ताऽहं केवलिनमवजज्ञे' इति हेतुना खिद्यमाना मुहु-र्मुहुः पश्चात्तापं कुर्वाणा तदर्थं क्षमयमाणा मिथ्यादुष्कृतं ददाना चन्दनापि केवलज्ञानमलभत । इत्थं भव्यैर्मिथ्यादुष्कृतं दातव्य-मिति भावः ।

१४१ कुम्भकार–शिष्ययोर्दृष्टान्तः—

कुम्भकारशिष्ययोरिव दत्तमपि मिथ्यादुष्कृतं वैफल्यं याति । तथाहि-कश्चित्कुम्भकारो भाण्डानि निर्माय घर्मे शोषयन्नासीत् । तानि कोऽपि लघुशिष्यः कङ्करैः स्फोटयाति स्म । यदा यदा प्रतिषेधाति कुम्भकार-स्तदा तदा मिथ्यादुष्कृतमदात् । एकदा प्रागिव स्फोटयतस्तस्य साधो-रपि कर्णौ सकङ्करपाणिना मोटयितुमारभत । यदा यदा 'कर्णौ पीड्येते' इति रुदन्नवोचत तदा तदा कुम्भकारोऽपि मिथ्यादुष्कृतं दातुमलगत् । प्रान्ते महादुःखमनुभूय शिष्यस्तादृशकर्मणो विरराम । अत एतादृशं मिथ्यादुष्कृतं दायं दायं पापमाचरन् कोऽपि सुखी भवितुं नैव शक्नोतीति भावः ।

१४२ श्वश्रूजामात्रोर्दृष्टान्तः—

समायाते पर्युषणपर्वणि मानसवैकृत्यमत्त्वेऽपि लोकव्यवहारार्थं श्वश्रूजामात्रोरिव क्षमनीयमेव । तथाहि—कस्मिंचिद् ग्रामे काचिदेका वृद्धा महाकृपणा पतिपुत्रविहीना बहुधना न्यवात्सीत् । तस्या आसीच्चैका पुत्री, सा तारुण्ये वयसि केनापि कुलपुत्रेण परिणायिता परन्तु कार्पण्य-दोषात्सा जामात्रे किमपि न दत्तवती । अतः सोऽप्रसन्नतां नीतः

कदापि होलिकादिपर्वदिवसेषु बहुधाऽऽहूतोऽपि भोक्तुं नागच्छत् । तदा लोकास्तां वक्तुं लग्नाः—रे ! तवैक एव जामाता वर्त्तते तस्माकार्यं कदापि नैव भोजयसे, पुत्रस्तु नैवास्ति, को जानाति स्वल्प... तवैतद्धनं को भोक्ष्यते ? । तत एकदा तसवादयज्जामातः त्वयैक... नैवाऽद्य भोक्तुमागन्तव्यम् । जामातरं सखायो जगदुः—अद्य ते घनं धनं वृद्धा दातुमेकाकिनमाकारयते । ततः स तद्वेश्मनि समायातः, सापि बहुहर्षं दर्शयन्ती महताऽऽदरेण योग्यासने समुपावेश्य स्थाले च पायसं परिविष्य, घीलोडिकाग्रेण घृतबिन्दून् भोजनपात्रे पातयितुं लग्ना। इत्थं घृतबिन्दून् पातयन्त्यास्तस्या महान् कालो लग्नः । 'यदेषा कृपणा चातुर्येण वञ्चयति' इत्यवधार्य जामाता सहसैव तस्याः करं गृहीत्वै-कदैव घृतपात्रं पर्यवर्त्तयत, अभ्यधाच्च—पर्याप्तं जातमतः परं नापेक्ष्यते । श्वश्रूः—'अहो ! पात्रे घृतं स्तोकमपि नाऽस्थात्, जामाता सर्वं भोक्ष्यति, तत्तु न वरम्, अत इदानीं कापि युक्तिः कर्त्तव्या' इति निर्धार्य 'जामातः ! आवयोश्चिरमालापादिकं निरुद्धमासीत्, अतोऽद्य सहैव द्वाभ्यां भोक्तव्यम्' इत्यभिधाय भोक्तुं निषसाद । परन्तु तद्दिशि स्थालस्य नीचत्वादधिकमासीत्सर्पिरिति विदित्वा तदुपालम्भनव्याजेनाऽङ्गुल्या तद्घृतं स्वदिशि समाकृषन्ती जामातरमब्रवीत्—'पुरा होलीदिवसे त्वमाकारितोऽपि नाऽऽगाः, दीपमालिकायामपि नाऽऽगाः' एवं तमुपलभमाना सकलमाज्यं स्वदिश्याकृष्टवती । तद्विलोकमानो जामाता 'अद्यावधि यदासीदावयोर्गमाऽऽगमाऽऽलापादिसहभोजनप्रतिरोधिवै-मनस्यं तत्सर्वं विहाय मन एकं विधातव्यं, गतन्तु मनसि नाऽऽनेतव्यम्' इत्याभाष्य स्थालमुत्थाप्य सकलं पायसं पीत्वा 'मया प्रसन्नं त्वयापि च प्रसन्नमनसा भवितव्यम्' इत्युवाच । असाविव जातमपराधं क्षमेत मिथ्यादुष्कृतं दत्त्वा क्षमापयेच्च ।

१४३ सदृष्टान्तोऽष्टप्रवचनमातास्वरूपम्—

पञ्चसमितित्रिगुप्त्येवाऽष्टप्रवचनमाता निगद्यते । यथा लोके मात्रा

विना शिशोः पालनादि कर्त्तुं नैव शक्यते, तथैवाऽष्टप्रवचनमातरं विना चारित्रधर्ममवितुं कोऽपि नाऽर्हति । समीक्षापूर्वकं गमनमीर्यासमितिः, विमृश्य हित–मित–निरवद्यभाषणं भाषासमितिः, संयमनिर्वाहार्थमदोषभिक्षाऽऽदानमेषणासमितिः, वस्तुमात्रस्य प्रतिलेखन–प्रमार्जने विधायो त्थानस्थाने, भाण्डमात्राऽऽदाननिक्षेपणसमितिः, निष्प्रयोजनीयवस्तुजातं निर्वद्यभूमौ परिक्षेपणं पारिष्ठापनिकासमितिः, मनसा पराऽनिष्टाऽचिन्तनं मनोगुप्तिः, पराऽनुद्वेगिवचनं वचनगुप्तिः, अप्रयोजनं कायाऽसञ्चारः कायगुप्तिः कथ्यते । चारित्रधर्मसवद्भिः साधुभिः साध्वीभिश्च गृहस्थैश्चैतदष्टप्रवचनमाता यत्नतो रक्षणीया । अत्रैवं दृष्टान्ताः—

१ अथैकदा सौधर्मेन्द्रः सदसि सकलदेवसमक्षमाचष्ट–यदधुना भरतक्षेत्रे वरदत्तमुनिवदपरः कोऽपीर्यासमितिपालको नास्ति। तदसहमानो मत्सरी कश्चित्सुरस्तत्परीक्षार्थमत्रागत्य गजरूपं विकुर्व्य करेण तमुत्थाप्य देवमायया समुत्पादितलघुलघुभेकाकुले भूतले न्यपातयत् । तदवसरे निपतन्मुनिः ‘ यन्मे मृत्योर्भीतिर्नास्ति, कालान्तरेऽवश्यंभाविनी मृतिरधुनैव जायताम्, परमिदानीं मदङ्गयोगादेते लघुभेका मा म्रियन्ताम् ’ इति धिया रजोहरणेन भूमिप्रमार्जनं कर्त्तुमारेभे । तद्वीक्ष्य प्रसद्य प्रत्यक्षीभूय सुरोऽजल्पत्–मुने ! क्षमस्व, क्षमस्व, त्वामिव कोऽप्यपरः संसारे जीवविराधनान्न बिभेति, अतस्त्वां नमस्यामि । इत्थं स्वमन्तुं क्षमयित्वा सुरः स्वस्थानकमयासीदितीर्यासमितौ वरदत्तमुनिकथा ।

२ अथैकत्र नगरे समतिष्ठत संगतमुनिस्तन्नगरं सर्वतोऽरुणद्वैरिबलम् । तदा बहिर्यान्तं संगतमुनिमालोक्य तेऽप्राक्षुः–साधो ! अन्तः कियती चमूस्तिष्ठति ?। साधुनोक्तम्–श्रूयते बह्वीति दृशा तु नाऽऽदर्शि । पुनः पुनः पृच्छतस्तानेवमेव द्वित्रिवारमाख्यन्मुनिः, अमुना कथनेन तमुन्मत्तं मत्वा जहुस्ते । इतिभाषासमितौ संगतमुनिकथा ।

३ एकदा नन्दीषेणमुनिर्ग्लानस्य वैयावृत्त्यकरणं प्रतिज्ञातवान्। षष्ठं तपः कुर्वाणोऽप्यनवरतस्तमेकदा सुरनायकः सदसि सुराणां पुरः प्रशशंस । तदसहमानः कश्चिदीर्ष्यालुरमरस्तत्रागत्याऽतीसारपरिपीडितं साधुं विकुर्व्य तं वने संस्थाप्य स्वयं रूपान्तरेण समागत्य नन्दीषेणं वादीत्–साधो ! कश्चित्साधुरतीसारपीडितोऽनाथ इव वने तिष्ठति नंदीषेणस्तदैव तदर्थं शुद्धोदकं लातुं गृहस्थसदनानि जगाम । सर्वत्र सुरो मायया जलान्यशुचीन्यकरोत्, तानि वारि सोऽग्राह्यानि नाऽऽदात्। ततस्तदन्तिकमागत्य तं ग्लानं निजस्कन्धमारोप्य चचाल । तत्रापि स तत्स्कन्धे जहदे । तथापि नन्दीषेणमविकृतमुदीक्ष्य प्रकटीभूय देवः जजल्प–नन्दीषेण ! क्षमस्व । सुरेन्द्रकृतां ते प्रशंसामसहमानोऽहं सर्वमेतदकरवम्, त्वं धन्योऽसि नान्यस्त्वामिव कोऽप्यस्तीति निगद्य स्वस्थानमगमत्सुर इत्येषणासमितौ नन्दीषेणमुनिकथा ।

४ कश्चिन्मुनिर्विहरमाणः सशिष्यैरेकत्र ग्रामे समायातः । तत्र वेलाऽज्ञानात्प्रागेव प्रतिलेखनमकरोत् । तदनु समयपरिज्ञाने जाते गुरुरूचे–भो ! प्रतिलेखनवेलात्वधुना समायाता । अतः पुनः प्रतिलेखनं क्रियताम् । गुरुवचसा सर्वे तत्कर्त्तुं लग्नाः, केवलमेकः सोमिलो मुनिः कर्कशं वच उवाच–किमियतैव कालेन तत्र सर्पः प्राविशत् । प्रभाते प्रतिलेखनवेलायां सोमिलो देवमायया पात्रान्तः फणिनमपश्यत् । बिभ्यद् गुरुमुवाच–प्रभो ! पात्रान्तः सर्पो दृष्टः, गुरुरवदत्–कर्कशवचनस्य फलमेतदवेहि, पुनरीदृशं त्वया नैव वाच्यम् । इति निशम्य ‘अद्यारभ्य यावज्जीवमहं स्थास्यामि रत्नाधिकं प्रति कृताञ्जलिः’ इति गृहीताभिग्रहः सोमिलश्चारित्रं परिपाल्य बहूनि कर्माणि निर्जरयामासेति प्रतिलेखना समितौ सोमिलमुनिकथा ।

५ अथैकदा सुव्रताचार्यो लघुशिष्यं मण्डलकर्त्तुमादिशत् । स तदकुर्वन्नुवाच–किमास्ते वहिरुष्ट्रः । तदनु रात्रौ प्रस्रावं क्षेप्तुं बहिर्गतं तं

सुर उष्ट्ररूपेण भीषयामास, जगाद च रे ! गच्छेऽस्मिन्नैकोऽपि तमण्डलो मात्रादिकं प्रकुरुते । यो मण्डलं कृत्वा मात्रादिकं तस्य देवता साहाय्यं करिष्यति । इति श्रुत्वा क्षुल्लकेनापि मितौ सावधानेनाऽभावीतिपारिष्ठापनिकसमितौ क्षुल्लककथा ।

६ कायोत्सर्गे चिरं तिष्ठन्तं कौङ्कणमुनिं गुरुरपृच्छत्–इयती वेला कथमलगत् ?, सोऽवक्–अद्य जीवदयां सुचिरमध्यायम्, अतो मे विलम्बो जातः । गुरुरजल्पत्–कीदृशी जीवदयाऽचिन्ति ?, सोऽभ्यधात्–क्षेत्रे शुरालस्यातृणाद्युत्कर्त्तनं नाऽकरोच्चेद्धान्यं यथावन्नोत्पत्स्यते, ततः सपरिवारः स दुःखभाग् भविष्यति । गुरुराख्यत्–ईदृशी दया तु सावद्यैव त्वयाऽध्यायि, तदर्थं मिथ्यादुष्कृतं दीयताम्, सोऽपि दत्तवाँस्तदिति मनोगुप्तौ कौङ्कणमुनिकथा ।

७ गुणदत्तमुनिरेकदा स्वं सांसारिक्या धनवत्या मात्रा वन्दयितुं गच्छन्मार्गे चौरेण गृहीत्वा भणितः–साधो ! याहि त्वां मुञ्चामि, परममुना मार्गेणाऽऽगच्छन्तं जन्यलोकं चौरोऽस्त्यत्रेति न वक्तव्यम् । साधुरपि तथास्त्विति जल्पित्वा स्वस्थान–मागात् । तत्र निजकुटुम्बवर्गैर्वन्दितः । पुनस्तेनैव पथा जन्यैः सह समायातः । तदा ते चौरास्तानशेषाँल्लुण्टित्वा मिथो लपितुं लग्नाः–यदेष साधुः कीदृक् सत्यव्रती, स्वपरिवारमपि मन्नाम नोवाच । चौरोक्तिमाकर्ण्य साधोर्माता चेखिद्यमाना साधुं भर्त्सयन्ती जगाद–रे दुर्मते ! त्वमेनं जानन्नपि मां कथं नोवचिथ, त्वमेवाद्य दुर्धीत्वान्नः सर्वस्वमलुण्टयः । इत्थं तेषामाक्रोशेन खिद्यमानं साधुमालोक्य ते चौरा दयया सर्वेषां धनानि प्रत्यापर्यन् । ततः सर्वे चौरान् साधुञ्च स्तुवन्तः प्रमुमुदिरे । तानाक्रोशतः किमपि नाऽऽलपत्साधुरिति वचनगुप्तौ गुणदत्तमुनिकथा ।

८ अर्हन्नको मुनिर्विहरमाणः क्वचित्स्थले वहन्तं खालमा[illegible] ।
'यदेनं पादन्यासेन तरामि, तर्ह्यप्कायजीवविराधना स्यादत [illegible] पुन[illegible]
गच्छामि चेद्दूरम्' इति निश्चित्योत्पुप्लुवे । परमाज्ञाभञ्जकत्वा[illegible] पी[illegible]
देवता तदंघ्री चिच्छेद । तेन सोऽधिकं दुःखमनुभवितुं लग्नः [illegible]दीर्घ[illegible]:
वाच–त्वमिदानीमर्हतामाज्ञामभाङ्क्षीः, ईदृशस्थलेऽप्कायजीवविराधने[illegible]
साधोर्नैव लगति, तदमत्वा दुःखमन्वभूः । पुनरेवं त्वया नैव कार्यम्,'
इति कायगुप्तावर्हन्नककथा ।

क्रोधादिचतुष्कं कषायः, एते स्वपरसन्तापकाः, संसारविवर्धकाः, तपोजपसंयमादिधर्मघातकाः, दुर्गतिदायकाः, मोक्षमार्गरोधकाश्च भवन्ति । अत इमे गृहिभिः सहाऽऽहारादिव्यवहारवेलायां साधुभिः साध्वीभिश्चाऽवश्यं हातव्यः । एषां विशेषस्वरूपं दृष्टान्तेन ज्ञातव्यम् ।

क्रोधोपरि मासोपवासी साधुकथा—

(१) हस्तिकल्पनगर्यामेकः साधुः कृतमासक्षपणः पारणार्थमाहारकृते कस्यचिद्विप्रस्य मृतस्य जेमनवारस्थलमागत्य तस्थौ । सर्वे विप्राः घृतपूरकमभुञ्जत, तस्मै साधवे कोऽपि किञ्चिदपि नो ददिवान् । सकोपः साधुरुवाच–अस्मिञ्जेमनवारे मह्यं भवद्भिर्नाऽदायि चेदग्रे पुनरीदृशे भविष्यति भोज्येऽवश्यं मे देयम् । पुनरपि कोऽपि ममार, तन्निमित्तजेमनेऽपि स मुनिर्द्वितीयपारणार्थमागमत्, प्राग्वच्चिरं तस्थौ, परं कोऽपि न किञ्चिददौ । तदापि कोपाज्जगौ–पुनर्भविष्यति तृतीयमीदृशमेव जेमनं तत्रावश्यं प्रतिलाभयितव्यम् । पुनरपि तृतीयस्मिन्मृतकजेमने प्रागिव किञ्चिदप्यलब्ध्वा चतुर्थे जेमने ददितव्यमित्युवाच । तच्च केनापि वृद्धेनाऽश्रावि, स गृहपतिमवादीत्–अस्मै साधवे पर्याप्तं भोज्यं दीयतां नो चेत्पुनः कोऽपि मरिष्यति, अयमेव मुहुर्मुहुरशपत्, तेन मृत्युर्जायते । ततस्तं यथेच्छं घृतपूरकमदात् । एवमन्येन साधुना साध्व्या वा क्रोधेन भक्तादिकं नैव ग्राह्यम् ।

मानोपरि सेवइयामुनिकथा—

२) कोशलदेशे गिरिपुष्पनगरे सेवपर्वणि बहवस्तरुणमुनयः समामितेष्वेकः प्रोचे—अद्य सेवपर्वदिने तल्लब्धौ किं चित्रम् ?, यो हि घृतशर्कराभ्यां सह सेवं लात्वा सर्वान् भोजयेत, स एव लब्धिमानुच्यत । अभिमानादेको मुनिर्जगौ—श्वः कुतश्चित्सदनात्सेवमानीय सर्वान् भोजयेयं तर्ह्येव मन्नाम सत्यं ज्ञातव्यम् । प्रातःकाले च विशालपात्राणि झोलिकान्तः क्षिप्त्वा गोचर्यै चचाल । कस्यचिच्छ्रेष्ठिनः सद्मनि तल्लाभं विदित्वा तद्भार्यामयाचत—सेवं मे देहि । सा जगाद—रे ! दूरं प्रसर, इयता परिश्रमेण निष्पादितं सेवं तुभ्यं का दद्यात् ?, नैव दास्यामि । साधुनोक्तम्—रण्डे ! अवश्यमद्य त्वयि पश्यन्त्यामेव सेवमादद्याश्चेदहं सत्यसाधुर्वेदनीयः । सोवाच—यावन्मे स्थास्यति नाशिका तावत्कथमपि सेवं ग्रहीतुं नैव शक्ष्यसि । चेदद्य मद्गृहात्सेवं भवान् गृह्णीत, तर्हि मे नाशिका छिन्नैव ज्ञातव्या । ततस्तत्सदनान्निर्गत्य कमपि पप्रच्छ—कस्येदं सदनं, तत्स्वामी च कुत्र तिष्ठति ? । तेनोक्तम्—एतद् गृहपतिर्देवदत्तोऽस्ति, सोऽधुना पञ्चगोष्ठ्यां निषण्णोऽस्ति । साधुस्तत्र गत्वा जगाद—अस्यां गोष्ठ्यां देवदत्तनामा कोऽस्ति ?, देवदत्तोऽवक्—किं प्रयोजनमस्ति ?, शिष्योऽवदत्—किमपि याचितुं कामये । कश्चिदाख्यत्—स तु महाकृपणो वर्तते, कस्यापि किमपि न ददाति, तं याचित्वापि समीहितं नैव साधयिष्यसि । चेत्कमपि पञ्चं याचस्व, स ते समीहितं ददितुमर्हति । देवदत्तोऽवदत्—एतेषामुपहासं मा श्रौषीः, यदर्थयितुं कामयसे, तदर्थय दास्याम्यहम् । साधुरगदत्—षडिव चेत्स्त्रीजितो नाऽसि, तर्हि त्वां याचेय । पञ्चा अजल्पन्—तेषां षण्णां स्त्रीजितानां कथा आचक्ष्व । साधुरजल्पत्—शृण्वन्तु सर्वे । ‘ कश्चित्कुलपुत्र एकां सुरूपां कन्यामुद्वाह्य तां गृहमानीय तस्या वश्यो बभूव । प्रभाते क्षुधातुरस्तां भोजनं ययाचे । सा मञ्चस्थैव तमवदत्—बुभुक्षसे

चेच्चुल्लिकातो रक्षापसारण–गृहमार्जन–जलाहरणादिकृत्यं विधाय [illegible] प्रज्वाल्य सरसं सव्यञ्जनं भक्तादिपक्त्वा मामाकारय तदा [illegible] विष्य भोक्तुं दास्यामि । ततस्तया किङ्करीकृतः सर्वं सम्पादयितृ [illegible] प्रत्याहिकं भस्मापसारणात्तदङ्गुलीषु श्वैत्योत्पत्तेस्तं ' श्वेताङ्गुलि [illegible] नाम्ना लोका समाह्वातुं लग्नाः । देवदत्त ! त्वमप्येवमेव स्त्रिया [illegible] कृतश्चेन्नाहं किमपि याचानि । " एकं कुलपुत्रं स्त्रीवशम्वदं खट्वाऽऽ [illegible] ढैव जलाहारणादिगृहकार्यं सकलं तेन कारयित्वा प्रत्यहमपाक्षीत् । सोऽपि लोकलज्जया प्रत्यहं निशि पश्चिमयाम एवोत्थाय तटाकतो जलं लातुमलगत् । तद्भीत्या बकादि पक्षिणोऽकाल एव कूजन्तः समुड्डयि [illegible] तुमारेभिरे । ततो लोका ' अकाले कथमेतेषां बकादीनां कोलाहलः श्रूयते ?' इति गवेषयन्तः कुलपुत्रस्य स्त्रीजितस्य तत्कालिकजलानयनार्थतटाकगमनमवगत्य ' वकोड्डायी ' इति तन्नाम धृतवन्तः । " " एवं तृतीयः कश्चित्कुलपुत्रः स्त्रीनिर्जितः प्रत्यहं प्रातरुत्थाय कृताञ्जलिस्तां पृच्छति स्म–प्रेयसि ! किमादिशसि ?, साऽजल्पत्–प्रथमं गृहमार्जनादिकं कृत्वा जलादिकमानीय भोजनं पच्यताम् । सोऽपि तत्सर्वं कृत्वा पुनरूचे–मया त्वदुक्तं सर्वमकारि, अन्यदादिश्यताम् । सोवाच–भोजनस्थले गादिकां पाटलञ्च निधाय मामितः करग्राहं नीत्वा तत्राऽऽसने समुपावेश्य, भोजनञ्च परिविष्य यावदश्नामि तावन्मक्षिकापसरणं विधेहि । तदपि कृत्वा पुनरपृच्छत्–अथ किङ्करणीयम् ?। साऽवदत्–मलमूत्रयोः क्षेपः क्रियताम् । तदपि कृत्वोवाच–अग्रे किमादिशसि ? । साऽवक्–अहं शये, त्वन्मे चरणौ चम्पय । एवमकार्यमपि कुर्वतस्तस्य ' पत्नीदास ' इति नाम लोका दध्रिरे । " " एवं कश्चित्कुलपुत्रः स्त्रिया दासीकृतस्तस्या परिधानीयादिकं नित्यं क्षालयँस्तीर्थस्नाता नाम्ना लोके प्रथितोऽभवत् ।" ईदृगेव कश्चिद्वनितया दासीकृतः कुलपुत्रो ' गङ्गापरखी ' नाम्ना लोके पप्रथे । एवमेव कोऽपि कुलपुत्रः स्त्रीवश्यो

वा तदादेशेन नित्यं पुत्रं हादयति, वस्त्रादिकञ्च क्षालयति, ततएव तस्य 'हृदनीया' इति नाम धृतवन्तः ।" देवदत्त ! त्वमप्येवमेव यो नाऽसि चेत्त्वां याचेय । इत्याचक्षमाणं शिष्यं लोकाः कथितुं ...नमपि तादृशमेव जानीहि । देवदत्तेनोक्तम्—एते मामुपह- ...त, अतस्त्वं याचस्व, दास्याम्यहं तुभ्यं तदवश्यम् । साग्रहं तद्वचः श्रुत्वा शिष्यः घृतशर्करामिश्रितं सेवमयाचत । देवदत्तो जगाद्-सदनं व्रज ततः शिष्येण सह स स्वगृहं चचाल । मार्गे शिष्योऽवदत्—तव पत्नी मेऽकुप्यत्, तत्कथं दास्यसि ?, देवदत्त उवाच—मा शोचीः, ...दुपायं करिष्यामि, तावत्त्वया बहिरेव स्थातव्यम् । इति निगद्य गृहान्तरागत्य पत्नीमुवाच—मयाऽद्य ब्राह्मणो निमन्त्रितः, आयाति च सः, त्वया किमपाचि ? । साऽवक्-सेवः, श्रेष्ठी बभाषे-तर्हि तूर्णमुपरि याहि, घृतशर्करे समानय । सा निश्रेणिकोपरि चटित्वा यावद् घृतशर्करे समानयति, तावद्देवदत्तः शिष्यमाकार्य यथेष्टं सेवप्रमुखं दातुमलगत्, तदोक्तं साधुना महाभाग ! निश्रेणिकां पृथक् कुरु, ततो निश्रेणीं पृथक् कृत्वा तस्मै सेवमदात् । नीचैरागन्तुमशक्ता सोपरिस्थैवाऽऽक्रोष्टुं लग्ना-अस्मै कथं ददासि ?, अयन्तु पाषण्डी लक्ष्यते । इत्थमाक्रोशन्त्यामेव तस्यां पर्यासं गृहीत्वा निर्गच्छन् घ्राणं तेऽच्छैत्समिति घ्राणोपरि कराङ्गुलीव्यापारेण सूचयन्नुपाश्रयमागत्य समानीतं सेवादिकं सर्वान् संभोज्य कृतां प्रतिज्ञामापिपः । एवमेव सगर्वं साधुना साध्व्या वा किमपि नाऽऽदेयमिति भावः ।

मायोपरि आषाढभूतिमुनिकथा—

(२) आषाढभूतिमुनिरेकदा राजगृहनगरे गुर्वाज्ञया गोचर्यै निर्गतः कस्यचिदेकस्य नटस्याऽऽलयं प्राविक्षत् । विद्यया च रूपान्तरं कृत्वा पञ्चकृत्वस्तदोकसि गत्वा प्रतिवारं मोदकानलब्ध । तदालोकमानो नटः स्वदुहित्रो रूपलावण्यवत्योरनूढयोर्मोहपाशे तमपीपतत् । ततोऽसौ गुर्व-

न्तिकमागत्य मुन्युपकरणमशेषं गुरवे समर्प्य, मदिरामांसत्यागेन सेव्य मिति गुरुदत्तमभिगृह्य पुनस्तदोकसि स आययौ । तत्कन्याद्वयं परिणीय गृहजामाता भूत्वा नटौकसि तस्थिवान् । अनुबभूवांश्च परिणीताभ्यां सत्रा स्वैरं वैषयिकं सुखम् । तत्रैकदा कश्चिद्वैदेशिको नटः समागत्यैवमुद्घोषयत्—चेदस्ति कश्चिदत्र नाटकीविद्यायां पटीयान् मया सार्धं विवदताम् । स नटस्तमाकर्ण्य निवारितवान्, प्रेषितवांश्च राजसभायां तेन सह विवदितुं तमेव जामातरम् । तदवसरे तत्पत्न्यौ मद्यं निपीय यथेच्छं मांसं बुभुजाते । अषाढभूतिस्तु तत्र राजसदसि पश्यत्सु नृपादिदर्शकेषु विद्यायोगाल्लीलयैव वैदेशिकं तमजैषीत् । ततः नृपादिष्टः स्वौकसि समेत्य कपाटं खटखटाञ्चकार । तच्छ्रुत्वा दुर्गन्धिनाऽऽशितं मद्यं मांसं च विदित्वा वां हास्यत्यसाविति धिया ते स्त्रियौ गृहवाटके समागत्य वमितुं लग्ने । तदाऽऽषाढभूतिः कुड्योपरि चटित्वा वाटकेऽवतीर्य वान्ते मांसखण्डमुदीक्ष्य व्यरंसीत् । परन्तु श्वशुराऽऽग्रहेण तयोर्जीविकार्थं नृपान्तिकमागत्य भरतनाटकं प्रारब्धवानसौ । तस्मिंश्च भरतचक्रीव षोडशशृङ्गारसज्जितः स आदर्शभवनमागत्यैकत्वभावनां भावयन्नचिरादेव शुभध्यानमहिम्ना केवलज्ञानमाप । शासनदेवता तदैव साधुवेषं वितीर्य स्वर्णकमलाऽऽसनं विरचितवती । तत्राऽऽसीनः स धर्मदेशनां ददिवान् । तामाकर्ण्य राजा, राज्ञा, सहस्रराजकुमारैश्च सार्धं तत्पार्श्वे दीक्षां ललौ । ततोऽसौ शिष्यमण्डल्या परिवृतस्ततो विहृत्य गुरोः पार्श्वमागात् । तदा गुरुरपि भावनां भावयन् केवली जज्ञे । यथाऽऽषाढभूतिः कपटेन रूपं परावर्त्य मोदकाँल्लेभे, तथाऽन्यैः साधुभिर्मायापिण्डं नैवाऽऽदेयम् ।

लोभोपरि सिंहकेसरियासाधुकथा—

(४) अथैकदा चम्पानगर्यामुत्सवादिवसे कृतमासक्षपणः कश्चिन्मुनिः सिंहकेशरियामोदकेनैव मयाऽद्य पारयितव्यमित्यभिगृह्य तत्कृते प्रति-

भ्राम, कुत्रापि नो लेभे । आहारान्तरं लोकैर्दीयमानमपि तदास-
ग्रहीतुं नाऽशकत् । इत्थं निशार्धपर्यन्तं भ्राम्यन् काप्यलभ-
लातिक्रममजानँश्च कस्याप्येकस्य श्रावकस्यौकसि समेत्य
स्त्वित्युच्चैर्जगाद । तच्छ्रुत्वा श्रावकोऽचिन्तयत्—कोऽपि
दोषेण भ्रान्तमनाः साधुरस्ति, इति विचिन्त्य समुत्थाय तमभिवन्द्य
हातपस्विनमवगत्य व्याजह्रे—संयत ! किमपेक्षसे ?, साधुरजल्पत्—
संहकेशरियामोदकान् । श्रावकोऽवदत्–गृहे मे सन्ति भूयांसस्ते ।
युक्त्वा भृतं स्थालं समानीय यथारुच्यलाभयत् । लब्ध्वा स्वास्थ्यं
तं साधुं सोऽपृच्छत्—स्वामिन् ! पुरिमार्धप्रत्याख्यानवेलाऽजायत
वा ?, निर्मलतारागणमाकाशे विलोक्य मुनिर्धिङ्मां योऽहं निशा-
ामाहारार्थं निरगामिति भूयो भूयः स्वं निनिन्द । अयं महानर्थश्चक्रे,
ाशितो मया स्वाचारः । इत्थं भृशं पश्चात्तापं विदधत्स नगराद्बहिरा-
गत्य यथाविधि मोदकान् सञ्चूर्य कर्मणां जयः कठिनतरोऽस्ति,
मयैतदतिगर्हितं लोकद्वयविरुद्धं व्यधायि, अमुना कृत्येन धर्मस्य
महती निन्दाऽजनि । इत्यादि पश्चात्तापं वितन्वञ्छुक्लध्यानेन क्षपकश्रे-
णीमारुह्य केवलज्ञानमाप्नोत् । इत्थमन्येन साधुना साध्व्या वा लोभतः
कदाचिदाहारादिकं नैव ग्राह्यमिति भावः ।

२५ प्रावृषि संस्थितः साधुः साध्वी च निजनिवासार्थं स्थानत्रयीं रचेत् । यदेकत्र जीवोत्पत्तौ सत्यां परस्मिँस्तिष्ठेत्, तत्रैकां यत्र स्वयं तिष्ठेत्तत्स्थानं प्रत्यहं त्रिवारं प्रतिलेखयेत्प्रमार्जयेच्च । द्वे च प्रत्यहं सकृत्प्रतिलेखयेदिति वसतिप्रमार्जनविषया पञ्चविंशतितमा ।

२६ प्रावृषि स्थितः साधुः साध्वी वा कचिज्जिगमिषेत्, तर्हि तं देशं तत्स्थानञ्च गुरुमुक्त्वा तदादेशं लात्वा गन्तुमर्हति । प्रावृषि साधवः साध्व्यो वा विशेषं तपो विदधानाः क्षीणा भवन्ति, अतो गुरुमुक्त्वैव

गन्तुमर्हति क्वापि गतस्य क्वचित्प्रतिबन्धे जाते गुर्वादिः कालविलम्बा
तद्विदित्वा कमपि तद्गवेषणाय प्रेषयेत्तेन गुरुमुक्त्वैव गन्तुं
नान्यथेति संसूचितगमनविषया षड्विंशतितमा ।

२७ प्रावृषि साधूनां साध्वीनाश्चौषधाद्यर्थं वैद्यपार्श्वं चतुष्प
जनान्तं गमनं कल्पते, परन्तु तद्दिन एव सूर्यास्तकालतः प्रागेव स्वे
स्थानमागच्छेत्तत्र तु नैव तिष्ठेत् । स्वस्थानं पुनरागन्तुं नो शक्नुयाच्चे
न्नगराद्बहिरागत्य तिष्ठेत्, तत्रापि नार्हेदागन्तुं तर्हि मार्गमध्ये तां निश
गमयेत्, इति भैषजाद्यर्थ-गमाऽऽगमविषया सप्तविंशतितमा ।

२८ इत्थं स्थविरकल्पिनो भगवदुक्त-रत्नत्रयीमार्गं भजेरन्
मनसा वचसा कायेन च निरतिचारं संयमं परिपालयेयुः । इत्थमेव
यावज्जीवमाराध्य लोके कीर्त्तिमण्डितात्मानः कियन्तो निर्ग्रन्थाः श्रमणाः
क्षपितकर्माणस्तद्भव एव मोक्षमधिगच्छन्ति, कियन्तस्तृतीयस्मिन्भवे
सर्वदुःखैर्मोच्यन्ते, कियन्तश्च सप्ताष्टमभवे, ततोऽधिकन्तु नैव द्रक्ष्य-
न्तीति मर्यादापालनफलविषयाऽष्टाविंशतितमा ।

एवं राजगृहनगराऽऽसन्ने गुणशैलाऽऽख्ययक्षचैत्ये बहुसाधु-साध्वी-
श्रावक-श्राविका-देव-देवीवृन्दपरिमण्डितमहासभायामासीनो भगवा-
न्महावीरप्रभुः पर्युषणकल्पमेतदध्ययनं सप्रयोजनम्, 'गुरूनापृच्छय
सर्वं कर्त्तव्यं यदाचार्याः प्रत्यपायं जानन्ति' इत्यादिहेतुसहितम्,
'अंतरा वि य से कप्पइ' इत्याद्यपवादयुक्तम्, सूत्रार्थेन तदुभयेन च
संयुक्तम्, व्याकरणयुतश्च वारम्वारमाख्यातवान्, प्ररूपितवानेवं फल-
कथनरूपेण, संक्रामितवांश्च समस्तश्रोतृवृन्दहृदयसदने । एतत्सक-
लापि वाचना सुधर्मजम्बूस्वामिनोरेवाऽस्ति । तत एतद्दशाश्रुतस्कन्धसू-
त्रीयाऽष्टमाध्ययनरूपेण भद्रबाहुस्वामी स्वशिष्यान् प्रत्याचष्ट ।

# अथ टीकाकारस्य प्रशस्तिः ।

[illegible]पुब्रह्मचारी चरमजिनपतेः शासनेऽतीवधुर्यो,
[illegible]ूत्वा सौधर्मवंशेऽभवदयमनघः सर्वशास्त्रे पटीयान् ।
[illegible]पट्टे वीराब्धिषष्ठीप्रमित इह महान् रत्नसूरिः सुविद्वान्,
क्षान्त्या दान्त्या च शोभां दधदवनितलख्यातसत्कीर्त्तिमाली ॥१॥

अध्यास्त तत्पट्टमनल्पतेजा, ज्ञानी क्षमी संयमवर्धमानः ।
वृद्धक्षमासूरिरितीवविद्वान्, आजन्मवृद्ध्याऽऽम्लव्रतं करिष्णुः ॥ २ ॥

तदीयपट्टं समलञ्चकार, देवेन्द्रसूरिः कमनीयकीर्त्तिः ।
सुदुष्कराऽनेकतपोविधाता, पोपूज्यमानो जनताभिरेषः ॥ ३ ॥

एतस्य पट्टे गणितप्रवेदी, नैमित्तिकश्चाऽभवदद्वितीयः ।
कल्याणसूरिर्गुणरत्नमाली, विश्वोपकारार्थमबद्धचारी ॥ ४ ॥

कुशाग्रधीर्विप्रकुलप्रसूतः, सुसंयमी पूर्णसमाधियोगः ।
प्रमोदसूरिः प्रतिवाक्यमोदी, बभूव तत्पट्टमलङ्करिष्णुः ॥ ५ ॥

तत्पट्ट आसीन इमामुदारां, वेदेषु[१९५४]नन्दाऽवनिसंमिताऽब्दे ।
क्रियासमुद्धारकरः सुखेन, राजेन्द्रसूरी रचयाञ्चकार ॥ ६ ॥

इतिश्रीसकलजैनागमपारदृश्व–श्रीवीरजिनप्रवचनस्फारशृङ्गारहार—सुविहितसूरिशक्रचक्रपुरन्दरनन्दनवनाऽऽरामविहारि–शिथिलाचारप्रचारतमोहारि–परमयोगिराज--कलिकालसर्वज्ञकल्प—जगत्पूज्यशासनसम्राट्–गुरुदेव–श्रीमद्विजयराजेन्द्रसूरीश्वरमहाराजसुरचिता–'श्रीकल्पसूत्रार्थप्रबोधिनी' नाम्नी कल्पसूत्रस्य टीका समाप्ता ।